THE

HARIDAS SANSKRIT SERIES

78



# THE RASENDRA SĀRA SAMGRAHA

OF

## S'RĪ GOPĀLA KṚS'NA

WITH AUTHOR'S BALABODHINI (Notes)

*Edited*

**WITH THE BHAGĪRATHI NOTES**

*Introduction, Index etc.,*

BY

SĀHITYA-ĀYURVEDĀCHĀRYA

Pandit S'rī TARADATTA PANTA

VYĀKARAṆATIRTHA & DARS'ANA SĀS'TRI

PUBLISHED BY

JAYA KRISHNA DÂS HARI DÂS GUPTA

*The Chowkhambâ Sanskrit Series Office.*

Benares City.

1938

→ हरिदास-संस्कृत-ग्रन्थमाला ←

७८

सचित्रः

श्रीगोपालकृष्ण सङ्कलितो

# रसेन्द्रसारसंग्रहः

ग्रन्थकृद्रचितया बालबोधिनी टिप्पण्या सहितः

साहित्यायुर्वेदाचार्य–व्याकरणतीर्थ–दर्शनशास्त्रिणा

पण्डित तारादत्तपन्तेन

भागीरथ्या टिप्पण्या विभूषिता संशोधिता च ।

प्राप्तिस्थानम्—

जयकृष्णदास–हरिदास गुप्तः–

चौखम्बा संस्कृत सीरिज़ आफिस

विद्याविलास प्रेस, बनारस सिटी ।

१९९१

# आवश्यकी भूमिका।

पुरा खलु सत्ययुगे जलप्लवनिर्गमानन्तरं नूतनायां रसायां रसस्य (पारदस्य) प्रायः सर्वत्र विद्यमानतया विशिष्टरसवत्य एव ओषधयः समभूवन्। यः खलु रसः हरीक्यामलकविभीतकहरिद्रादिषु चाकचक्य-जनकोऽधु नापि कुट्टितेषु जलेप्रक्षिप्तेषु दृश्यते, स रसः-पूर्णया मात्रया आसीत्तदानीम्।

अत एव तेषां 'रसायन' सञ्ज्ञा, रसस्थानत्वाद्, रसमार्गत्वाद्, अन्नरसानुकूलतया स्त्रोतःशोधनशमनादिगुणविशिष्टतया—अन्वर्थेयं, संज्ञा स च रसश्चतुरशीतिषु—आसवद्रव्येषु—विशिष्ट उपलभ्यते। अतः सूक्ष्मतया ओषधिषु व्याप्तोरसः। एवमुपरसाः, धातव, उपधात वश्च व्याप्ता-उत्पद्यन्ते शरीरेचौषधिषुच। अतःसमानगुणवत्वादुपकार्यो-पकारकभावः शरीरस्थ—द्रव्यस्थानां रसादीनाम्।

तत्र स्वशरीरस्थरसादीनां संरक्षणार्थम्-'आचाररसायनम्' यत्-परिपालनार्थं साङ्गोपाङ्गानां चतुवर्गप्रतिपादकानां तन्त्राणां स-सन्नाह-मुपदेशः। विधिवत्परिपालिते—त्वाचाररसायने नोत्पद्यन्तेरोगाः उत्प-न्नाश्च सद्यो विलीयन्ते मणिमन्त्रौषधिजपतपःप्रभृतिभिः।

हीनेत्वाचाररसायने—हरीतक्यामलक—भल्लातकादि-रसायनमुपदिष्टं मुनिभिः। हरीतकीसेवने हि रोगेभ्यो भयन्नभवति, अपथ्यमपि पथ्यं संपद्यते, व्यथितेपि शरीरे व्यथा निवर्त्तते,-स्वयं कायस्था सती कायग्निं वर्द्धयति, पावयति पवनमपानम्, अमृतीकरोति भुक्तं-भोजनजातम्।

सेयं हैमवती सर्वगुणसपन्ना यथार्थनामधेया प्रथममुपदिष्टा

चरकादिषु रसायनपादेषु । एवमामलकादीनि–यथागुणं विधीयन्ते पूर्णगुणवन्ति, 'स्वस्थस्य स्वास्थ्यरक्षार्थम्' हि रसायनम् ।

यथाऽमरणाममृतं, यथा भोगवतां सुधा ।
तथाऽभवन्महर्षीणां रसायनविधिः पुरा ॥
न जरां नच दौर्बल्यं नाऽतुर्य्यं निधनं न च ।
जग्मुर्वर्षसहस्राणि रसायनपराः पुरा ॥

कालक्रमेण जनपदोद्ध्वंसोक्तन्यायेन मनुष्याणामालस्यादिना लोभादिना च शारीराणां मानसानाञ्च विकाराणामुत्पत्तौ आतुरहितानि किरात–कुटज–पाठादीनि मुनिभिः प्रयुक्तानि । तदा रोगाः परिमिता ज्वरादयः, पदार्था रसवीर्यविपाकशक्त्यादिपरिपूर्णा आसन् , शीला-चारपथ्याऽपथ्यविवेकप्रियाश्च नराः ।

पुनश्च—प्रखरैःप्रभाकरकरैः पचण्डैः पवननिवहैः हीतसारे विश्वभरापिण्डे·हीनगुणेषु तरुगुल्मलताक्षुपतृण·रूपेषु द्रव्यगणेषु तेषां वलप्रचयार्थं धातूनांगैरिकादीनामुपयोगः साहाय्यार्थं कृतोमुनिभिः । पुनश्च·गन्धक हरितालमनःशिलादीमुपरसानामुपयोगः सूचितः काष्ठौ-षधिवलवर्द्धनाय—यथा—'वचा हरेणुस्त्रिवृता निकुम्भो, भल्लातकं गैरिकमञ्जनञ्च', इत्यत्र पञ्चसु काष्ठौषधिषु सत्सु गैरिकाञ्जने योगं पोषयतः ।

पुनश्च—मनःशिलाऽऽले, गृहधूम एला ।
काशीस, लोध्राऽर्जुन, मुस्त, सर्ज्जाः' ॥ इत्यास्मिन्योगे

मनःशिला, हरिताल, काशीसानामुपरसानां प्राधान्यं प्रतीयते पूर्वप्रयोगात् , सत्स्वपि पञ्चसु काष्ठौषधिषु, गृहधूमो मध्यस्थः ।

एवं रसायनेषु—षष्ठे योगे–'आमलकचूर्णम्-अयश्चूर्णचतुर्भाग-संप्रयुक्तम्, इति लौहरसप्रयोगः सहायकत्वेनोपन्यस्तः ।

'त्रिफलाया रसे मूत्रे गवां क्षारे च लावणे,
क्रमेणचेङ्गुदीक्षारे किंशुकक्षार एव च।
तीक्ष्णायसस्य पत्राणि वह्निवर्णानि साधयेत्। च०
ज्ञात्वा तान्यञ्जनाऽभानि सूक्ष्मचूर्णानि कारयेत्' ॥

इत्यादिना लोहशोधनपूर्वकं लौहरसायनं साधयित्वा—

एष एव च लौहानां प्रयोगः संप्रकीर्त्तितः, इत्यनेन स्वर्णादिशीसकपर्यन्तानां लोहपदवाच्यानामष्टानां रसायननिर्देशः प्रक्रियावोधनाय कृतः। एवं शिलाजतु रसायनम्। पुनश्च-चिकित्सिते-मणिमुक्ताप्रवालानामित्यादिना रत्नानामपि प्रयोगोजायुत्वेन सूचितः।

प्राधान्यन्तु मुनिभिः सात्म्यानां घृततैलादिनामेव स्थापितम्, जायूनां तत्संस्कारकत्वमात्रम् सर्वेषु रोगेषु तेषामेवाधिकसंख्यावत्त्वेन दर्शनान्, अन्ततो जीर्णज्वरेऽपि ज्वरघ्नौषधि-सिद्धस्य घृतस्यैव तत्प्रतिकारक्षमत्वदर्शनात्। सेयं कायचिकित्सा—प्रक्रिया—निर्भया, पुण्या सर्वसुलभा आयुष्या निःशङ्का अतियोगे हीनयोगेपि।

यदा खलु पृथिव्यादीनामतीव गुणह्रासात्—ओषधयो हीनगुणाः, नरास्तु—शास्त्रानभ्यासात् आचारत्यागात् भक्ष्याऽभक्ष्यविवेकाभावात् कष्टसाध्यरोगविशिष्टा भवन्तोऽदृश्यन्त तदा—भैरवोपासकैर्नागार्जुन-सोमदेव-गगनानन्द-सिद्धनाथ—चन्द्रनाथ—नित्यनाथादिभिः, सिद्धैः, आर्षसंहितासु शैवागमग्रन्थेषु—पुराणेषु चाऽग्नेयादिषु-संक्षेपत उपदिष्टा उपरसप्रयोगा, रोगनाशाय रणाङ्गणे भटा इव प्रयुक्ताः।

यदा तेऽपि याप्यान्-असाध्याश्च रोगप्रतिवीरान् विजेतुं न पारयामासुः, तदा जरामारणायोरपि विजेता 'रसराजः' स्वयमवतीर्यो रामइव रोगराक्षसगणविजयाय 'रसार्णवात्'।। तदिदं संवृत्तं रसेन्द्रतन्त्रम्' तस्य प्रणेतारः पूर्वोक्ता नागार्जुनादयः, अथ च-नारदः-

धन्वन्तरिः चरकः, शिवः भैरवः, स्वच्छन्दभैरवः, अगस्त्यः, वासुदेवः, विष्णुः, रुद्रः, इत्यादयः स्थलेषु२ अस्मिन्नेव ग्रन्थे निर्दिष्टाः—उपलभ्यन्ते ।

येषां ग्रन्थान् सम्यगालोच्य श्रीगोपालकृष्णेन-अयं सर्वसुलभः संग्रहः रसेन्द्रसारनाम्ना सर्वोपकाराय संकलितः, विषमस्थलेषु स्वयमेव टिप्पणीच योजिता, तेनैव ।

तदिदं ग्रन्थरत्नं लेखकानां, पाठकानां, संशोधकानां वा दोषात् विदुषामनिरीक्षणाद्वा स्वयं दुष्टानां रसानां धातूनां विषाणां च संशोधकमपि स्वयंवर्णतः, मात्रातः, लिङ्गतो, विभक्तितो, वचनतः प्रकृतितः प्रत्ययतश्च संशोधनार्हमेव लक्ष्यते ।

छन्दोभङ्गभयन्तु—'रससिन्दुरम्'—इत्यादौ दर्शितम् । कुत्रापि दीर्घछन्दोऽनुरोधात्कृतः, कुत्रचिद्विजातीया उपजातय उपन्यस्तता । गोपालकृष्णेन बहुषु स्थलेषु छान्दसत्वात्समाहितम्, स्वयमपि—छानयित्वा, ढालयेत् इत्यादिप्रयोगाः प्रयुक्ताः, मूलेऽऽपि ढालयेदिति दृश्यते, न सन्ति तादृशा धातवो येन तादृशाः प्रयोगाः सिद्ध्येयुः । पञ्चविंशत्, इत्यपि मूले दृश्यते—'कटोरायाम्' इति ॥ तु रसार्णवेऽपि । किंवहुना—वहवः शोधनहीनाः शब्दाः यत्र तत्र आसन् । यथासंभवं संशोधिताः । वहुषुस्थलेषु—भिषग्भिर्यथाऽभ्यस्ता तथैव त्यक्ता—यथा—लोहशब्दः सर्वत्र-अण्प्रत्ययान्त एव पठितः, तत्र धातुवाचकस्थले लोहएवेलौहः प्रज्ञादिभ्यश्चेति स्वार्थिके-अणि समाधेयम्, चूर्णेवा भस्मनिवा वाच्ये भवे, जाते, आगते विकारे वा-अणि साधनीयम् सिद्धस्य गतिश्चिन्तनीयेति न्यायात् । वाक्याऽशुद्धिरपि यत्र तत्र दृश्यते—यथा मावयेत्—इति सकर्मिकयाक्रियया संबद्धानि कानिचित्पदानि प्रथमान्तान्यपि दृश्यन्ते । सर्वथा

भिषग्वरैर्यथाभ्यस्ताः शब्दाः तथा तिष्ठन्तु परन्तु, न कदाचिदपि बोधयन्तु—अपदार्थम्—यया क्षुद्रशङ्खशब्दस्य शुद्रशङ्खः-खुद्रशङ्खः, इत्यादिकं, यत्किञ्चिदुच्चारणं कुर्वन्तु नाम शम्बूकं न विस्मरन्तु—इत्येवास्माकमनुनयः ।

परन्तु एतादृशस्य माननीयस्य प्रचलितस्य सर्वरसोपरसशोधन-विधिबोधकस्य ग्रन्थस्य पिचण्डे गुल्मप्राया अशुद्धिग्रन्थयो न तिष्ठन्तु-इत्याशया संशोधनप्रवृत्तेनापि न पारितं सर्वथा संशोधनाय–ग्रन्थस्य, मुद्रणयन्त्रणानियन्त्रितत्वात् । तथापि–सर्वेभ्यो मुद्रितपुस्तकेभ्यः—शुद्धतरं दृष्टिगोचरं भवतु भवताम् ।

यथासंभवं यत्र तत्र टिप्पण्यां समाहितमपि दृष्टिपथमवतरिष्य-त्येवगुणग्राहिणां भवताम् । आदौ—विषयसूचिकया, औषधमात्रा-सहितया, सलक्षणैः—यन्त्रचित्रैश्च, अन्तेच शुद्धिपत्रेण, संयोजितं भवतां सौकर्यायेति । तदिदं ग्रन्थरत्नं मुद्रयते चौखम्बासंस्कृतपुस्त-कालयाऽध्यक्षाय साशीर्वादा धन्यवादाः प्रदीयन्ते ।

समर्प्यते चायं ग्रन्थो भारतीयाय वैद्यसम्मेलनाय समालोचितुं यदिसम्मेलनं सम्मन्वतां द्वितीयावृत्तौ सर्वथा–संशोधनाय, यत्नः करिष्यते—यथा खलु–प्राणाभिसर–शाब्दिकाग्रसर–संवादेन समुद्धृतं ग्रन्थरत्नं निर्भ्रान्तं पठनपाठनयोग्यं भवेदिति प्रार्थये—

विदुषांविधेयः, भिषजांरक्षणीयः—

**श्रीतारादत्तपन्तः ।**

# सूचीपत्रम्

## प्रथमोऽध्यायः ।

## द्वितीयोऽध्यायः ।

### विरेकाधिकारः ।



### ज्वर-चिकित्सा ।

## अर्शः-चिकित्सा ।

## अजीर्ण-चिकित्सा ।

विषयाः पृष्ठाङ्काः

अत्र यन्मात्रामानं लिखितं तत् पुस्तकोक्त मात्रातोन्यूनं देश-कालभेदेन वर्तमानवैद्यसंप्रदायानुसृतम्–सर्वत्र मात्रा तु–प्राणाभिसरैः कल्पनीया, इति, दिग्दर्शनमिदम् ।

विबध्य सौषधं सूतं सभूर्जे त्रिगुणाम्बरे ।
रसपोट्टलिकां काष्ठे दृढं बद्ध्वा गुणेन हि ॥
सन्धानपूर्णकुम्भान्तः प्रलम्बनगातिस्थिताम् ।
अधस्ताज्ज्वलयेदग्निं तत्तदुक्तक्रमेण हि ॥

दोलायन्त्रमिदप्रोक्तम् । रसेन्द्रचूडामणिः ।

१ दोलायन्त्रम—

अस्मिन् यन्त्रे—मृण्मयहण्डिकायां, मध्ये लम्बमाना द्रवद्रव्ये मग्ना तिर्य्यक्काष्ठे बद्धा रसपोट्टलिका दृश्यते, हण्डिका-तले, वह्निज्वालाजिह्वा, चुल्ली तले स्थूलानि पञ्च काष्ठानि दृश्यन्ते ।

---

१ ज्वलदीप्तौ वटादिः 'मितां ह्रस्वः' इतिह्रस्वः ।

सरसां गूढवक्त्रां मृद्-वस्त्राऽङ्गुल-घनावृताम् ।
शोषितां काचकलशीं, त्रिपु भागेषु पूरयेत् ॥
भाण्डे वितस्तिगम्भीरे, बालुकासु प्रतिष्ठितम् ।
तद्भाण्डं पूरयेत् त्रिभिरन्याभिरवगुण्ठयेत् ॥
भाण्डवक्त्रं मणिकया सन्धिं लिम्पेन्मृदा पचेत् ।
चुल्यां, तृणस्य चादाहान्मणिका पृष्ठवर्त्तिनः ॥
एतद्धि वालुका यन्त्रम्,—………………………
एवं लवणनिक्षेपात् प्रोक्तं लवणयन्त्रकम् ॥

रसरत्नसमुच्चयः ।

## २ वालुकायन्त्रम्, लवणयन्त्रञ्च—

अत्र मणिके मृद्-वस्त्रैरङ्गुलस्थूलं यथास्यात्तथा वेष्टिता रसेन त्रिभागपूरिता वालुकामध्यस्था काचकूपी (आतसशिशी) *

*दृश्यते, मणिकमुखे, पिधानार्थं मणिका दृश्यते, तत्र च तृणानि, शेषं पूर्ववत् । "अलिञ्जरः स्यान्मणिकः, मणिका तत्पिधानिका"

यन्त्रं डमरुवद् वाऽथ, वाऽधः पातनयन्त्रवत् ।
भूगर्त्ते तत्समाधाय चोर्द्ध्वमाकीर्य वह्निना ।
अधःस्थाल्यां जलं क्षिप्त्वा, सूतकं तत्र पातयेत् ।
एतद् भूधरयन्त्रं स्याद्, सूत-संस्कार-कर्मणि ।

अत्रिसंहितायाम् ।

तन्त्रान्तरेऽस्य-'अधःपातनयन्त्र'-सञ्ज्ञाऽस्ति ।

## ३ भूधरयन्त्रम्--

अत्र उर्द्ध्वाऽधोमुखं हण्डिकाद्वयं, रुद्ध-संन्धि दृश्यते उपरितनायां हण्डिकायामन्तः निम्बुरसपिष्ठ-हिङ्गुलस्य काष्ठौषधि-स्वरसापिष्टपारदस्य वा लेपो वोध्यः । अधस्तनी हण्डिका जलपूर्णा भूगर्तप्रविष्टा दृश्यत एव ।

क्षिपेद्रसं घटे दीर्घ-नताऽधोनालसंयुते ।
तन्नालं निक्षिपेदन्य-घटेकुक्ष्यन्तरे खलु ॥
तत्र रुद्ध्वा मृदा सम्यग् वदने घटयोरथ ।
अधस्ताद्रसकुम्भस्य ज्वलयेत्तीव्रपावकम् ॥
इतरस्मिन् घटे तोयं प्रक्षिपेत्स्वादुशीतलम् ।
तिर्य्यक्पातनयन्त्रं हि वार्तिकैरभिधीयते ॥

रसेन्द्रचूडामणिः ।

## ४ तिर्य्यक्पातनयन्त्रम् ।

अत्र चुल्युपरि धृतघटस्य मध्ये धृतो पारदः,
अधस्तात्प्रज्वलिताऽग्नितापतप्तः सन् कण्ठोदर-
मध्यनिविष्टया नलिकया शीतलजलवति द्वितीयघटे
प्रविशति घटमुखे नलिकाद्वारे च रुद्धे दृश्येते ।
द्वितीयनलिका च पुनः शीतजलपातनार्था ।

अष्टाङ्गुलपरीणाह, मायामेन दशाङ्गुलम् ।
चतुरङ्गुलकोत्सेधं तोयाधारं गलादधः ।
अधो भाण्डमुखं तस्य भाण्डस्योपरि वर्त्तिनः ।
षोडशाङ्गुलविस्तीर्ण-पृष्ठस्यास्ये प्रवेशयेत् ॥
पार्श्वयोर्महिषी-क्षीरचूर्णमण्डूरफाणितैः ।
लिप्त्वा विशोषयेत्सन्धिं जलाधारे जलं क्षिपेत् ।
चुल्ल्यामारोपयेदेतत्, पातनायन्त्रमीरितम् ।

## ५ ऊर्द्ध्वपातनार्थं 'पातना' यन्त्रम् ।

अत्र अधःस्थितं मृण्मयभाण्डं स्वादुशीतलजलपूर्णम् ।
उपरितनं विस्तृतगर्भं पारदापिष्टलिप्तम् ।
महिषीक्षीरमण्डूरचूर्णेन लिप्तः सन्धिः ।

उपर्य्यधस्तनस्थाल्यां क्षिपेदन्यामधोमुखीम् ।
स्थालिकां चिपटीभूत-तलान्तर्लिप्तपारदाम् ।
क्षिप्त्वा तां पङ्किले गर्त्ते ज्वलयेन् मूर्ध्नि पावकम् ।
अधःपातनयन्त्रं हि तदेतत्परिकीर्त्तितम् ॥

रसरत्नसमुच्चयः ।

## ६ अधःपातनयन्त्रम् ।

अत्राऽधस्तनी हण्डिका पङ्किले गर्त्ते जलपूर्णा,
उपरितनी हण्डिका पारदलिप्त-गर्भा अधोमुखी ।
सन्धिबन्धनम्, उपरिवन्योपल-प्रज्वलनञ्च, दृश्यत एव ।

---

१ घटादिः, मितां ह्रस्वः

अधःस्थाल्यां रसं क्षिप्त्वा निदध्यात्तन्मुखोपरि ।
स्थालीमूर्ध्वमुखीं सम्यङ्ग् निरुध्य मृदुमृत्स्नया ॥
ऊर्ध्वस्थाल्यां जलं क्षिप्त्वा चुल्यामारोप्य यत्नतः ।
अधस्ताज्ज्वलयेदग्निं यावत्प्रहरपञ्चकम् ।
स्वाङ्गशीतं ततो यन्त्राद् गृह्णीयाद्रसमुत्तमम् ।
विद्याधराऽभिधं यन्त्रमेतत् तज्ज्ञैरुदाहृतम् । भावप्रकाशः ।

## ७ विद्याधरयन्त्रम् ( उर्द्ध्वपातनार्थम् )

+ पूरयेत् संधिबन्धनं शोषणञ्च प्रागेव कर्त्तव्यम् ।
उष्णजलनिष्काशनं शीतलजलपूरणं च पुनः २ कार्यम् ।

अत्र चुल्ल्युपरि स्थितायां हण्डिकायामशुद्धपारदम्
१निक्षिप्य. तदुपरिस्थितायां हण्डिकायां शीतं जलं +

---

१ मितांहूस्वः ।

स्थूलस्थाल्यां द्रवं क्षिप्त्वा वासोबद्ध्वा मुखे दृढम् ।
तत्र स्वेद्यं विनिक्षिप्य पिधान्या प्रपिधायच ॥
अधोऽग्निं ज्वलयेत्तत्र तत्स्यात्कन्दुकयन्त्रकम् ।
स्वेदनं यन्त्रमित्येतत् प्राहुरन्ये मनीषिणः ॥
अथवा–स्थूलस्थाल्यां जलं क्षिप्त्वा, तृणं दत्वा, तृणोपरि ।
स्वेद्यद्रव्यं विनिक्षिप्य पिधान्या प्रपिधाय च ।
अधस्ताज्ज्वलयेदग्नि, मेतद्वा कन्दुयन्त्रकम् ।

रसेन्द्रचूडामणिः ।

## ८ स्वेदन (कन्दुक) यन्त्रम्

× हण्डिका, तस्या मुखं शुक्लवस्त्रेणाऽऽवृतं, वस्त्रोपरि स्वेद्यस्य पोट्टलिका, पिधान्या–हण्डिकया पिहिता दृश्यते ।

अत्र चुल्ल्युपरि जलपूर्णा, काञ्जिकादिद्रवपूर्णा, वा ×

विधायाऽष्टाङ्गुलं पात्रं लौहमष्टाङ्गुलोच्छ्रयम् ।
कण्ठाधोद्ध्यङ्गुले देशे गलाऽऽधारे हि तत्र च ॥
तिर्यक् लौहशलाकाश्च तन्वीस्तिर्यग् विनिक्षिपेत् ।
तनूनि स्वर्णपत्राणि तासामुपरि विन्यसेत् ॥
पत्राधो निक्षिपेद् धूमं वक्ष्यमाणमिहैव हि ।
तत्पात्रं न्युब्जपात्रेण छादयेदपरेण हि ॥
मृदा विलिप्य सन्धिञ्च वह्निं प्रज्ज्वलयेदधः ।
तेन पत्राणि कृत्स्नानि हतान्युक्तविधानतः ॥*

## ६ धूपयन्त्रम्

*रसश्चरति वेगेन, द्रुतं गर्भे द्रवन्ति च ।
गन्धाऽऽलक-शिलानां हि कज्जल्या वा मृताऽहिना ।
धूपनं स्वर्णपत्राणां प्रथमं परिकीर्त्तितम् ।
तारार्थं तारपत्राणि मृतवङ्गेन धूपयेत् ।+

+धूपयेच्च यथायोग्यै रन्यैरुपरसैरपि ।
धूपयन्त्रमिदं प्रोक्तं जारणा-द्रव्यसाधने ॥ रसरत्नसमुच्चयः,
अत्राऽष्टाङ्गुलपरिणाहोच्छ्राये लौहपात्रे गन्धकादिभिःकृताकज्जली । × (पृ.१०)

१ रसः पारदः चरति=भक्षयति, स्वास्मिन् समावेशयतीत्यर्थः ।

(पृ.९) × नागभस्म वा निक्षिप्य कण्टकवेध्यानि शुद्ध सुवर्ण पत्राणि स्थापितानि,समान-पात्रेण पिहितानि, डमरूवत् ।

---

अजाशकृत् तुषश्चाग्निं भूगर्त्ते त्रितयं क्षिपेत् ।
तस्योपरिस्थितः खल्लः, तप्तखल्ल—इति स्मृतः ।
अत्रिसंहितायाम्

१० तप्तखल्लयन्त्रम् ।

भूमौ गर्त्ते कृत्वा तस्मिन्-अजाशकृत् तुषश्च
धृत्वा वह्निं प्रज्वलय्य, तदुपरिलौहखल्लं स्थापयेत् ।
रसादीनां संशोधने ऽयं तप्तखल्लः स्मृतः ।

षोडशाङ्गुलविस्तीर्णं हस्तमात्रायतं समम् ।
धातुसत्वनिपातार्थं कौष्ठिकं परिकीर्त्तितम् ॥
परिपूर्णं दृढाङ्गारैरधोवातेन कोष्ठके ।
मात्रया जालमार्गेण ज्वलयेच्च हुताशनम् ॥ अत्रिसंहितायाम् ।

११ कौष्ठिकयन्त्रम् ।
( सत्वनिपातनार्थम् )

अत्र कोष्ठमध्ये सत्वपातनार्थं द्रव्य—संभृतं वहि-
रङ्गारैर्ज्वलद्भिः परितोवेष्टितम्, अधोमुखं लोहपात्रम्,
तस्याऽधस्तात्, सत्वधारणार्थमूर्द्धमुखं समानं लोहपात्रम् ।
पवनसमीरणार्थं हस्तगृहीता भस्त्राच दृश्यते ।

---

१ मिता ह्रस्वः ।

# रसेन्द्रसारसंग्रह—

## गूढार्थसन्दीपिकासंस्कृतव्याख्यासहित ।

जगदीश्वर की अनुपम अनुकम्पा से सर्वत्र प्रचलित प्राचीन ग्रन्थ रसेन्द्रसारसंग्रह की विशद तथा सरल संस्कृत टीका विशेष कर विद्यार्थियों के लिये अधिक उपयोगी तैयार हो गई, अर्थात् मैंने— व्याकरण—साहित्य—दर्शनादिक के विद्वान् तथा काशी हिन्दू यूनिवर्सिटी से रसायन भौतिक वनस्पति और जीवशास्त्र एवम् आयुर्वेद और डाक्टरी में परमनिष्णात तथा हिन्दी और संस्कृत की प्रतियोगिताओं में श्री पूजनीय कुलपति पं० श्रीमदनमोहन मालवीयजी सरीखे पूज्यविद्वानों से स्वर्णपदक, रजतपदक आदि प्राप्त आयुर्वेदाचार्य पं० श्री अम्बिकादत्तशास्त्री जी के द्वारा उक्त ग्रन्थ की **गूढार्थ-सन्दीपिका** नामक अत्यन्त सरल संस्कृत में विस्तृत व्याख्या कराकर मुद्रित किया है। उक्त व्याख्या से यह ग्रन्थ आजकल के वैज्ञानिक ढङ्ग का अनुपम हो गया है। केवल इसी एक ग्रन्थ के पास में रखने से सम्पूर्ण रसग्रन्थों का ज्ञान प्राप्त हो सकता है। रोगों का एवम् पथ्यापथ्य आदि का भी इसमें उल्लेख करा दिया गया है अन्त में ओषधियों के अनेक भाषा आदिकों के नाम तथा अन्यान्य उपयोगी विषयों को देकर इस संस्करण को सर्वोत्तम रसचिकित्सोप-योगी बना दिया गया है जिसे पाठक जन स्वयं देखकर जान लेवेंगे। विशेष लिखना लेख का कलेवर मात्र बढ़ाना है अत एव अन्त मे इतना ही कहना है कि उक्त शास्त्रीजी ने प्राच्य पाश्चात्य चिकित्सा विज्ञान के अन्दर तपश्चर्यापूर्वक घोर परिश्रम करने के पश्चात् समस्त रस शास्त्ररूपी समुद्र का मन्थन करके निकाली हुई रत्नरूपी अपनी टीका से इस ग्रन्थ को अमूल्य सर्वोत्तम बना दिया है।

प्रचारार्थ मनोहर कपड़े की जील्द का लागतमात्र मूल्य ३) है।

---

**प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस ।**

छप गये ! सुलभ !! सस्ते संस्करण !!!

१. भावप्रकाश मूल पूर्वार्द्ध-निघण्टुप्रकरण पर निघण्टु-सारसंग्रह-नामक परीक्षोपयोगी विस्तृत विवरण सहित। रु० २—४

२. भावप्रकाश मूल संपूर्ण-निघण्टुसारसंग्रह सहित रु० ४—१२

३. निघण्टुसारसंग्रहः (तदनुरूपबहुविषयपरिष्कृतो-भावप्रकाशस्थनिघण्टु-परिशिष्टरूपः) रु० १—०

आयुर्वेदप्रेमियों के सौकर्यार्थ मैंने निघण्टु के जिज्ञासुजनों के लिये "निघण्टुसारसंग्रह" नामक ग्रन्थ भिषग्रत्न पं० श्रीब्रह्मशङ्करजी मिश्र से प्रार्थना करके तैयार कराया है। यह ग्रन्थ भावप्रकाश निघण्टुभाग हरीतक्यादि वर्गादिक के क्रमको लेकर उसी की अपूर्णता को पूर्ण करने के लिये बनाया गया है। भावप्रकाश निघण्टु ही सबसे अधिक प्रचलित है अतः उसी को इसमें प्रधान माना गया है। अत एव इसमें जिनके गुणादिक निघण्टु में नहीं हैं उनके अनेक भाषाओं (हिन्दी, मराठी, बङ्गला, कर्णाटक, तैलंग, द्राविड़, उड़िया, पंजाबी, वर्मी, फारसी, अरब लैटिन, अंग्रेजी आदि) के नाम और व्यवहार में आने योग्य अङ्गों (पत्र-पुष्प-फल-मूलादि) का उल्लेख और साथ २ मात्रा का भी निर्देश कर दिया गया है तथा जिनके भेदादिक प्रचलित उक्त निघण्टु में नहीं हैं उनका भी उल्लेख किया गया है, इसके अतिरिक्त बहुत से अन्य ओषधियों के भी गुणादिक इस में दिये गये हैं। और इसमें मांसवर्ग तथा कृतान्नसाधन वर्ग के द्रव्यों को भी मिला कर कुल ९२२ द्रव्यों का वर्णन आया है तथा स्थल २ पर उनके अङ्गों के गुणों का भी वर्णन किया गया है। इसके अतिरिक्त विषयसूची संस्कृत में तथा अकारादि क्रमसूची हिन्दी में साथ २ संस्कृत नाम के दी गई है।

उपरोक्त संस्करणों में प्राप्त होगा।

---

प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस।

## 'रसचन्द्रिका' भाषा टीका सहित ।

# रसेन्द्रसारसंग्रह-

आनन्दकन्द सच्चिदानन्द की असीम कृपा से रसेन्द्रसारसंग्रह सरल हिन्दीटीका के साथ प्रकाशित हो गया। इस ग्रन्थ की प्रसिद्धि के बारे में अधिक कहने की जरूरत नहीं। हिन्दी में इसकी कोई सरल टीका न होने से अल्प संस्कृत जानने वाले तथा विद्यार्थियों को बहुत असुविधा होती थी। इस कष्ट को दूर करने के लिये आयुर्वेद के सुयोग्य विद्वान 'आयुर्वेदाचार्य पण्डित प्रयागदत्त जोषी' जी ने इसकी **रसचन्द्रिका** नामक सरल टीका बनाई है। यह टीका अत्यन्त सरल हिन्दी भाषा में सुविस्तृत हुई है। स्थल विशेष पर टिप्पणियाँ देकर और भी खुलासा कर दिया गया है। मत-मतान्तरों का उल्लेख व तथा सभी सन्दिग्ध स्थलों पर आधुनिक कालके उपयुक्त मात्राएँ भी दी गयी हैं।

इसे एक साधारण अल्पज्ञ बिना गुरु के सीख सकता है। परिशिष्ट में नवीन रोगों पर रसों का प्रयोग, मान परिभाषा, मूषा तथा पुट प्रकरण, अनुपान विधि और औषध बनाने के नियम आदि भी देकर टीकाकार ने इस ग्रन्थ को एक सम्पूर्ण रस ग्रन्थ ही बना दिया है। यंत्रों के भी चित्र वर्णन सहित देकर स्पष्ट कर दिये गये हैं। अधिक क्या कहें एकबार ग्रन्थ को देखते ही आप मुग्ध हो जायंगें। इतना होने पर भी कपड़े की मनोहर जिल्द गुटका संस्करण का

मूल्य लागत मात्र २॥)

---

**प्राप्तिस्थानम्—**

**चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी ।**

॥ श्रीः ॥

# रसेन्द्रसारसंग्रहः

## प्रथमोऽध्यायः ।

**रसेन्द्रमिव निःशेष-जराव्याधिविनाशनम् ।**
**प्रणमामि गुरुं भक्त्या शङ्करं योगसाधनम् ॥ १ ॥**

---

अव्यक्तं जगदाधारं निर्म्मुक्तं परमात्मकम् ।
नमामि सच्चिदानन्दं पुरुषं विश्वकारणम् ॥ १ ॥
यद्यप्यस्ति चन्द्रिका टिप्पणी सारसंग्रहे दुरूहा ।
तथापि 'बालबोधिनी' संक्षिप्ता कृतेयं गोपालेन ॥ २ ॥

सकलजनमण्डलसमुपकारकसुसिद्धशास्त्रार्थ-प्रकाशनार्थक विवृति-प्रतिरोधकविघ्नपटलनिरासार्थं प्रथमतः स्वेष्टदेवतानमस्कारस्यावश्यकत्वमित्यवधार्य तदेव निबध्नाति—**रसेन्द्रमित्यादि**—तत्रापि शङ्करनामोत्कीर्त्तनं मङ्गलार्थं शङ्करस्य श्रेयःसाधनत्वेन सर्व्वोत्कर्षत्वात् । नच गुरुपदार्थाविशेषितशङ्करनमस्कारेणैवेष्टसिद्धौ विशेषणवैयर्थ्यापत्तिरिति वाच्यं, यत्किञ्चित् संज्ञोपलब्धशङ्करधीनिरासकत्वेन ज्योतिःस्वरूपार्थकगुरुपदार्थस्य सार्थक्यात्। प्रपूर्व्वकनमधात्वर्थश्च स्वापकर्षबोधानुकूलव्यापारः । उद्देश्यरूपं कर्मत्वं तत्त्वञ्च नमस्कारजन्यफलजनकप्रत्याश्रयत्वम् । भक्त्येति विशेषणे तृतीया । आख्यातेनास्मत्पदार्थोपस्थितिः, ततश्च भक्तिविशिष्टोऽस्मत्वावच्छिन्नः कर्त्ता परब्रह्म--स्वरूप--शङ्करत्वावच्छिन्नकर्म्मतानिरूपकस्त्रापकर्षबोधजनकव्यापारवानित्यर्थः । ये तु स्वोत्कर्षबोधानुकूलव्यापार एव नमधात्वर्थ इति ब्रुवते तेषां मते विषयत्वरूपं धर्म्मत्वं अन्यत् समानं । अन्ये तु भक्त्येति तृतीया प्रयोजकतायां तस्य तादृशबोधे चान्वयः, ततश्च भक्तिप्रयोज्यस्तादृशबोध इत्यर्थमवतारयन्ति । ननु वाङ्मनसयोर्व्वर्त्माितिक्रमस्य तस्य ज्ञानाविषय-

नत्वा गुरुपदद्वन्द्वं दृष्ट्वा तन्त्राण्यनेकशः ।
श्रील-गोपालकृष्णेन क्रियते 'रससंग्रहः' ॥ २ ॥
सिद्धयोगाश्च ये केचित् कृतिसाध्या भवन्ति हि ।
एकीकृत्य तु ते सर्वे लिख्यन्ते यत्नतो मया ॥ ३ ॥

तत्र रसस्यप्राधान्यमाह—

अल्पमात्रोपयोगित्वादरुचेरप्रसङ्गतः ।
क्षिप्रमारोग्यदायित्वादौषधेभ्योऽधिको रसः ॥ ४ ॥

---

त्वेन प्रणामः कथं सङ्गच्छते इत्याह योगसाधनमिति । योगेन[1] साधनं प्राप्तिर्य्यस्येति बहुव्रीहिः । रसेन्द्रमिति योगसाधनं रसेन्द्रं निःशेषेण जराव्याधिनाशनं तथा योगसाधनं योगगम्यं शङ्करं प्रणमामीति दृष्टान्तसाहितार्थः । रसेन्द्रस्य योगसाधनत्वेन शङ्करस्य सधर्म्मवस्तुनः प्रतिबिम्बनरूपदृष्टान्तावगतिरिति ध्येयम्[2] ॥ १ ॥

**नत्वेत्यादौ** पदद्वन्द्वमिति परमार्थतत्त्वदर्शकत्वात् अशेषशास्त्रार्थप्रकाशकत्वाच्च पदद्वन्द्वमित्युक्तं । तन्त्राण्यनेकश इति अन्यानि बहूनि रसतन्त्राणि । सिद्धयोगाश्चेति तस्मिन् रसग्रन्थे सिद्धयोगाः सिद्धफलदा ये योगा उक्तास्तानेकीकृत्येति ॥ २-३ ॥

**रसप्राधान्यमाह अल्पमात्रेति-औषधेभ्योऽधिको रस** इति । अस्मात् कारणात् सर्व्वेभ्य औषधेभ्योऽधिकगुणकर इत्यर्थः । न केवलमौषधेभ्योधिकः योगसाधनत्वात् तथा बहुकार्य्यकरत्वात् मुक्तिप्रदत्वाच्च सर्व्वेभ्योऽधिक इति । उक्तञ्च—"अचिराज्जायते देवि शरीरमजरामरम् । मनसश्च समाधानं रसयोगादवाप्यते ॥ सत्त्वञ्च लभते देवि विज्ञानं ज्ञानपूर्व्वकम् । सत्यं मन्त्राश्च सिध्यन्ति योऽश्नाति मृतसूतकम् ॥ यावन्न शक्तिपातस्तु न यावत् पाशकृन्तनं । तावत्तस्य कुतः शुद्धिर्ज्जायते भस्मसूतके ॥ यावन्न हरबीजन्तु भक्षयेत् पारदं रसम् । तावत् तस्य कुतो मुक्तिः कुतः पिण्डस्य धारणम् । स्वदेहे खेचरत्वञ्च शिवत्वं येन लभ्यत" इति । अन्यच्च "दोषहीनो रसो ब्रह्मा मूर्च्छितस्तु जनार्दनः । मारितो रुद्ररूपी स्यात् बद्धः

---

१ योगः साधनं=प्राप्तिकारणं यस्येति विग्रहः ।

२ तथाचोपमया दृष्टान्तध्वनिरिति भावः ।

साध्येषु भेषजं सर्वमीरितं तत्त्ववेदिना।
असाध्येष्वपि दातव्यो रसोऽतः श्रेष्ठ उच्यते ॥ ५ ॥
हतो हन्ति जराव्याधिं मूर्च्छितो व्याधिघातकः।
बद्धः खेचरतां धत्ते कोऽन्यः सूतात् कृपाकरः ॥ ६ ॥

अथ रसपर्यायमाह—

रसेन्द्रः पारदः सूतः सूतराजश्च सूतकः।
शिवतेजो रसः सप्त नामान्येवं रसस्य तु ॥ ७ ॥

---

साक्षात् सदाशिव" इति। तस्य दर्शनात् स्पर्शनात् भक्षणात् स्मरणात् पूजनात् दानाच्च षड्विधं फलं लभ्यते। यथा—केदारादीनि लिङ्गानि पृथिव्यां यानि कानिचित्। तानि दृष्ट्वा च यत् पुण्यं तत् पुण्यं रसदर्शनात्॥ चन्दनागुरुकर्पूर-कुङ्कुमान्तर्गतो रसः। मूर्च्छितः शिवपूजा सा शिवसान्निध्यसिद्धये॥ भक्षणात् परमेशानि हन्ति तापत्रयं रसः। दुर्लभं ब्रह्मविष्णवाद्यैः प्राप्यते परमं पदम्॥ हृद्व्योमकर्णिकान्तःस्थं रसेन्द्रं परमेश्वरि। स्मरन् विमुच्यते पापैः सद्योजन्मान्तरार्ज्जितैः॥ स्वयम्भुलिङ्गसाहस्रैर्यत् फलं सम्यगर्च्चनात्। तत् फलं कोटिगुणितं रसलिङ्गार्च्चनाद्भवेत्। रसविद्या परा विद्या त्रैलोक्येऽपि च दुर्लभा। भक्तिमुक्तिकरी यस्मात् तस्मात् ज्ञेया गुणान्वितैरिति ॥ ४ ॥

हेत्वन्तरमाह **साध्येष्वित्यादि**–साध्येषु रोगेषु सर्व्वं भेषजमुक्तं असाध्येषु भेषजं नोक्तं, रसश्च साध्येष्वसाध्येष्वपि दातव्य इति। यदौषधैर्न सिध्यति तदसाध्यमिति तत्रौषधं निष्प्रयोजनं; यच्च सूतैरपि सिध्यति तत् कथमसाध्यमिति ? नैवं, असाध्येषु सर्व्वमौषधं निष्प्रयोजनं न च सूत इति। असाध्यं हि द्विविधं अप्रतिक्रियं याप्यञ्च, अप्रतिक्रियेषु तथा याप्येषु चौषधं निष्प्रयोजनं, सूतश्चाऽप्रतिक्रियेषु तथा याप्येषु च प्रयोक्तव्यो यापनार्थमिति नतु व्याधिनिःशेषकरणार्थञ्च ॥ ५ ॥

हेत्वन्तरमाह **हत इत्यादि**–हत इत्यत्र सूत इति शेषः। जराव्याधिर्व्वार्द्धक्याद्यकालपलितकेशादिरूपव्याधिः, एवं मूर्च्छितोऽपि व्याधिं हन्ति। बद्ध इति बद्धपारदः खेचरतां ददातीति ॥ ६ ॥

रसपर्य्यायमाह **रसेन्द्र** इत्यादि—यथा शिव इत्यनेन शिवपर्य्याया-

मतान्तरम्—

शिवबीजं रसः सूतः पारदश्च रसेन्द्रकः।
एतानि रसनामानि तथाऽन्यानि यथा शिवे ॥ ८ ॥

अथ रसलक्षणम्—

अन्तः सुनीलो बहिरुज्ज्वलो यो मध्याह्नसूर्यप्रतिमप्रकाशः।
शस्तोऽथ धूम्रः परिपाण्डरश्च चित्रो न योज्यो रसकर्मसिद्धौ ॥९॥

अथ रसदोषानाह—

नागो वङ्गो मलो वह्निश्चाञ्चल्यञ्च विषं गिरिः।
असह्याग्निर्महादोषा निसर्गात् पारदे स्थिता. ॥ १० ॥
व्रणं कुष्ठं तथा जाड्यं दाहं वीर्यस्य नाशनम्।
मरणं जडतां स्फोटं कुर्वन्त्येते क्रमान्नृणाम् ॥ ११ ॥
तस्माद्रसस्य संशुद्धिं विदध्याद्भिषजां वरः।
शुद्धोऽयममृतं साक्षाद्दोषयुक्तो रसो विषम् ॥ १२ ॥

मतान्तरम्—

दोषहीनो यदा सूतस्तदा मृत्युज्वरापहः।
शुद्धोऽयममृतं साक्षात् दोषयुक्तो रसो विषम् ॥ १३ ॥

अथ रसशोधनम्—

अथातः संप्रवक्ष्यामि पारदस्य विशोधनम्।
रसो ग्राह्यः सुनक्षत्रे पलानां शतमात्रकम् ॥

---

णामपि रसवाचकत्वं बोधयति ॥ ७-८ ॥

रसलक्षणमाह अन्तःसुनील इत्यादि—पारदे स्थितदोषमाह नागेत्यादि–नागः सीसकः, निसर्गा इति स्वाभाविकाः। ते सीसकादयः यथाक्रमं व्रणादि कुर्वन्ति। तन्त्रान्तरे त्वन्यथा पठ्यते यथा—नागो वङ्गो मलो वह्निश्चाञ्चल्यञ्च विषं गिरिः। असह्याग्निर्महादोषाः निसर्गाः पारदे स्थिताः॥ पर्पटी पाटली भेदी द्रावी मलकरी तथा। अन्धकरी तथा ध्वाङ्क्षी विज्ञेयाः सप्त कञ्चुकाः॥ तस्मादिति सीसकादिदोषात्। शुद्धिमित्यादि। शुद्धिरिति सा च द्विविधा प्रोक्ता उक्तं हि—"व्याधौ रसायने चैव द्विविधा सा प्रकीर्त्तिता। या शुद्धिः कथिता व्याधौ सा नेष्टा हि रसायने। रसायने तु या शुद्धिः सा व्याधावपि कीर्त्तिते"ति ॥ ९-१२ ॥

पञ्चाशत् पञ्चविंशद्वा दशपञ्चैकमेव वा ।
पलार्द्धीनो न कर्त्तव्यो रससंस्कार उत्तमः ॥ १४ ॥

मतान्तरम्—

शतं पञ्चाशतं वापि पञ्चविंशद्दशैव च ।
पञ्चैकं वा पलञ्चैव पलार्द्धं कर्षमेव च ॥ १५ ॥
कर्षान्न्यूनो न कर्तव्यो रससंस्कार उत्तमः ।
प्रयोगेषु च सर्वेषु यथालाभं प्रकल्पयेत् ॥ १६ ॥
शुभेऽह्नि विष्णुं परिचिन्त्य कुर्य्यात् सम्यक् कुमारीवटुकार्चनञ्च ।
सुलौहपाषाणसमुद्भवेऽस्मिन् दृढे च वेदाङ्गुलिगर्भमात्रे ॥ १७ ॥
सुतप्तखल्ले निजमन्त्रयुक्तां विधाय रक्षां स्थिरसारबुद्धिः ।
अनन्यचित्तः शिवभक्तियुक्तः समाचरेत कर्म्म रसस्य तज्ज्ञः ॥ १८ ॥

तप्तखल्लक्षणम्—

अजाशकृत् तुषाग्निञ्च भूगर्त्ते त्रितयं क्षिपेत् ।
तस्योपरि स्थितं खल्लं तप्तखल्लमिति स्मृतम् ॥ १९ ॥

अथ (अघोर) रक्षामन्त्रः—

अघोरेभ्योऽथ घोरेभ्यो घोराघोरतरेभ्यश्च ।
सर्वतः सर्वसर्वेभ्यो नमस्ते रुद्ररूपिभ्यः ॥ २० ॥

अथ रसनिगडः—

स्नुह्यर्कसम्भवं क्षीरं ब्रह्मबीजञ्च गुग्गुलुः ।
सैन्धवं द्विगुणं मर्द्यं निगडोऽयं महोत्तमः ॥ २१ ॥

अथ साधारणशुद्धिः—

षोडशांशैर्भिषक् चूर्णैरेकत्र मर्दयेद्रसम् ।

---

**शतं पञ्चाशतमित्यादौ**—यथालाभं प्रकल्पयेदिति औषधप्रयोगेषु यथाप्रयोजनं तन्मात्रं वा ग्राह्यमित्यर्थः ॥ १५-१६ ॥

तप्तखल्ललक्षणमाह **अजाशकृदित्यादि**—अथ निगडमाह—**स्नुह्यर्केत्यादि**—स्नुही सीज इति लोके । अर्क आकन्दः । ताभ्यां सम्भवं यत् क्षीरं तत् । ब्रह्मबीजं पलाशबीजं । द्विगुणमिति रसापेक्षया मिलितं सर्व्वं द्विगुणम् ॥ १९-२१ ॥

**षोडशांशैरित्यादौ**—चूर्णैरिति रसमारकद्रव्याणां चूर्णैः । षोडशांशैरि-

प्रत्येकं प्रत्यहं दत्त्वा सप्तवारं विमर्दयेत् ॥ २२ ॥

विशेषशुद्धिमाह—

सोर्णैर्निशेष्टकाधूम-जम्बीराम्बुभिरादिनम् ।
मर्दितः काञ्जिकैर्धौतो नागदोषं रसस्त्यजेत् ॥ २३ ॥
विशालाङ्कोठचूर्णेन वङ्गदोषं विमुञ्चति ।
राजवृक्षो मलं हन्ति चित्रको वह्निदूषणम् ॥ २४ ॥
चाञ्चल्यं कृष्णधुस्तूरं त्रिफला विषनाशिनी ।
कटुत्रयं गिरिं हन्ति असह्याग्निं त्रिकण्टकः ॥ २५ ॥
प्रतिदोषं कलांशेन तत्तच्चूर्णं सकन्यकम् ।
उद्धृत्योष्णारनालेन मृत्पात्रे क्षालयेत् सुधीः ।
एवं संशोधितः सूतः सप्तकञ्चुकवर्जितः ॥ २६ ॥

मतान्तरम्—

श्रीखण्डं देवकाष्ठञ्च काकजङ्घाजयाद्रवैः ।
कर्कटीमूषलीकन्या-द्रवं दत्त्वा विमर्दयेत् ।
दिनैकं पातयेत् पश्चात् तं शुद्धं विनियोजयेत् ॥ २७ ॥

मतान्तरम्—

कुमार्यां च निशाचूर्णैर्दिनं सूतं विमर्दयेत् ।
पातयेत् पातनायन्त्रे सम्यक् शुद्धो भवेद्रसः ॥ २८ ॥

---

त्युत्तरत्रापि सम्बध्यते विशेषाभावात् ॥ २२ ॥

**सोर्णैरित्यादिना** विशेषशुद्धिमाह-ऊर्णैर्मेषरोमैः, निशा हरिद्रा, आदि-नमित्यत्र सप्ताहमित्युपदिशन्ति वृद्धाः । ऊर्णादि सर्व्वं कुमार्य्या सहितं रसात् षोडशांशं दत्त्वा सप्ताहं मर्द्दितं ततः काञ्जिके प्रक्षालनीयम् । एवं विशालादिचूर्णमपि । विशाला गोरक्षकर्कटी । अङ्कोठ इति ओङ्कडा इति ख्यातः । अंकोठ इत्यत्र अंकोल इति केचित् पठन्ति । अंकोलः काकरोल इति ख्यातः । राजवृक्षः सोनालुः तस्य फलमज्जा ग्राह्यः । कलांशेनेति पारदस्य षोडशांशेनेत्यर्थः । सप्तकञ्चुकवर्जित इति सीसकादिसप्तदोषवर्जित इत्यर्थः ॥ २३-२६ ॥

**श्रीखण्डमित्यादि**—श्रीखण्डं श्वेतचन्दनं, मूषली तालमूली, पातयेदित्यूर्द्ध्वपातनायन्त्रेण ॥ २७ ॥

मतान्तरम्—

रसस्य द्वादशांशेन गन्धं दत्त्वा विमर्दयेत् ।
जम्बीरोत्थैर्द्रवैर्यामं पाच्यं पातनयन्त्रके ।
पुनर्मर्द्यं पुनः पाच्यं सप्तवारं विशुद्धये ॥ २९ ॥

मतान्तरम्—

जयन्त्या वर्द्धमानस्य चार्द्रकस्य रसेन च ।
वायस्याश्चानुपूर्व्यैवं मर्दनं रसशोधनम् ॥ ३० ॥
एषां प्रत्येकशस्तावत् मर्दयेत् स्वरसेन च ।
यावच्च शुष्कतां याति सप्तवारं विचक्षणः ॥ ३१ ॥
उद्धृत्योष्णारनालेन मृद्भाण्डे क्षालयेत् सुधीः ।
सर्व्वदोषविनिर्मुक्तः सप्तकञ्चुकवर्जितः ।
जायते शुद्धसूतोऽयं युज्यते सर्व्वकर्म्मसु ॥ ३२ ॥

मतान्तरम्—

निशेष्टकाधूमरजोऽम्लपिष्टो विकञ्चुकः स्याद्धि ततश्च सोर्णः ।
वरारनालानलकन्यकाभिः सत्र्यूषणाभिर्मृदितस्तु सूतः ॥ ३३ ॥

मतान्तरम्—

दिनैकं मर्दयेत् सूतं कुमारीसम्भवैर्द्रवैः ।
तथा चित्रकजैः क्वाथैर्मर्दयेदेकवासरम् ।
काकमाचीरसैः सार्द्धं दिनमेकन्तु मर्दयेत् ॥ ३४ ॥

मतान्तरम्—

रसोनस्वरसैः सूतः नागवल्लीदलोत्थितैः ।
त्रिफलायास्तथा क्वाथै रसो मर्द्यः प्रयत्नतः ॥ ३५ ॥
ततस्तेभ्यः पृथक् कृत्वा सूतं प्रक्षाल्य काञ्जिकैः ।
सर्वदोषविनिर्मुक्तं योजयेत् रसकर्म्मसु ॥ ३६ ॥

अथोर्द्ध्वपातनम्—

भागास्त्रयो रसस्यार्क-भागमेकं विमर्दयेत् ।

---

रसस्य द्वादशांशेनेत्यादौ—पातनयन्त्रक इत्यूर्द्ध्वपातनयन्त्रे ॥ २९ ॥

निशेष्टकेत्यादौ—सोर्णो मेषरोमसहितः, वरा त्रिफला, आरणालः काञ्जिकः, अनलश्चित्रकः, त्र्यूषणं त्रिकटुकम् ॥ ३३ ॥

अधुना रसायने विशेषशुद्धिमाह ऊर्द्ध्वपातनमित्यादि—ऊर्द्ध्वपातन·

जम्बीरद्रवयोगेन यावदायाति पिण्डताम् ॥ ३७ ॥
तत्पिण्डं तलभाण्डस्थमूर्द्ध्वभाण्डे जलं क्षिपेत् ।
कृत्वाऽऽलवालकं वाऽपि ततः सूतं समुद्धरेत् ।
ऊद्‌र्ध्वपातनमित्युक्तं भिषग्भिः सूतशोधने ॥ ३८ ॥

अथाधःपातनम्—

नवनीताह्वयं गन्धं घृष्ट्वा जम्भाम्भसा दिनम् ।
वानरीशिग्रुशिखिभिः सैन्धवासुरिसंयुतैः ॥ ३९ ॥
नष्टपिष्टं रसं कृत्वा लेपयेदूर्द्ध्वभाण्डके ।
ऊर्द्ध्वभाण्डोदरं लिप्त्वाऽधोभाण्डं जलसंयुतम् ॥ ४० ॥
सन्धिलेपं द्वयोः कृत्वा तद् यन्त्रं भुवि पूरयेत् ।
उपरिष्टात् पुटे दत्ते जले पतति पारदः ।
अधःपातनमित्युक्तं सिद्धाद्यैः सूतकर्म्मणि ॥ ४१ ॥

अथ तिर्य्यक्‌पातनम्—

घटे रसं विनिक्षिप्य सजलं घटमन्यकम् ।
तिर्य्यङ्मुखं द्वयोः कृत्वा तन्मुखं रोधयेत् सुधीः ॥ ४२ ॥
रसाधो ज्वालयेदग्निं यावत् सूतो जलं विशेत् ।

---

माह भागा इत्यादि—अर्कभागमेकमिति ताम्रस्य चैको भागः । ऊर्द्ध्वपातनलक्षणञ्चाह तत् पिण्डमिति । तन्त्रान्तरेऽस्य विद्याधरयन्त्रमिति संज्ञान्तरम् । यथा—स्थालिकोपरिविन्यस्त-स्थालीं सम्यक् निरोधयेत् । स्थालीमूर्ध्नि जलं दत्त्वा वह्निं प्रज्वालयेदधः ॥ एतद्विद्याधरं यन्त्रं पातनायन्त्रमित्यपि । पातनायन्त्रमित्यूर्द्ध्वपातनायन्त्रम् । हण्डिकोपरितनभागे अन्यां हण्डिकाञ्चोर्द्ध्वमुखीं विन्यस्याधो हण्डिकाभ्यन्तरे पाच्यं सूतादिकं निवेश्य च द्वयोः सन्धिं निरोधयेत् । तत उपरितनस्थाल्यां जलं दत्त्वा अधो वह्निं प्रज्वालयेदिति । पातनञ्च त्रिविधं ऊर्द्ध्वपातनं, अधःपातनं, तिर्य्यक्‌तनञ्च ॥ ३७-३८ ॥

अथाधःपातनमाह **नवनीतेति**—नवनीताह्वयगन्धः लाउया गन्धक इति ख्यातः । स च सूतसमः पारदसमः, जम्भाम्भसा जम्बीररसेन ॥३९-४१॥

अथ तिर्य्यक्पातनमाह **घटे रसमित्यादि**—रोधयेदिति सम्बन्धये-

तिर्य्यक्पातनमित्युक्तं सिद्धैर्नागार्जुनादिभिः ॥ ४३ ॥

अथ बोधनम्—

एवं कदर्थितः सूतः षण्डत्वमाधिगच्छति।
तन्मुक्तयेऽस्य क्रियते बोधनं कथ्यते हि तत् ॥ ४४ ॥
विश्वामित्रकपाले वा काचकूप्यामथापि वा।
सूते जलं विनिक्षिप्य तत्र तन्मज्जनावधि ॥ ४५ ॥
पूरयेत् त्रिदिनं भूम्यां गजहस्तप्रमाणतः।
अनेन सूतराजोऽयं षण्डभावं विमुञ्चति ॥ ४६ ॥

अथ हिङ्गुलाकृष्टो रसः—

अथवा हिङ्गुलात् सूतं ग्राहयेत् तन्निगद्यते।
जम्बीरनिम्बुनीरेण मर्दितो हिङ्गुलो दिनम् ॥ ४७ ॥
ऊद्ध्र्वपातनयन्त्रेण ग्राह्यः स्यान्निर्मलो रसः।
कञ्चुकैर्नागवङ्गाद्यैर्निर्मुक्तो रसकर्म्मणि।
विना कर्म्माष्टकेनैव सूतोऽयं सर्वकर्म्मकृत् ॥ ४८ ॥

अष्टकर्म यथा—

स्वेदनं मर्दनञ्चैव मूर्च्छनोत्थापने तथा।
पातनं बोधनञ्चैव नियामनमतः परम् ॥ ४९ ॥
दीपनञ्चेति संस्कारा सूतस्याष्टौ प्रकीर्त्तिताः ॥ ५० ॥

---

दित्यर्थः ॥ ४२-४३ ॥

अथ बोधनमाह एवमित्यादि-विश्वामित्रेत्यादि—विश्वामित्रकपाले नारिकेलखर्परे ॥ ४४-४६ ॥

अथ हिङ्गुलाकृष्टरसमाह अथवेति स्पष्टम् ॥ ४७-४८ ॥

**स्वेदनमि**मित्यादिना-अष्टादशरसकर्म्मणां मध्ये दीपनान्ता अष्टौ संस्कारा उक्ताः। तेषां लक्षणं यथा—रसं चतुर्गुणं वस्त्रे दिनं दोलागतं पचेत्। वराव्योषाग्निकन्याक्ते काञ्जिके स्वेदनन्त्विदं ॥ गृहधूमेष्टकाजाजी-दग्धोर्णागुड-सैन्धवैः। सकाञ्जिकैः षोडशांशैर्म्मर्द्दनं त्रिदिनं शुभं ॥ वरावह्निकुमारीभिः सप्तधा मूर्च्छितो रसः। पात्यः पातनयन्त्रेण मूर्च्छितो भवति ध्रुवं ॥ मर्दयेत् कन्यकाद्रावैश्चूर्णितैरात्रिपादिकैः। पातयेत् पातनायन्त्रे इत्युत्थापनमीरितं पातनमिति ऊद्ध्र्वादिपातनं। बोधनं विश्वामित्रकपालेत्यादिना चोक्तं।

मतान्तरम्—

दरदं तण्डुलस्थूलं कृत्वा मृत्पात्रके त्रिदिनम्।
भाव्यं जम्बीररसैश्चाङ्गेर्य्या वा रसैर्बहुधा ॥ ५१ ॥
ततश्च जम्बीरवारिणा चाङ्गेर्य्या रसेन परिप्लुतम्।
कृत्वा स्थालीमध्ये निधाय तदुपरि कठिनीघृष्टम् ॥ ५२ ॥

---

नियामनं यथा—सर्पाक्षीचिञ्चिकाबन्ध्या भृङ्गाब्जकन्यकाम्बुभिः। त्रिदिनं मार्द्दितः सूतो नियमात् स्थिरतां व्रजेत्। दीपनं यथा—काशीशं पञ्चलवणं राजिकामरिचानि च। भूशिग्रुबीजमेकत्र टंकणेन समन्वितं॥ आलोड्य काञ्जिके दोला-यन्त्रे पाकाद्दिनैस्त्रिभिः। दीपनं जायते सम्यक् सूतराजस्य जारणे॥ अष्टादशरसकर्म्मणां मध्ये दीपनान्ता अष्टौ संस्काराः संक्षेपेणोक्ताः, ग्रासादयश्चापरे दशसंस्काराः ग्रन्थबाहुल्याद्धेयाः। अत्र प्रयोगार्थञ्च रसस्य चतुर्व्विधसंस्करणमुक्तम्, यथा—शोधनं मूर्च्छनं बन्धनं मारणञ्च। तत्र शोधनमग्रे वाच्यम् तप्तखल्वादिना दशसंस्काररूपं। मूर्च्छनञ्च द्विविधं निर्गन्धं सगन्धञ्च। निर्गन्धं रसकर्पूरादि, सगन्धञ्च कज्जलरूपं रसगन्धं तथा रससिन्दूरादि च। उक्तञ्च—गौरवं घनता यस्मिन् तेजस्वित्वञ्च दृश्यते सूते। मूर्च्छितः सूतो विज्ञेयो नैवं वह्निना सह। निर्गन्धञ्च सगन्धं द्विविधं विद्यात् तु मूर्च्छनं सूतं निर्गन्धं रसकर्पूरं सगन्धं रससिन्दूरं रसगन्धकं विद्यात्। यस्मिन् गुरुता अरुणता तेजस्वित्वञ्च सूते दृश्यते दृढशिखिमध्ये तिष्ठेत्, स बद्धः सूतः अमृतसमः। बन्धनं कलौ सुदुष्करः साधकाभावादुपदेशाभावाच्च। रसमारणञ्च वास्तवं कलौ नास्ति साधकाभावादुपदेशाभावाच्च। द्रवघनगुरुता चञ्चलता तेजस्वित्वञ्च न दृश्यते यत्र। तं मृतसूतं विद्यात्, नैकः सर्वत्र वर्णनियमोऽस्ति॥ ४९-५०॥

प्रकारान्तरं हिङ्गुलाकृष्टरसमाह—**दरदमित्यादि**—स्थालीमध्ये हिङ्गुलं यथोक्तविधिना संस्थाप्य तदुपरि कठिनीलिप्तं उत्तानं शरावं दत्वा मृदाम्बरैः सन्धि दृढं रुन्ध्यात्। ततः पात्राधो ज्वाला देया; शरावोपरि वारंवारं जलं देयं। किञ्चिदुष्णे च परित्यज्य पुनर्ज्जलं देयमिति। एवं त्रिंशद्वारं कृत्वा चावनामयेत्। सुशीते च पात्रे शरावमुद्घाट्य खटिकासहितं पारदं गृह्णीयात। ततो वस्त्रे छान-[१]

---

१ छानयित्वेति भाषाप्रयोगः, विपूयेत्यर्थः। वस्त्रपूतं जलपिवेद्-इति-स्मृतिप्रयोगवत्।

उत्तानं चारु शरावं तत्र त्रिंशद्वारं जलं देयम् ।
उष्णे हेयं तथैव तदूर्ध्वपातनेन निर्म्मलः शिवजः ॥ ५३ ॥

मतान्तरम्—

पारिभद्ररसैः पेष्यं हिङ्गुलं याममात्रकम् ।
जम्बीराणां रसैर्वाऽथ पचेत् पातनयन्त्रके ॥ ५४ ॥
तं सूतं योजयेद् योगे सप्तकञ्चुकवर्जितम् ।
संशुद्धिमन्तरेणापि शुद्धोऽयं रसकर्म्मणि ॥ ५५ ॥

अथ मूर्च्छनम्—

गन्धकेन रसं प्राज्ञः सुदृढं मर्दयेद्भिषक् ।
कज्जलाभो यदा सूतो विहाय घनचापलम् ॥ ५६ ॥
दृश्यतेऽसौ तदा ज्ञेयो मूर्च्छितो रसकोविदैः ।
असौ रोगचयं हन्यादनुपानस्य योगतः ॥ ५७ ॥

अथ मारणम्—

द्विपलं शुद्धसूतस्य सूतार्द्धं गन्धकं तथा ।
कन्यानीरेण संमर्द्य दिनमेकं निरन्तरम् ।
रुद्ध्वा तद् भूधरे यन्त्रे दिनैकं मारयेत् पुटे ॥ ५८ ॥

मतान्तरम्—

भुजङ्गवल्लीनीरेण मर्दयेत् पारदं दृढम् ।
कर्कटीकन्दमूषायां सम्पुटस्थं पुटेद्गजे ।
भस्म तद् योगवाहि स्यात् सर्वकर्म्मसु योजयेत् ॥ ५९ ॥

---

यित्वा वारंवारं जले काञ्चिके वा प्रक्षाल्य निर्म्मलं पारदं गृह्णीयादिति ॥५१–५३॥

मतान्तरमाह–**पारिभद्रेति**—पातनयन्त्रक इति ऊर्ध्वपातनयन्त्रे । संशुद्धिमन्तरेणापीति तप्तखल्वादिशुद्धिव्यतिरेकेणायं शुद्धः । अत्रातप्तखल्लादिना तथा पातनादिना च शोधनं निष्प्रयोजनमिति भावः ॥ ५४–५५ ॥

मूर्च्छनमाह **गन्धकेनेति**—सुगमम् ॥ ५६–५७ ॥

मारणमाह **द्विपलमित्यादि**–भूधरयन्त्रेति । वालुकासु समस्ताङ्गं गर्त्ते मूषा रसान्विता । दीप्तोपलैः संवृणुयात् यन्त्रं भूधरनामकमित्यादिनोक्तम् ॥ ५८ ॥

मतान्तरमाह **भुजङ्गवल्लीति**—भुजङ्गवल्ली पर्णपत्रम् ॥ ५९ ॥

मतान्तरम्—

श्वेताङ्कोठजटानीरैर्मर्द्यः सूतो दिनत्रयम् ।
पुटेत्तु चान्धमूषायां सूतो भस्मत्वमाप्नुयात् ॥ ६० ॥
देवदाली हंसपादी यमचिञ्चा पुनर्नवा ।
एभिः सूतो विघृष्टव्यः पुटनात् म्रियते ध्रुवम् ॥ ६१ ॥

[ इति भस्म ]

अथ रससिन्दूरम्—

भागो रसस्य त्रय एव भागा गन्धस्य माषः पवनाशनस्य ।
संमर्द्य गाढं सकलं सुभाण्डे तां कज्जलीं काचघटे निदध्यात् ॥ ६२ ॥
संरुध्य-मृत्कर्पटकैर्घटीं तां मुखे सुचूर्णां खटिकाञ्च दत्त्वा ।
क्रमाग्निना त्रीणि दिनानि पक्त्वा तां वालुकायन्त्रगतां ततः स्यात् ६३
बन्धूकपुष्पारुणमीशजस्य भस्म प्रयोज्यं सकलामयेषु ।
निजानुपानैर्मरणं जराञ्च हन्त्यस्य वल्लः क्रमसेवनेन ॥ ६४ ॥

मतान्तरम्—

पलमात्रं रसं शुद्धं तावन्मात्रन्तुगन्धकम् ।
विधिवत् कज्जलीं कृत्वा न्यग्रोधाङ्कुरवारिभिः ॥ ६५ ॥
भावनात्रितयं दत्त्वा स्थालीमध्ये निधापयेत् ।
विरच्य कवचीयन्त्रं वालुकाभिः प्रपूरयेत् ॥ ६६ ॥
दद्यात् तदनु मन्दाग्निं भिषग् यामचतुष्टयम् ।
जायते रससिन्दूरं तरुणादित्यसन्निभम् ।
अनुपानविशेषेण करोति विविधान् गुणान् ॥ ६७ ॥

---

मतान्तरमाह श्वेताङ्कोठेत्यादि—अन्धमूषादीनि यन्त्राणि यन्त्रप्रकरणेऽनुसन्धेयानि ॥ ६० ॥

मतान्तरमाह देवदालीत्यादि—देवदाली हस्तिघोषकः । हंसपादी थानकूनीतिं ख्याता ॥ ६१ ॥

अथ रससिन्दूरमाह भाग इत्यादि । पवनाशनस्येति सीसकस्य । मृत्कर्पटकैरिति मृत्तिकायुक्तवस्त्रखण्डैर्लेपयित्वा ॥ ६२–६४ ॥

मतान्तरमाह पलमात्रमित्यादि—अत्र रसस्य द्विपलं गन्धकस्य च द्विपलं ग्राह्यं । रसं शुद्धमिति पूर्वोक्तशोधनीयद्रव्यैः शोधितं । न्यग्रोधाङ्कुरवारिभिरिति वटाङ्कुररसैरित्यर्थः ॥ ६५–६७ ॥

मतान्तरम्—

पृथक् समं समं कृत्वा पारदं गन्धकं तथा ।
नरसारं धूमसारं स्फटिकं याममात्रकम् ॥ ६८ ॥
निम्बूरसेन संमर्द्य काचकूप्यां निवेशयेत् ।
मुखे पाषाणखटिकां दत्त्वा मुद्रां प्रलेपयेत् ॥ ६९ ॥
सप्तभिर्मृत्तिकावस्त्रैः पृथक् संशोष्य वेष्टयेत् ।
सच्छिद्रायां मृदः स्थाल्यां कूपिकां तां निवेशयेत् ॥ ७० ॥
पूरयेत् सिकतापूरैः आगलं मतिमान् भिषक् ।
निवेश्य चुल्ल्यां दहनं मन्दं मध्यं खरं क्रमात् ॥ ७१ ॥
प्रज्वाल्य द्वादशं यामं स्वाङ्गशीतं समुद्धरेत् ।
स्फोटयित्वा तु मुक्ताभमूर्द्ध्वलग्नं बलिं त्यजेत् ।
अधःस्थं रससिन्दूरं सर्वरोगेषु योजयेत् ॥ ७२ ॥

अथ रसकर्पूरम्

टङ्कणं मधु लाक्षा च ऊर्णा गुञ्जायुतो रसः ।
मर्दितो भृङ्गजद्रावैः दिनैकं चालयत् पुनः ।
ध्मातो भस्मत्वमाप्नोति शुद्धकर्पूरसन्निभम् ॥ ७३ ॥

मतान्तरम्—

पिष्टं पांशुपटु प्रगाढममलं वज्र्यम्बुना नैकशः
सूतं धातुगतं खटीकवलितं तं सम्पुटे रोधयेत् ।
अन्तःस्थं लवणस्य तस्य च तले प्रज्वाल्य वह्निं दृढं
वस्त्रं ग्राह्यमथेन्दुकुन्दधवलं भस्मोपरिस्थं शनैः ॥ ७४ ॥
तद्वल्लद्वितयं लवङ्गसहितं प्रातः प्रभुक्तं नृणा-
मूर्द्धं रेचयति द्वियाममसकृत् पेयं जलं शीतलम् ।

---

मतान्तरमाह पृथगित्यादि—नरसारं निशादलं। मुद्रां प्रलेपयेदिति सन्धिस्थानं लेपयेत् । आगलमिति काचकूपिकाया गलपर्य्यन्तं न तु मृद्भाण्डस्य । अधःस्थं रससिन्दूरमित्यूर्द्ध्वलग्नगन्धकादधःस्थं रससिन्दूरं ग्राह्यं न तु पात्राधस्तात्, पात्राधस्तु न रससिन्दूरं सम्भवतीति ॥ ६८–७२ ॥

अथ रसकर्पूरमाह टङ्कणमित्यादि—ऊर्णा मेषरोम, गुञ्जा श्वेतगुञ्जा॥७३॥
मतान्तरमाह पिष्टमित्यादि–धातुगतमिति लौहपात्रगतं, खटीकवलितमिति

एतद्धन्ति च वत्सराधिकविषं षाण्मासिकं मासिकं
शैलोत्थं गरलं मृगेन्द्रकुटिलोद्भूतञ्च तात्कालिकम् ॥ ७५ ॥
[ रसकर्पूरमिति रसमञ्जरीकारः; श्वेतभस्मेति चन्द्रिकाकारः ]।

सर्वाङ्गसुन्दरो रसः—

मर्दयेत् रसगन्धौ च हस्तिशुण्डीद्रवैर्दृढम् ।
भूधात्रिकारसैः वाऽपि पर्यन्तं दिनसप्ततः ७६ ॥
विघृष्य बालुकायन्त्रे मूषायां सन्निवेशयेत् ।
दिनमेकं दहेदग्नौ मन्दं मन्दं निशावधि ॥ ७७ ॥
एवं निष्पाद्यते पीतः शीतः सूतस्तु गृह्यते ।
पर्णखण्डेन तद्गुञ्जां भक्षयेत् सततं हिताम् ॥ ७८ ॥
क्षुद्बोधं कुरुते पूर्वमुदराणि विनाशयेत् ।
जराणां नाशनः श्रेष्ठस्तद्वत् श्री सुखकारक ॥ ७९ ॥
हृदयोत्साहजननः सुरूपतनयप्रदः ।
बलप्रदः सदा देहे जरानाशनतत्परः ॥ ८० ॥
अङ्गभङ्गादिकं दोषं सर्वं नाशयति क्षणात् ।
एतस्मान्नापरः सूतो रसात् सर्वाङ्गसुन्दरात् ॥ ८१ ॥
[ पीतभस्मेति चन्द्रिकाकारः ]

अथ कृष्णभस्म—

धान्याभ्रकं रसं तुल्यं मारयेत् मारकद्रवैः ।
दिनैकं तेन कल्केन वस्त्रं लिप्त्वा तु वर्तिकाम् ॥ ८२ ॥
विलिप्य तैलैर्वर्तितामेरण्डोत्थैः पुनः पुनः ।
तदाज्यभाण्डे प्रज्वाल्य गृह्णीयात् पतितञ्चयत् ॥ ८३ ॥
कृष्णभस्म भवेत् तच्च पुनर्मर्द्यं नियामकैः ।
दिनैकं पातयेत् यन्त्रे कन्दुकाख्ये न संशयः ।

---

खटिकया बद्धमुखम् ॥ ७४–७५ ॥

सर्वाङ्गसुन्दरमाह **रसगन्धाविति**—रसगन्धकौ समौ कज्जलीकृत्य हस्तिशुण्डीरसैर्भूम्यामलकीरसैश्च दिनसप्तकं विघृष्य मूषायां निरुध्य बालुकायन्त्रे कृत्वा दिनमेकं पचेत् । पीत इति पीतवर्णः सूतो गृह्यते इति ॥ ७६–८१ ॥

कृष्णभस्ममाह **धान्याभ्रकमित्यादि**—मारकद्रव्यैरिति वक्ष्यमाणमारक-

मृतः सूतो भवेत् तच्च तत्तद्रोगेषु योजयेत् ॥ ८४ ॥
श्वेतं पीतं तथा रक्तं कृष्णञ्चेति चतुर्विधम् ।
लक्षणं भस्मसूतानां श्रेष्ठं स्यादुत्तरोत्तरम् ॥ ८५ ॥

अथ वज्रमूषाकरणम्—

द्वौ भागौ तुषदग्धस्य चैका वल्मीकमृत्तिका ।
लौहकिट्टस्य भागैकं श्वेतपाषाणभागिकम् ॥ ८६ ॥
नरकेशसमं किञ्चित् छागीक्षीरेण पेषयेत् ।
याममात्रं दृढं मर्द्यं तेन मूषां प्रकल्पयेत् ॥ ८७ ॥
शोषयित्वा रसं क्षिप्त्वा तत्कल्कैः सन्निरोधयेत् ।
वज्रमूषेयमाख्याता सम्यक् पारदसाधिका ॥ ८८ ॥

अथ नियामकगणः—

सर्पाक्षी वन्यकर्कोटी कञ्चुकी यमचिञ्चिका ।
शतावरी शङ्खपुष्पी शरपुङ्खा पुनर्नवा ॥ ८९ ॥
मण्डूकपर्णी मत्स्याक्षी ब्रह्मदण्डी शिखण्डिनी ।
अनन्ता काकजङ्घा च काकमाची च पोतिका ॥ ९० ॥
विष्णुक्रान्ता सहचरा सहदेवी महाबला ।
बला नागबला मूर्वा चक्रमर्दकरञ्जकौ ।
पाठा तामलकी नीली जालिनी पद्मचारिणी ॥ ९१ ॥
घण्टा त्रिघण्टा गोजिह्वा कोकिलाक्षो घनध्वनिः ।
आखुपर्णी क्षीरिणी च त्रिपुटी मेषशृङ्गिका ॥ ९२ ॥
कृष्णवर्णा च तुलसी सिंही च गिरिकर्णिका ।
एता नियामकौषध्यः पुष्पमूलदलान्विताः ॥ ९३ ॥

---

द्रव्यरसैः ॥ ८२–८५ ॥

मूषाकरणमाह द्वौ भागाविति—तुषदग्धस्येति अर्द्धदग्धस्येति अर्द्धदग्धतुषस्य द्वौ भागाविति ॥ ८६–८८ ॥

अथ नियामकगणमाह सर्पाक्षीत्यादि—सर्पाक्षी गन्धनाकुली । कञ्चुकी क्षीरीशवृक्षः ॥ ८९–९३ ॥

अथ मारकवर्गः—

घनवचाचित्रकगोक्षुरा कटुतुम्बीदन्तिका जातिः।
सर्पाक्षी शरपुङ्खा कन्या चाण्डालिनीकन्दम् ॥ ९४ ॥
विषमुष्टिवज्रवल्लयौ लज्जा लाक्षा च देवदाली च।
सहदेवी नीपकणा निर्गुण्डी चक्रलाङ्गलिके ॥ ९५ ॥
मांणार्कचन्द्ररेखा रविभक्ता काकमाचिका चार्कः।
विष्णुक्रान्ता वायसतुण्डी वज्री च बलाशुण्ठी च ॥ ९६ ॥
कोषातकी जयन्ती वराही हस्तिशुण्डिका रम्भा।
मत्स्याक्षी यमाचिञ्चा हरिद्रे द्वे पुनर्नवाद्वितयम् ॥ ९७ ॥
धुस्तूरकाकजङ्घे शतावरी कञ्चुकी च बन्ध्या च।
तिलभेकपर्णिदूर्वा मूर्वा च हरीतकी तुलसी ॥ ९८ ॥
गोकण्टकाखुपर्ण्यौ कर्कटीकन्दवर्गलता च।
मुषली हिङ्गु गुडूची शिग्रुर्गिरिकर्णिका महाराष्ट्री ॥ ९९ ॥
मार्कव-सैन्धव-सरणी-सोमलता श्वेतसर्षपोऽसनकः।
हंसपदी व्याघ्रपदी किंशुकभल्लातकेन्द्रवारुणिकाः ॥१००॥
सर्वञ्चार्द्धांशं वा अष्टादशाधिकं वाऽपि द्रव्यम्।
रसमारणमूर्च्छादौ युक्तिज्ञैर्विधिवदुपयोज्यम् ॥ १०१ ॥

अथ अम्लवर्गः—

अम्लवेतसजम्बीर-लुङ्गाम्लचणकाम्लकाः।
नागरङ्गं तिन्तिडी च चिञ्चापत्रञ्च निम्बुकम् ॥ १०२ ॥
चाङ्गेरी दाडिमञ्चैव करमर्दं तथैव च।
एष चाम्लगणः प्रोक्तो वेतसाम्लसमायुतः ॥ १०३ ॥

अथ लवणवर्गः—

लवणानि च कथ्यन्ते सामुद्रं सैन्धव विडम्।
सौवर्चलं रोमकञ्च चुलिकालवणं तथा ॥ १०४ ॥

---

अथ मारकगणमाह घनवचेति-घनं मुस्तकं, नीपं कदम्बः, चन्द्रलेखा सोमराजी, रविभक्ता पाटमाधा इति ख्याता ॥ ९४–१०१ ॥

अम्लवर्गमाह अम्लवेतसेति—लुङ्गाम्लं मातुलुङ्गम् ॥ १०२–१०३ ॥

लवणवर्गमाह लवणमिति—सामुद्रं करकचमिति ख्यातं रोमकं रुमानदीभवम् ॥ १०४ ॥

अथ मूत्रवर्गः—

मूत्राणि हस्तिकरभ-महिषीखरवाजिनाम् ।
गोऽजाऽवीनां स्त्रियाः पुंसां मूत्रवर्ग उदाहृतः ॥ १०५ ॥

अथ द्रावकवर्गः—

गुञ्जाटङ्कणमध्वाज्य-गुडा द्रावकपञ्चकाः ॥ १०६ ॥

अथ पित्तवर्गः—

पित्तं पञ्चविधं मत्स्य-गवाश्वरुरुबर्हिजम् ॥ १०७ ॥

अथ क्षारवर्गः—

स्वर्जिका टङ्कणञ्चैव यवक्षार उदाहृतः ॥ १०८ ॥

अथ रससेवाक्रमफले—

प्रातरेव पुरतो विरेचनं तद्दिनोपवसनं विधाय च ।
तत्परेऽहनि च पथ्यसेवनं तत्परेऽहनि रसेन्द्रसेवनम् ॥१०९॥
बुद्धिस्मृतिप्रभाकान्ति-बलञ्चैव रसस्तथा ।
वर्द्धन्ते सर्व एवैते रससेवाविधौ नृणाम् ॥ ११० ॥

---

मूत्रवर्गमाह **मूत्राणीत्यादि**—करभः उष्ट्रः, खरः गर्दभः, अवीनामिति मेषीणाम् ॥ १०५ ॥

अथ द्रावकवर्गमाह–**गुञ्जेति**—गुञ्जा श्वेतगुञ्जा, धातूनां द्रवीकरणत्वात् द्रावकेति ॥ १०६ ॥

पञ्चपित्तमाह **मत्स्येत्यादि**—तत्रान्तरे तु तदन्यथा पठ्यते यथा–वाराहच्छाग-माहिषमात्स्यमायूरपित्तकम् । पञ्चपित्तमिति ख्यातं सर्वेष्वेव हि कर्म्मसु–इति ॥ १०७ ॥

अथ क्षारवर्गमाह **स्वर्ज्जिकेति**–स्वर्ज्जिका साजिमाटीति ख्याता ॥ १०८ ॥

रससेवाक्रममाह **विरेचनमिति**—आत्यन्तिकशोधनोपलक्षितं कफान्तविरेचनमिति । पथ्यसेवनमिति वक्ष्यमाणरससेवनोपयोगिपथ्यं भक्षयेत् । एतच्च रसायनोपलक्षितं रससेवनं न च रोगोपशमनार्थमिति । रोगे च वमनविरेचनाभ्यां शुद्धे देहे प्रयोज्यः । येषु वमनविरेचनादिकमविधेयं तेषु च तद्व्यतिरेकेणापीति ॥ १०९–११० ॥

### तत्र पथ्यकथनम्—

हितं मुद्गाम्बु दुग्धाज्यं शाल्यन्नञ्च विशेषतः ।
शाकं पौनर्नवं वास्तु मेघनादञ्च यूथिकाम् ॥ १११ ॥
लवणं मागधीं मुस्तं पञ्चमूलानि भक्षयेत् ।
अनुपानं प्रदद्यात्तु ज्ञात्वा रोगादिकं भिषक् ॥ ११२ ॥

### अत्र-अपथ्यकथनम्—

कूष्माण्डं कर्कटीञ्चैव कलिङ्गं कारवेल्लकम् ।
कुसुम्भिका च कर्कोटी कलम्बी काकमाचिका ।
ककाराष्टकमेतद्धि वर्जयेत् रसभक्षकः ॥ ११३ ॥

[ इति रसशोधनाधिकारः ]

### अथ उपरसभेदाः—

गन्धको वज्र वैक्रान्तं वज्राभ्रं तालकं शिला ।
खर्परं शिखितुण्डञ्च विमलं हेममाक्षिकम् ॥ ११४ ॥
कासीसं कान्तपाषाणं वराटाञ्जनहिङ्गुलम् ।
गैरिकं शङ्खभूनागं टङ्कणञ्च शिलाजतु ।
एते चोपरसाः प्रोक्ताः शोध्या मार्य्या विधानतः ॥ ११५ ॥

### तत्रादौ गन्धकोत्पत्तिमाह—

श्वेतद्वीपे पुरा देव्याः क्रीडन्त्याः प्रसृतं रजः ।
क्षीरार्णवे तु स्नातायाः दुकूलं रजसाऽन्वितम् ।
धौतं तत् सलिले तस्मिन् गन्धको गन्धवत् स्मृतः ॥११६॥

---

अथ पथ्यमाह **हितमित्यादि**—मुद्गाम्बु मुदयूषम् ॥ १११–११२ ॥
अपथ्यमाह **कूष्माण्डमित्यादि**–स्पष्टं ॥ ११३ ॥

इति रसशोधनाधिकारः ।

रसशोधनाद्यनन्तरमुपरसाध्ययमाह–प्रथमतस्तत्रोपरसानां नामान्याह **गन्धक इत्यादि** । वज्रं हीरकं । वैक्रान्तं दग्धहीरकं । शिखितुण्डं शिखिग्रीवं । हेममाक्षिकं स्वर्णमाक्षिकं । अञ्जनं रसाञ्जनम् ( नीलाञ्जनं ) ॥ ११४–११५ ॥
अथ गन्धकोत्पत्तिमाह **श्वेतद्वीप इत्यादि**–दुकूलं वस्त्रम् ॥ ११६ ॥

अथ गन्धकभेदाः—

चतुर्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः ।
रक्तो हेमक्रियासूक्तः, पीतश्वेतौ रसायने ।
व्रणादिलेपने श्वेतः, कृष्णः श्रेष्ठः सुदुर्लभः ॥ ११७ ॥

अशुद्धगन्धकदोषाः—

अशुद्धगन्धः कुरुते तु तापं कुष्ठं भ्रमं पित्तरुजां करोति ।
रूपं बलं वीर्यसुखं निहन्ति तस्मात् सुशुद्धो विनियोजनीयः ॥११८॥

गन्धकपर्यायाः—

गन्धको गन्धपाषाणः शुकपुच्छः सुगन्धकः ।
सौगन्धिकः शुल्वरिपुः पामारिर्नवनीतकः ॥ ११९ ॥

अथ गन्धकशुद्धिः—

साज्यं भाण्डे पयः क्षिप्त्वा मुखं वस्त्रेण बन्धयेत् ।
तत्पृष्ठे गन्धकं क्षिप्त्वा शरावेण पिधापयेत् ॥ १२० ॥
भाण्डं निक्षिप्य भूम्यन्तरूर्द्धे देयं पुटं लघु ।
ततः क्षीरे द्रुतं गन्धं शुद्धं योगेषु योजयेत् ॥ १२१ ॥

मतान्तरम्—

लौहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत् ।
तप्ते घृते तत्समानं क्षिपेत् गन्धकजं रजः ॥ ११२ ॥

---

**चतुर्धेत्यादौ**—श्रेष्ठो हेमादिषु सर्वत्र प्रशस्ततरः । अशुद्धगन्धकस्य दोषमाह **अशुद्धेत्यादि**—पित्तरुजामिति पित्तकृतविकारान् । अथ गन्धकपर्य्यायमाह— **गन्धकेत्यादि** ॥ ११७–११९ ॥

अथ गन्धकशोधनमाह **साज्यमित्यादि**—भाण्डे साज्यं पयः क्षिप्त्वा घृताक्त-सूक्ष्मवस्त्रेण मुखमाच्छाद्य चूर्णितं गन्धकं तस्योपरि संस्थापयेत् । ततः शरावेण पात्रमुखमाच्छाद्य सन्धिमालेपयेत् । ततश्च यन्त्रं भूम्यन्तरं निधाय उपरिष्टात् गोमयाग्निना लघुपुटं देयं, तेन पुटेन द्रवीभूतगन्धको निम्नस्थदुग्धमध्ये यदा पतति तदा तदुद्धृत्य प्रक्षाल्य आतपे शोषयित्वा चूर्णयेत्, एवं वारद्वयं त्रयं वा कुर्य्यात् ॥ १२०–१२१ ॥

मतान्तरमाह **लौहपात्र इत्यादि**—बदराङ्गारोपरि लौहपात्रम् विन्यस्य घृतं निःक्षिपेत्, तप्ते च घृते चूर्णितं गन्धकं दत्त्वा दण्डिकया संचालयेत्, यदा तैलवत्

विद्रुतं गन्धकं दृष्ट्वा दुग्धमध्ये विनिक्षिपेत् ।
एवं गन्धकशुद्धिः स्यात् सर्वरोगेषु योजयेत् ॥ १२३ ॥

अथ शुद्धगन्धकगुणाः--

शुद्धगन्धो हरेद्रोगान् कुष्ठमृत्युज्वरादिकान् ।
अग्निकारी महान् उष्णो वीर्य्यवृद्धिं करोति च ॥ १२४ ॥

अन्यच्च--

गन्धश्चातिरसायनः सुमधुरः पाके कटूष्णान्वितः
कण्डूकुष्ठविसर्पदर्पदलनो दीप्तानलः पाचनः ।
आमोन्मन्थनशोधनो विषहरः सूताच्च वीर्य्यप्रदः
गौरीपुष्पभवस्तथा क्रिमिहरः स्वर्णाधिकं वीर्य्यकृत् ।

अथ अशुद्धवज्रदोषाः--

पार्श्वपीडां पाण्डुरोगं हृल्लासं दाहसन्ततिम् ।
रोगानीकं गुरुत्वञ्च धत्ते वज्रमशोधितम् ॥ १२६ ॥

---

द्रवीभवति तदा दुग्धपरिप्लुतपात्रे घृताक्तसूक्ष्मवस्त्रेण पिहितमुखे ढालयेत्[१]। एवं पुनः पुनः कुर्य्यात् । तदनु प्रक्षाल्य आतपे शोषयित्वा चूर्णयेदिति १२२–१२३

गन्धकगुणमाह शुद्धगन्ध इत्यादि स्पष्टम् ॥ १२४ ॥

वज्रशोधनमारणादिमाह **वज्रेति**—वज्रं हीरकं, यद्यप्यत्र वज्रलक्षणं नोक्तं तथापि तन्त्रान्तरमनुसर्त्तव्यं यथा–"स्वच्छं विद्युत्प्रभं स्निग्धसौन्दर्य्यं लघु लेखनं । षडारं तीक्ष्णधारञ्च सुश्यामारं श्रियं दिशेत् ॥ भस्माभं काकपादञ्च रेखाक्रान्तञ्च वर्त्तुलं । आधारमलिनं बिन्दुसन्त्रासे स्फुटितं तथा ॥ नीलाभं चिपिटं रूक्षं तद्वज्रं दोषलं त्यजेत् । स तु श्वेतः स्मृतो विप्रो लोहितः क्षत्रियो मतः ॥ पीतो वैश्योऽसितः शूद्रश्चतुर्व्वर्णात्मकश्च सः । रसायने मतो विप्रः सर्व्व-सिद्धिप्रदायकः ॥ क्षत्रियो व्याधिविध्वंसी जरामृत्युहरः परः । वैश्यो धनप्रदः प्रोक्तस्तथा देहस्य दार्ढ्यकृत् । शूद्रो नाशयति व्याधीन् वयःस्तम्भं करोति च । स्त्रीपुंनपुंसकाश्चैते लक्षणीयाश्च लक्षणैः । सुवृत्ताः फलसम्पूर्णास्तेजोयुक्ता बृहत्तराः । पुरुषास्ते समाख्याता रेखाबिन्दुविवर्जिताः ॥ रेखाबिन्दुसमायुक्ताः षड्-स्रास्ते स्त्रियः स्मृताः । त्रिकोणाश्च सुदीर्घाश्च ते विज्ञेयाः नपुंसकाः । तेषु स्युः

---

१ ढालयेदिति रसिकप्रयोगः, पातयेत् ।

अथ वज्रशोधनम्--

व्याघ्रीकन्दगतं वज्रं दोलायन्त्रे विपाचितम्।
सप्ताहं कोद्रवक्काथे कौलत्थे विमलं भवेत्॥ १२७॥

मतान्तरम्--

व्याघ्रीकन्दगतं वज्रं दोलायन्त्रे विपाचयेत्।
अहोरात्रात् समुद्धृत्य हयमूत्रेण सेचयेत्।
वज्रीक्षीरेण वा सिञ्चेत् कुलिशं विमलं भवेत्॥ १२८॥

अथ वज्रमारणम्--

त्रिवर्षारूढकार्पास-मूलमादाय पेषयेत्।
त्रिवर्षनागवल्ल्यास्तु निजद्रावैः प्रपेषयेत्॥ १२९॥
तद्गोलके क्षिपेद्वज्रं रुद्ध्वा गजपुटे पचेत्।
एवं सप्तपुटेनैव म्रियते कुलिशं ध्रुवम्॥ १३०॥

मतान्तरम्--

कांस्यपात्रे तु भेकस्य मूत्रे वज्रन्तु निक्षिपेत्।
त्रिःसप्तकृत्वः सन्तप्तं वज्रमेवं मृतं भवेत्॥ १३१॥

---

पुरुषाः श्रेष्ठा रसबन्धनकारिणः। स्त्रियः कुर्व्वन्ति कायस्य कान्तिं स्त्रीणां सुखप्रदाः। नपुंसकास्त्ववीर्य्याः स्युरकामाः सत्त्ववर्जिताः। स्त्रियः स्त्रीभ्यः प्रदातव्याः क्लीबे क्लीबं प्रयोजयेत्। सर्व्वेभ्यः सर्व्वदा देयाः पुरुषा वीर्य्यवर्द्धना" इति। अथ अशुद्धवज्रस्य दोषमाह पार्श्वपीड़ामिति। रोगानीकं रोगसमूहं॥१२६॥

अशोधितवज्रस्य दोषपरिहरणाय शोधनमाह व्याघ्रीकन्देति—व्याघ्री कण्टकारिका तस्या मूलपिण्डान्तर्गतं वज्रं कोद्रवक्काथैः कौलत्थैर्व्वा क्काथैर्दोलायन्त्रे सप्ताहं पचेदित्यर्थः॥ १२७॥

मतान्तरमाह व्याघ्रीकन्देति—प्रागुक्तप्रकारेण पाचितं वज्रं अश्वमूत्रेण वज्रीक्षीरेण वा सिञ्चेदिति भावः॥ १२८॥

वज्रमारणविधिमाह त्रिवर्षेत्यादि—त्रिवर्षारोपितस्य कार्पासस्य मूलमादाय त्रिवर्षारूढनागवल्ल्या रसैः पेषयेत्, तत्पिण्डान्तर्निहितं सुशुद्धं वज्रं गजपुटे सप्तधा पचेदित्यर्थः॥ १२९-१३०॥

मतान्तरमाह कांस्येत्यादि स्पष्टम्॥ १३१॥

अथान्यः प्रकारः—

त्रिःसप्तकृत्वः सन्तप्तं खरमूत्रेण सेचयेत् ।
मुद्गैरस्तालकं पिष्ट्वा तद्गोले कुलिशं क्षिपेत् ॥ १३२ ॥
प्रध्मातं वाजिमूत्रेण सिक्तं पूर्वक्रमेण तु ।
भस्मीभवति तद्वज्रं वज्रवत् कुरुते तनुम् ॥ १३३ ॥

अथ शोधितवज्रगुणाः—

आयुष्यं सौख्यजननं बलरूपप्रदं तथा ।
रोगघ्नं मृत्युहरणं वज्रभस्म भवत्यलम् ॥ १३४ ॥

अथ वैक्रान्तशोधनम्—

वैक्रान्तं वजवच्छोध्यं ध्मातं तत् हयमूत्रके ।
हिमं तद्भस्म संयोज्यं वज्रस्थाने विचक्षणैः ॥ १३५ ॥

मतान्तरम्—

वैक्रान्तं वज्रवच्छोध्यं मारणञ्चैव तस्य तत् ।
हयमूत्रेण तत् सेच्यं तप्तं तप्तं त्रिसप्तधा ॥ १३६ ॥
ततश्चोत्तरवारुण्याः पञ्चाङ्गगोलके क्षिपेत् ।
रुद्ध्वा मूषापुटे पाच्यम् उद्धृत्य गोलके पुनः ॥ १३७ ॥
क्षिप्त्वा रुद्ध्वा पचेदेवं यावत् तत् भस्मतां व्रजेत् ।
भस्मीभूतञ्च वैक्रान्तं वज्रस्थाने नियोजयेत् ॥ १३८ ॥

अथाभ्रपर्यायाः—

अभ्रकं गिरिजावीजममलं गगनाह्वयम् ॥ १३९ ॥

---

अन्यमतमाह **त्रिःसप्तकृत्व** इत्यादि—त्रिःसप्तेत्येकविंशतिवारं सन्तप्तं वज्रं गर्दभमूत्रेण सेचयेत् । ततः प्रक्षाल्य हरितालपिण्डान्तर्निहितं कृत्वा दहेत्, प्रतप्ते च पिण्डे वाजिमूत्रेण सेचयेत् एवमेकविंशतिवारम् ॥ १३२–१३३ ॥

मृतवज्रस्य गुणमाह **आयुष्यमित्यादि**—आयुष्यमायुष्करम् ॥ १३४ ॥

वैक्रान्तशोधनमारणादिकमाह **वैक्रान्तमित्यादि**—वैक्रान्तं दग्धहीरकम् । वैक्रान्तं वज्रवत् शोधनीयं मारणीयञ्च । मतान्तरे तु एकविंशतिवारं ध्मातं तत् हयमूत्रेण सेचयेत् । तत उत्तरवारुण्या मूलपत्रफलपुष्पवल्कलरूपं पञ्चाङ्गं निष्पिष्य तन्मध्ये तत् संशुद्धं वैक्रान्तं निधाय मूषापुटे पचेत् एवं वारम्वारं कुर्य्यात् यावत् भस्मतां याति ॥ १३५–१३८ ॥

अथाभ्रशोधनम्--

तत्र कृष्णाभ्रके वज्रं पीतात्मनि तु ग्राहिकम् ।
सितात्मके तारकं स्याद्भीरुकं रक्तके वरम् ॥ १४० ॥
सुप्रशस्तं कठोराङ्गं गुरु कज्जलसन्निभम् ।
यन्न शब्दायते वह्नौ नैवोच्छूनं भवेदपि ।
सदाकरसमुद्भूतं वज्रेति प्रथितं घनम् ॥ १४१ ॥
पिनाकं दर्दुरं नागं वज्रञ्चेति चतुर्विधम् ॥ १४२ ॥
ध्मातमभ्रं दलचयं पिनाकं विसृजत्यलम् ।
फूत्कारं भुजगः कुर्यात् दर्दुरं भेकशब्दवत् ।
चतुर्थञ्च वरं ज्ञेयं न वह्नौ विकृतिं व्रजेत् ॥ १४३ ॥
कुष्ठप्रदं पिनाकं स्याद्दर्दुरं मरणप्रदम् ।
नागं देहगतं नित्यं व्याधिं कुर्याद् भगन्दरम् ॥ १४४ ॥
रसे रसायने चैव योज्यं वज्राभ्रकं प्रिये !
तस्माद्वज्राभ्रकं ग्राह्यं व्याधिवार्द्धक्यमृत्युजित् ॥ १४५ ॥

---

अथाभ्रकशोधनमारणादिकमाह **तत्रेति**—तेषां वज्राभ्रलक्षणमाह सुप्रशस्तेति । नैवोच्छूनं भवेदिति वह्नौ क्षिप्तं सत् स्फीततां न याति । अन्ये तु नैवोच्छूनं भवेदित्यत्र नैव शूलं भवेदिति पठन्ति ; तन्मते पीतादीनि त्रीणि शूलकराणि, वज्राभ्रन्तु न शूलकरमिति । यद्यप्यत्र महागुणत्वात वृद्धव्यवहारात् सर्व्वरोगहन्तृत्वाच्च वज्राभ्रगुणमात्रोक्तं तथापि चेतराणां ग्राहिकादीनां गुणदोषं व्यवहारसौकर्य्यार्थं तन्त्रान्तरेऽनुसर्त्तव्यम् । यथा—विप्रक्षत्रियविट्शूद्र—भेदाव् तव् स्याच्चतुर्व्विधम् । क्रमेणैव सितं रक्तं पीतं कृष्णञ्च वर्णतः । प्रशस्यते सितं तारे रक्तं तत् तु रसायने । पीतं हेमनि कृष्णन्तु गदेषु भूतयेऽपि चेति ॥१४०—१४१॥

तत् तु वज्राभ्रं चतुर्व्विधं पिनाक—दर्दुर—नाग—वज्रभेदात् । यद्यपि वज्रमिति सामान्येनैव पूर्व्वमुक्तं तथापि तदेकदेशं तत्, तु न—विशेषतो दोषावहमिति । यथा भारतशब्देन "जम्बूद्वीप शब्देन" समग्रभूभागोक्तावपि तदन्तर्गतवर्षमात्रमप्युपलभ्यते ॥ १४२ ॥

पिनाकादीनां लक्षणमाह ध्मातमित्यादि—फुत्कारम् । भुजग इति नागन्तु वह्नौ नागवत् फुत्कारं परिमुञ्चति ॥ १४३ ॥

पिनाकादीनां साधारणगुणदोषमाह—कुष्ठप्रदमित्यादि ॥ १४४—१४५ ॥

अशुद्धाभ्रस्य दोषाः—

अशुद्धाभ्रं निहन्त्यायुः वर्द्धयेत् मारुतं कफम् ।
अहतं छेदयेद्गात्रं मन्दाग्निक्रिमिवर्द्धनम् ॥ १४६ ॥

धान्याभ्रमाह—

पादांशशालिसंयुक्तमभ्रकं कम्बलोदरे ।
त्रिरात्रं स्थापयेत् नीरे तत् क्लिन्नं मर्दयेद् दृढम् ॥ १४७ ॥
कम्बलाद्गलितं श्लक्ष्णं वालुकारहितञ्च यत् ।
तद्धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये ॥ १४८ ॥

मतान्तरम्—

त्रिफलाक्वाथगोमूत्र-क्षीरकाञ्जिकसेचितम् ।
भस्त्राग्नौ सप्तधा व्योम तप्तं तप्तं विशुध्यति ॥ १४९ ॥

मतान्तरम्—

अथवा बदरीक्वाथे ध्मातमभ्रं विनिक्षिपेत् ।
मर्दितं पाणिना शुष्कं धान्याभ्रादतिरिच्यते ॥ १५० ॥

मतान्तरम्—

अगस्त्यपुष्पतोयेन पिष्टं शूरणकन्दगम् ।
गोष्ठभूमिगतं मासं जायते रससन्निभम् ॥ १५१ ॥

[ इत्यभ्रशोधनम् ]

---

अशुद्धाभ्रस्य दोषमाह अशुद्धाभ्रेति स्पष्टम् ॥ १४६ ॥

अभ्रस्य शोधनार्थं धान्याभ्रमाह **पादांशेति**—वालुकारहितमभ्रं शालिधान्येन सह कम्बले बद्ध्वा त्रिदिनं नीरे स्थापनीयं ततस्तत् क्लिन्नमभ्रं मर्द्दयेत् यत् तु कम्बलात् गलति तद्धान्याभ्रकमिति ॥ १४७–१४८ ॥

मतान्तरशोधनमाह **त्रिफलेति** । व्योम इत्यभ्रम् ॥ १४९ ॥

अन्यमतमाह अथवेति—ध्मातमभ्रं बदरीक्वाथे निःक्षिपेत् तत आतपसंयोगात् संशोष्य पाणिना मर्द्दयेत् छानयेच्चेत्यर्थः[१] ॥ १५० ॥

मतान्तरमाह अगस्त्यपुष्पेति—अगस्त्यपुष्पं वकपुष्पं तस्य रसेन पिष्टमभ्रकं वन्यशूरणकन्दमध्ये निरुध्य गोगृहभूमितले मासं स्थापयेदिति भावः ॥ १५१ ॥

---

१ छानयेदिति ढालयेदितिवत्प्रयोगः, पावयेत् ।

अथाभ्रमारणम्--

वज्राभ्रकं समादाय निक्षिप्य स्थालिकोदरे।
रम्भादिक्षारतोयेन पचेद् गोमयवह्निना॥ १५२॥
यावत् सिन्दूरसङ्काशं न भवेत् स्थालिकाबहिः।
सेचनीयं ततः क्षीरैस्ततः सूक्ष्मं विचूर्णयेत्॥ १५३॥

मतान्तरम्--

धान्याभ्रकं समादाय मुस्ताक्काथैः पुटत्रयम्।
तद्वत् पुनर्नवानीरैः कासमर्दरसैस्तथा॥ १५४॥
नागवल्लीरसैः सूर्य-क्षीरैर्देयं पृथक् पृथक्।
दिनं दिनं मर्दयित्वा क्काथैर्वटजटोद्भवैः॥ १५५॥
दत्त्वा पुटत्रयं पश्चात् त्रिः पुटेत् वानरीरसैः॥ १५६॥
मोचकन्दरसैः पाच्यं त्रिरात्रं कोकिलाक्षकैः।
रसैः पुटेल्लोध्रकैस्तु क्षीरादेकं पुटेत् पुनः॥ १५७॥
दध्ना घृतेन मधुना स्वच्छया सितया तथा।
एकमेकं पुटं दद्यादभ्रस्यैवं मृतिर्भवेत्॥ १५८॥
सर्वरोगहरं व्योम जायते योगवाहिकम्।
कामिनीमददर्पघ्नं शस्तं पुंस्त्वापघातिनाम्।
वृष्यमायुष्करं शुक्र-वृद्धिसन्तानकारकम्॥ १५९॥

अथ मारकगणः--

तण्डुलीयकबृहतीनागवल्लीतगरपुनर्नवाश्च[1]।
हिलमोचिकामण्डूकपर्णी तिक्ताऽऽखुपर्णिका
मदनार्कावपि लक्षसुतमातृकाभिः सुधीभिरुदितम्॥१६०॥

---

अभ्रमारणमाह वज्राभ्रकमित्यादि—रम्भादिक्षारतोयेनेति वक्ष्यमाणरम्भादिगणोक्तक्षारतोयेन॥ १५२-१५३॥

मतान्तरमाह धान्याभ्रकमित्यादि स्पष्टम्॥ १५४-१५९॥

अथ मारकगणमाह तण्डुलीयकेत्यादि-एभिस्तण्डुलीयकेत्यादिभिः, व्यस्तैः समस्तैर्वा प्रपुटेदित्यर्थः॥ १६०॥

---

१ चतुरूर्द्धं वृत्तम्।८।१२।१६।२० क्रमशः।

मतान्तरम्—

रम्भादिनाऽभ्रं लवणेन पिष्ट्वा चक्रीकृतं तद्दलमध्यवर्त्ति ।
दग्धेन्धनेषु व्यजनानिलेन स्नुह्यर्कमूलाम्बुपटेन सिद्धम् १६१

मतान्तरम्—

धान्याभ्रकस्य भागैकं भागौ द्वौ टङ्कणस्य च ।
पिष्ट्वा तदन्धमूषायां रुद्ध्वा तीव्राग्निना पचेत् ।
स्वभाव-शीतलं चूर्णं सर्वयोगेषु योजयेत् ॥ १६२ ॥

मतान्तरम्—

धान्याभ्रकं दृढं मर्द्यमर्कक्षीरैर्दिनावधि ।
वेष्टयेदर्कपत्रेण चक्राकारन्तु कारयेत् ॥ १६३ ॥
कुञ्जराख्ये पुटे दग्ध्वा सप्तवारान् पुनः पुनः ।
ततो वटजटाक्वाथैस्तद्वद्देयं पुटत्रयम् ।
म्रियते नात्र सन्देहः सर्वयोगेषु योजयेत् ॥ १६४ ॥

मतान्तरम्—

दुग्धत्रयं कुमार्यम्बु गङ्गापत्रं नृमूत्रकम् ।
वटशुङ्गमजारक्तमेभिरभ्रं विमर्दयेत् ॥ १६५ ॥
शतधा पुटितं भस्म जायते पद्मरागवत्
निश्चन्द्रकं भवेत् व्योम शुद्धदेहे रसायनम् ॥ १६६ ॥

मारिताभ्रस्य गुणाः—

निश्चन्द्रं मारितं व्योम रूपं वीर्यं दृढं तनुम् ।
कुरुते नाशयेत् मृत्युं जरारोगकदम्बकम् ॥ १६७ ॥

( इत्यभ्रमारणम् )

---

मतान्तरमाह रम्भादीत्यादि-रम्भादिना वक्ष्यमाणरम्भादिगणेन । व्यजनानिलेनेति व्यजनानिलेन प्रज्वलितेषु दग्धेन्धनेष्वित्यर्थः ॥ १६१ ॥

धान्याभ्रकमित्यादौ-कुञ्जराख्यपुट इति गजपुटे । अन्यत् सुगमम् १६२-१६६

मारिताभ्रस्य गुणमाह निश्चन्द्रेति-यद्यपि निश्चन्द्रमारणमभ्रस्य सामान्येनैव पूर्व्वमुक्तं तथाप्यत्र निश्चन्द्रमिति विशेषणेन निश्चन्द्रकत्वं तस्य विशेषमारणलक्षणमत्र ज्ञेयं । रोगकदम्बकमिति रोगसमूहं सर्व्वरोगहरमिति ॥ १६७ ॥

अथ हरितालपर्य्यायास्तद्भेदाश्च—

हरितालं तालमालं मालं शैलूष-भूषणम् ।
पिञ्जकं रोमहरणं तालकं पीतमित्यपि ।
तालकं पटलं पिण्डं द्विधा तत्राद्यमुत्तमम् ॥ १६८ ॥

अशुद्धहरितालस्य दोषाः—

अशुद्धतालमायुघ्नं कफमारुतमेहकृत् ।
तापस्फोटाङ्गसङ्कोचान् कुरुते तेन शोधयेत् ॥ १६९ ॥

हरितालशोधनम्—

शुद्धं स्यात् तालकं स्विन्न-कुष्माण्डसलिले ततः ।
चूर्णोदके पृथक् तैले तस्मिन् पूते न दोषकृत् ॥ १७० ॥

अन्यच्च—

तालकं कणशः कृत्वा दशांशेन च टङ्गणम् ।
जम्बीरोत्थैर्द्रवैः क्षाल्यं काञ्जिकैःक्षालयेत् पुनः ॥ १७१ ॥
वस्त्रे चतुर्गुणे बद्ध्वा दोलायन्त्रे दिनं पचेत् ।
सञ्चूर्ण्य, आरनालेन दिनं कूष्माण्डजै रसैः ।
स्वेद्यं वा शाल्मलीतोयैस्तालकं शुद्धिमाप्नुयात् ॥ १७२ ॥

अन्यच्च—

तालकं पोट्टलीं बद्ध्वा सचूर्णे काञ्जिके पचेत् ।
दोलायन्त्रेण यामैकं ततः कूष्माण्डजे रसे ॥ १७३ ॥

---

हरितालशोधनमारणादिकमाह **हरितालमित्यादि**-तालकं हि द्विविधं-पत्राख्यं पिण्डञ्च। तयोराद्यं स्वर्णवर्णं गुरु स्निग्धं अभ्रपत्रवत् सपत्रं गुणाढ्यं रसायनञ्च । पिण्डञ्च निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं गुरु स्त्रीपुष्पहारकं स्वल्पगुणञ्च। ताभ्यां पत्राख्यं ग्राह्यं भिषग्भिः । यदत्र मारणजारणाद्यर्थं प्रयोक्तव्यं तदपि पत्राख्यञ्चेति । पटलमिति पत्राख्यं; वंशपत्रेति लोके ॥ १६८ ॥

अशुद्धतालकस्य दोषमाह अशुद्धमित्यादि-आयुर्घ्नमिति मृत्युप्रदम् १६९

**शुद्धमित्यादि**-कूष्माण्डसलिले स्विन्नं शुद्धतालं चूर्णोदके तिलतैले पृथक् क्रमेण यामैकं दोलायां पचेदित्यर्थः ॥ १७० ॥

**तालकमित्यादि**-तालकं क्षुद्रितं कृत्वा वस्त्रतो बद्ध्वा शम्बूकशुक्त्योर्भस्मकृतचूर्णसहितकाञ्चिके दोलायां यामैकं पचेत् । तत कूष्माण्डादिरसै प्रत्येकशो

तिलतैले पचेत् यामं यामं तत् त्रैफले जले ।
दोलायन्त्रे चतुर्यामं पाच्यं शुध्यति तालकम् ॥ १७४ ॥
[ इति शोधनम् ]

अथ हरितालमारणम्—

तालकं कणशः कृत्वा सुशुद्धं हण्डिकान्तरे ।
चूर्णोदकेन सम्पिष्टमपामार्गजटोद्भवैः ॥ १७५ ॥
क्षीरोदकैश्च सम्पिष्टमूर्द्ध्वाधो यावशूकजम् ।
चूर्णं दत्त्वा निरुध्याथ कूष्माण्डैश्च[1] प्रपूरयेत् ॥ १७६ ॥
पुनर्मुखं निरुध्याथ चतुर्यामं क्रमाग्निना ।
पचेदेवं हि तच्चूर्णं कुष्ठादौ परियोजयेत् ॥ १७७ ॥

शोधितहरितालस्य गुणाः—

हरितालं कटु स्निग्धं कषायञ्च विसर्पनुत् ।
तालकं हरते रोगान् कुष्ठमृत्युज्वरादिकान् ।
संशुद्धं कान्तिवीर्य्यौजः कुरुते मृत्युनाशनम् ॥ १७८ ॥

मतान्तरे मारणम्—

अम्लरोलीजलैर्भाव्यं तालं द्वादशयामकम् ।
तथैव निम्बुनीरेण ततश्चूर्णोदकेन च ॥ १७९ ॥
प्रक्षाल्य शालमलीक्षारैर्द्विगुणैः खातमध्यगम् ।
विधाय कवचीयन्त्रं बालुकाभिः प्रपूरयेत् ॥ १८० ॥
द्वादशप्रहरं पक्त्वा स्वाङ्गशीतञ्च चूर्णयेत् ।
खादयेत रक्तिकामेकां कुष्ठश्लीपदशान्तये ॥ १८१ ॥

---

यामैकैकं पचेदिति ॥ १७१–१७४ ॥

अथ हरितालमारणमाह तालकमित्यादि—तच्चूर्णमिति अन्तःशरावोद्ध्वर्लग्नं यत् कुन्दप्रकाशं भस्म तदिति ॥ १७५–१७७ ॥

एवंविधमृतहरितालस्य गुणमाह हरितालमित्यादि–स्पष्टम् ॥ १७८ ॥

मतान्तरमाह अम्लरोलीति—अम्लरोली चाङ्गेरी । अम्लरोलीरसैः निम्बुनीरैस्तथा चूर्णोदकैः प्रत्येकशो द्वादशयामकं भावयेत् ततः प्रक्षाल्य द्विगुणैः शाल्मलीक्षारैः सह कवचीयन्त्रं विधाय द्वादशप्रहरं पचेत् । शीते च रक्तिकामेकां कुष्ठश्लीपदादौ प्रयोजयेदिति ॥ १७९–१८१ ॥

---

१ "कूष्माण्डव स्तुकारुः" अमरः ।

अथ रसमाणिक्यम्—

तालकं वंशपत्राख्यं कूष्माण्डसलिले क्षिपेत्।
सप्तधा वा त्रिधा वाऽपि दध्ना चाम्लेन वा पुनः॥ १८२॥
शोधयित्वा पुनः शुष्कं चूर्णयेत् तण्डुलाकृति।
ततः शरावके पात्रे स्थापयेत् कुशलो भिषक्॥ १८३॥
बदरीपल्लवोत्थेन कल्केन लेपयेद्भिषक्।
अरुणाभमधःपात्रं तावज्ज्वाला प्रदीयते॥ १८४॥
स्वाङ्गशीतं समुद्धृत्य माणिक्याभं भवेद् ध्रुवम्।
तत् रक्तिद्वितयं खादेद् घृतभ्रामरमार्दितम्॥ १८५॥
सम्पूज्य देवदेवेशं कुष्ठरोगाद्विमुच्यते।
स्फुटितं गलितं यच्च वातरक्तं भगन्दरम्॥ १८६॥
नाडीव्रणं व्रणं दुष्टमुपदंशं विचर्चिकाम्।
नासाऽऽस्यसम्भवान् रोगान् क्षतान् हन्ति सुदारुणान्।
पुण्डरीकञ्च चर्माख्यं विस्फोटं मण्डलं तथा॥ १८७॥

अथ सलक्षणमनःशिलायाः पर्यायाः—

मनःशिला च नैपली शिलाह्वा नागजिह्विका।
मनोह्वा कुनटी गौणी करञ्जी करवीरिका।
मनोह्वा त्वोड्पुष्पाभा शस्यते सर्वकर्म्मसु॥ १८८॥

अशुद्धमनःशिलाया दोषाः—

मनःशिला मन्दबलञ्च नूनं करोति जन्तोः शुभपाकहीना।

---

रसमाणिक्यमाह **तालकमित्यादि**—कूष्माण्डसलिले क्षिपेदिति कूष्माण्डरसे सप्तधा त्रिधा वा शोधितं हरितालं भावयेत् एवं दध्नाम्लेनेति। ततः शरावके पात्रे रुद्ध्वा बदरीपत्रकल्केन सन्धि लेपयेत्। ततो हण्डिकामध्ये संस्थाप्य बालुकाभिः प्रपूरयेद्। ततः पात्राधोऽग्निज्वाला तावत् देया, यावत् पात्राधोऽरुणाभं भवतीति। सुशीते च माणिक्याभं भस्म यदुपलभ्यते तत् समुद्धृत्य कुष्ठादौ देयमिति॥ १८२–१८७॥

मनःशिलायाः साभिधानशोधनादिकमाह **मनःशिलेत्यादि**—मनःशिलापि हरितालभेदा; तालकं पीतं मनःशिला रक्तेति॥ १८८॥

अथाशुद्धमनःशिलाया दोषमाह मनःशिलेति—मन्दबलमिति बलह्रासं करो-

मलन्तु बद्धं कुरुते च नूनं सशर्करं कृच्छ्रगदं करोति ॥१८९॥
अश्मरीमूत्रहृद्रोगमशुद्धा कुरुते शिला।
मन्दाग्निं मलदुष्टिञ्च शुद्धा सर्वरुजापहा॥ १९०॥

मनःशिलाशोधनम्—

जयन्तीभृङ्गराजोत्थैः रक्तागस्त्यरसैः शिला।
दोलायन्त्रे दिनं पाच्या यामं छागस्य मूत्रके।
क्षालयेदारनालेन सर्वरोगेषु योजयेत्॥ १९१॥

मतान्तरम्—

मातुलुङ्गरसैः पिष्ट्वा जयानीरैर्मनःशिला।
शृङ्गवेररसैर्वाऽपि विशुध्यति मनःशिला॥ १९२॥

शोधितमनःशिलाया गुणाः—

कटुः स्निग्धा शिला तिक्ता कफघ्नी लखना सरा।
भूतावेशभयं हन्ति कासश्वासहरा शुभा॥ १९३॥

[ इति मनःशिलाशुद्धिः ]

अथ खर्परशोधनम्—

पुष्पाणां रक्तपीतानां रसैः पिष्ट्वा च भावयेत्।
नरमूत्रैश्च गोमूत्रैर्यवाम्लैश्च ससैन्धवैः।
सप्ताहं त्रिदिनं वाऽपि पश्चात् शुध्यति खर्परः॥ १९४॥

---

तीत्यर्थः। पाकहीनेति मन्दाग्निकरी॥ १८९॥

मतान्तरमाह **अश्मरीत्यादि**—शिला मनःशिला। मूत्रं मूत्रकृच्छ्रं। उक्तञ्च सशर्करे कृच्छ्रगदं करोतीति॥ १९०॥

शोधनमाह **जयन्तीत्यादि**-जयन्त्यादीनामान्यतमरसेन दिनं दोलायन्त्रे पक्त्वा काञ्जिकेन क्षालयेत्। अथवा छागमूत्रेण यामं पक्त्वा काञ्जिकेन क्षालयेदिति॥ १९१॥

मतान्तरमाह **मातुलुङ्गेत्यादि**-मातुलुङ्गरसैः पिष्ट्वा जयन्तिकारसैरार्द्रकरसैर्वा पूर्व्वोक्तविधानेन दोलायन्त्रे दिनं पचेदिति भावः॥ १९२॥

एवं शोधितमनःशिलाया गुणमाह–कटुः स्निग्धेत्यादि॥ १९३॥

अथ खर्परशोधनमारणादिकमाह **पुष्पाणामित्यादि**--यवाम्लैरिति यव-

मतान्तरम्—

खर्परः परिसन्तप्तः सप्तवारान् निमज्जितः ।
निम्बुबीजरसे चान्तर्निर्मलत्वमवाप्नुयात् ॥ १९५ ॥

अथ मारणंगुणश्च—

खर्परं पारदेनैव वालुकायन्त्रगं पचेत् ।
चूर्णयित्वा दिनं यावत् शोभनं भस्म जायते ।
नेत्ररोगहरः क्लेदी क्षयहा खर्परो गुरुः ॥ १९६ ॥

[इति खर्परशोधनमारणम्]

अथ सपर्य्यायतुत्थशोधनमारणम्—

तुत्थके तु शिखिग्रीवं हेमसारं मयूरकम् ।
विष्ठया मर्दयेत् तुत्थं मार्जारक-कपोतयोः ॥ १९७ ॥
दशांशं टङ्कणं दत्त्वा पाच्यं मृदुपुटे ततः ।
पुटं दद्यात् पटुक्षौद्रैः किल तुत्थविशुद्धये ॥ १९८ ॥

अन्यच्च—

ओतोर्विष्ठासमं तुत्थं सक्षौद्रं टङ्कणाङ्घ्रियुक् ।
त्रिधा सुम्पुटितं शुद्धं वान्तिभ्रान्तिविवर्जितम् ॥ १९९ ॥

---

काञ्जिकैः । खर्परः दस्ता 'खपरिया' इति ख्यातः ॥ १९४–१९५ ॥

अथ मारणमाह खर्परमित्यादि–खर्परं चूर्णयित्वा समांशेन पारदेन सह वालुकायन्त्रे दिनैकं पचेत् , तेन भस्मोपजायत इति । एवं मृतखर्परस्य गुणमाह नेत्ररोगहर इत्यादि ॥ १९६ ॥

तुत्थकस्य सपर्य्यायशोधनमारणादिकमाह तुत्यक इत्यादि–तुत्थञ्च ताम्रोपधातुः, यथा—तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत् । किञ्चित् ताम्रगुणं तस्माद्वक्ष्यमाणं गुणञ्च तदिति । मार्ज्जारकपोतयोर्व्विष्ठया समं तथा तुत्थं तुत्थात् दशांशं टङ्कणञ्च दत्त्वा मर्द्दयेत् मृदुपुटे पचेच्च । ततः पादांशं सैन्धवं किञ्चिच्च क्षौद्रं दत्त्वा पुनः प्रपुटेदिति ॥ १९७–१९८ ॥

मतान्तरमाह ओतोर्व्विष्ठेति—ओतुर्विड़ालस्तस्य विष्ठा पुरीषं । अङ्घ्रिः पादः ॥ १९९ ॥

अन्यच्च--

गन्धकेन समं तुत्थं तुत्थार्द्धेनार्द्धयामकम् ।
वान्तिभ्रान्ती यदा न स्तस्तदा सिद्धिं विनिर्दिशत् ॥२००॥

गुणाः--

तुत्थं सकटुकक्षारं कषायं विशदं लघु ।
लेखनं भेदि चक्षुष्यं कण्डूकृमिविषापहम् ॥ २०१ ॥

[ इति तुत्थकशुद्धिः । ]

अथ विमलशुद्धिः--

मूत्रारनालतैलेषु गोदुग्धे कदलीरसे ।
कौलत्थे कोद्रवक्काथे माक्षिकं विमलं तथा ॥ २०२ ॥
मुहुः शूरणकन्दस्थं स्वेदयेद्दरवह्निना ।
क्षाराम्ललवणैश्चैव तैलसर्पिःसमन्वितम् ।
पुटत्रयं प्रदातव्यं ततस्तु शोधितं भवेत् ॥ २०३ ॥

मतान्तरम्—

जम्बीरस्य रसैः स्विन्नो मेषशृङ्गीरसैस्तथा ।
रम्भातोयेन वा पाच्यं घस्रं विमलशुद्धये ॥ २०४ ॥

[ इति विमलशुद्धिः । ]

अथ माक्षिकनामानि—

माक्षिके धातुमाक्षिकं तप्तं तापीसमुद्भवम् ।
गरुडो मोक्षिकः पक्षी बृहद्वर्णं इति स्मृतः ॥ २०५ ॥

---

मतान्तरमाह गन्धकेनेति । सममिति सहार्थे, तेन तुत्थार्द्धेन गन्धकेन समं सह तुत्थमित्यर्थः, अर्द्धयामकमित्यत्र पुटेदिति शेषः । पुटनञ्च तावदेव कर्त्तव्यं यावत् वान्त्यादिरहितं स्यादिति ॥ २०० ॥

सिद्धस्य तुत्थस्य गुणमाह-तुत्थमित्यतद्द ॥ २०१ ॥

अथ विमलशुद्धिमाह मूत्रेत्यादि-शूरणकन्दस्थं विमलं मूत्रादीनां व्यस्तसमस्तैर्वा यामैकैमेव दोलायन्त्रे स्वेदयेत ततः चीरादिभिः पुटत्रयं दातव्यम् । अथवा जम्बीरादीनां स्वरसदिनैकं, स्वेदयेदिति ॥ २०२–२०४ ॥

सनामलक्षणमाक्षिकशोधनादिकमाह माक्षिक इत्यादि-माक्षिकं हि द्विविधं स्वर्णमाक्षिकं रौप्यमाक्षिकञ्च । उक्तं हि-माक्षिक द्विविधं प्रोक्तं हेमाह्वं तारमा-

अस्य लक्षणम्—

भङ्गे सुवर्णसङ्काशो मनाक् कृष्णच्छविर्बहिः।
बृहद्वर्ण इति ख्यातो माक्षिकः श्रेष्ठ उच्यते॥ २०६॥

अशुद्धमाक्षिकदोषाः

मन्दाग्निं बलहानिञ्च व्रणं विष्टम्भगात्ररुक्।
कुरुते माक्षिको मृत्युमशुद्धो नात्र संशयः॥ २०७॥

अथ माक्षिकशोधनम्

स्वर्णमाक्षिकचूर्णन्तु वस्त्रे बद्ध्वा विपाचयेत्।
कालमारिष-शालिञ्च-क्काथे-दोलविधानतः।
तदधः पतितं शस्तमेवं शुध्यति माक्षिकम्॥ २०८॥

मतान्तरम्—

माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च।
मातुलुङ्गद्रवैर्वाऽथ जम्बीरोत्थद्रवैः पचेत्॥ २०९॥
लौहपात्रे पचेत् तावत् लौहदर्व्या च चालयेत्।
भासवर्णमयो यावत् तावच्छुध्यति माक्षिकम्॥ २१०॥

मातान्तरम्

माक्षिकस्य चतुर्थांशं गन्धं दत्त्वा विमर्दयेत्।
उरुबूकस्य तैलेन ततः कुर्य्याच्च चक्रिकाम्॥ २११॥
शरावसम्पुटे कृत्वा पुटेद्गजपुटेन तु।
सिन्दूराभं भवेद्भस्म माक्षिकस्य न संशयः॥ २१२॥

---

क्षिकं विमलमिति ख्यातञ्चाग्रे वाच्यं॥ २०५॥

इदानीं स्वर्णमाक्षिकलक्षणादिकमाह-भङ्ग इत्यादि। अशुद्धस्य माक्षिकस्य दोषमाह-मन्दाग्निमित्यादि-स्पष्टम्॥ २०६-२०७॥

स्वर्णमाक्षिकस्य दोषपरिहरणाय शोधनमाह-**स्वर्णमाक्षिकेत्यादि**। स्वर्णमाक्षिकचूर्णं सुक्ष्मवस्त्रे बद्ध्वा कालमारिषस्वरसेन शालिञ्चक्काथेन रसेन वा दोलायन्त्रे विपचेत्, वस्त्रस्य सूक्ष्मावकाशात् यच्चूर्णमधः पतति तत् प्रशस्तमिति॥ २०८॥

मतान्तरमाह—माक्षिकस्येत्यादि। माक्षिकस्य स्वर्णमाक्षिकस्य। चतुर्थांशं चतुर्थभागं उरुबूकस्य एरण्डस्य॥ २०९-२१२॥

शुद्धमाक्षिकस्य गुणाः—

माक्षिकं तिक्तमधुरं मेहार्शःक्रिमिकुष्ठनुत् ।
कफपित्तहरं बल्यं योगवाहि रसायनम् ॥ २१३ ॥
[ इति माक्षिकशोधनम् । ]

अथ सपर्य्यायकाशीशशोधनम्—

काशीशे धातुकाशीशं खेचरं दन्तरञ्जनम् ।
सकृद्भृङ्गाम्बुना स्विन्नं काशीशं निर्मलं भवेत् ॥ २१४ ॥

गुणाः—

काशीशं निर्मलं स्निग्धं श्वित्रनेत्ररुजापहम् ।
पित्तापस्मारशमनं रसवद्गुणकारकम् ॥ २१५ ॥
( इति काशीशशोधनम् । )

अथ कान्तपाषाणनामानि—

राजपट्टं महापट्टं शिखिग्रीवं विराटकम् ॥ २१६ ॥

अथ कान्तपाषाणशुद्धिः—

चूर्णितं कान्तपाषाणं महिषीक्षीरसंयुतम् ।
विपचेदायसे पात्रे गोघृतेन समाहितम् ॥ २१७ ॥
लवणे च तथा क्षारे शोभाञ्जनरसे क्षिपेत् ।
अम्लवर्गस्य तोयेन दिनं घर्मे विभावयेत् ॥ २१८ ॥
तथैव दोलिकायन्त्रे द्विवारं पाचयेत् सुधीः ।

---

मृतमाक्षिकस्य गुणमाह—**माक्षिकमित्यादि**—स्वर्णमाक्षिकञ्च स्वर्णोपधातु स्वर्णानुकल्पं किञ्चिद्धीनगुणं तत इति । उक्तं हि—उपधातु सुवर्णस्य किञ्चित् स्वर्णगुणान्वितं । तथाच काञ्चनाभावे दीयते स्वर्णमाक्षिकं । किञ्च तस्यानुकल्पत्वात् किञ्चिद्धीनगुणं तत इति ॥ २१३ ॥

काशीशशोधनादिकमाह **काशीश इत्यादि**—काशीशं हिराकस इति लोके । तद्द्विविधं धातुकाशीशं पुष्पकाशीशञ्च, धातुकाशीशं हरिद्वर्णं लोहितञ्च, पुष्पकाशीशं शुक्लवर्णं कृष्णञ्च ॥ २१४–२१५ ॥

अथ राजपट्टशोधनादिकमाह—**राजपट्ट इत्यादि**—राजपट्टं कान्तपाषाणम् । तथैव दोलिकायन्त्र इति दोलायन्त्रे महिषीक्षीरादिभिः पचेदिति । दिनं

कान्तपाषाणशुद्धौ तु रसकर्म समाचरेत् ॥ २१९ ॥
( इति कान्तपाषाणशोधनम्। अस्यैव नामान्तरं राजपट्ट इति )
अथ वराटिकालक्षणानि—
पीताभा ग्रन्थिला पृष्ठे दीर्घवृन्ता वराटिका।
सार्द्धनिष्कभरा श्रेष्ठा निष्कभारा च मध्यमा ॥ २२० ॥
पादोननिष्कभारा च कनिष्ठा परिकीर्त्तिता।
रसवैद्यैर्विनिर्दिष्टा सा वराटकसंज्ञका ॥ २२१ ॥
अथ वराटिकाशुद्धिः—
वराटी काञ्जिके स्विन्ना यामाच्छुद्धिमवाप्नुयात्।
गुणाः—
परिणामादिशूलघ्नी क्षयहा ग्रहणीहरा।
कटूष्णा दीपनी वृष्या तिक्ता वातकफापहा ॥ २२२ ॥
मतान्तरे शोधनम्—
भूगर्त्ते च समे शुद्धे पत्तनं स्थापयेत् सुधीः।
तुषेण पूरयेत् तस्याः किञ्चिन्मध्यं भिषग्वरः ॥ २२३ ॥
वराटपूरितां मूषां तन्मध्ये विनिवेशयेत्।
करीषाग्निं ततो दद्यात् पालिकायन्त्रमुत्तमम्।
अनेन म्रियते नूनं वराटं सर्वरोगजित् ॥ २२४ ॥
( इति वराटिकाशुद्धिः। )
अथाञ्जनशुद्धिः—
नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितम्।

---

घर्म्मे विभावयेदिति अम्लवर्गरसेन रौद्रेदिनैकं भावयेदिति ॥ २१६–२१९ ॥

वराटिकाया नामलक्षणशोधनादिकमाह **पीताभेति**–ग्रन्थिलेति ग्रन्थि-युक्ता, सार्द्धनिष्कभरा इति सार्द्धनिष्कैकपरिमिता; एवं सर्व्वत्र ॥२२०–२२॥

वराटिकाशोधनमाह। वराटीत्यादि–काञ्जिके स्विन्नेति दोलायन्त्रे। एवंविधशुद्धवराटिकाया गुणमाह परिणामादीत्यादि ॥ २२२ ॥

मतान्तरमाह भूगर्त्त इत्यादि ॥ २२३–२२४ ॥

नीलाञ्जनमाह **नीलाञ्जनमित्यादि**–नीलाञ्जनमित्युपलक्षणं तेनाञ्जन-पञ्चकं बोध्यम्। अत्राञ्जनानां भेदो नोक्तः। तद्यथा—सौवीरमञ्जनं प्रोक्तं

दिनैकमातपे शुद्धं ततः कार्येषु योजयेत् ॥ २२५ ॥

अथ हिङ्गुलपर्यायाः—

हिङ्गुले हिंगुलुर्याति दरदः शुकतुण्डकः ।
रसगन्धकसम्भूतो हिङ्गुलो दैत्यरक्तकः ॥ २२६ ॥

अथ हिंगुलशोधनम्—

अम्लवर्गद्रवैः पिष्ट्वा दरदो माहिषेण च ।
दुग्धेन सप्तधा पिष्टः शुष्कीभूतो विशुध्यति ॥ २२७ ॥

अन्यच्च—

मेषीदुग्धेन दरदमम्लवर्गैर्विभावितम् ।
सप्तवारं प्रयत्नेन शुद्धिमायाति निश्चितम् ॥ २२८ ॥

अन्यमतम्—

दरदं दोलिकायन्त्रे पक्वं जम्बीरजैर्द्रवैः ।
सप्तवारमजामूत्रैर्भावितं शुद्धिमेति हि ॥ २२९ ॥

अथान्यत्—

आर्द्रकैर्लकुचद्रावैः सप्तधा भावितो यदि ।

---

रसाञ्जनमतः परम् । स्रोतोऽञ्जनं तदन्यच्च पुष्पाञ्जनकमेव च । नीलाञ्जनञ्च तेषान्तु स्वरूपमिह कथ्यते ॥ सौवीरमञ्जनं धूम्रं रक्तपित्तहरं परम् । विषहिक्काक्षिरोगघ्नं व्रणरोपणशोधनम् ॥ रसाञ्जनञ्च पीताभं विषरक्तगदापहम् । श्वासहिक्काहरं बल्यं वातपित्तास्रनाशनम् ॥ स्रोतोऽञ्जनं हिमं स्निग्धं कषायं स्वादु लेखनं । नेत्र्यं हिक्काविषच्छर्दिकफपित्तास्ररोगजित् ॥ पुष्पाञ्जनं सितं स्निग्धं हिमं सर्व्वाक्षिरोगजित् ॥ नीलाञ्जनं गुरु स्निग्धं नेत्रदोषत्रयापहम् । रसायनं सुवर्णघ्नं लौहमारणकारकम् ॥ अञ्जनानि विशुध्यन्ति भृङ्गराजद्रवैर्दिनम् । मनोह्वासदृशं सत्त्वमञ्जनानां समाहरेदितिज्ञेयम् ॥ २२५ ॥

सपर्य्यायहिङ्गुलशोधनादिकमाह **हिङ्गुल इत्यादि**—हिङ्गुलं हि त्रिविधं; यथा—दरदस्त्रिविधःप्रोक्तश्चर्म्मारःशुकतुण्डकः । हंसपादस्तृतीयः स्याद् गुणवानुत्तरोत्तरः । चर्म्मारः शुक्लवर्णः स्यात् सपीतः शुकतुण्डकः । जवाकुसुमसङ्काशो हंसपादो महोत्तमः ॥ इति ॥ २२६ ॥

हिङ्गुलः शुद्धतां याति निर्दोषो जायते खलु ॥ २३० ॥

अथ शुद्धहिङ्गुललक्षणं गुणाश्च –

बिम्ब्याभं हिङ्गुलं दिव्यं रसगन्धकसम्भवम् ।
मेहकुष्ठहरं रुच्यं बल्यं मेधाग्निवर्द्धनम् ॥ २३१ ॥

अथ शिलाजतुनामानि –

शिलाजतुनि शैलेयमद्रं गिरिजमश्मजम् ।
धातुजमश्मजतुकं शैलजं चाश्मसम्भवम् ॥ २३२ ॥

तच्छुद्धिः –

गोदुग्धत्रिफलाभृङ्गद्रवैः पिष्टं शिलाजतु ।
दिनैकं लौहजे पात्रे शुद्धिमायात्यसंशयम् ॥ २३३ ॥

---

शोधनमाह अम्लवर्गेत्यादि-आर्द्रकैरित्यादौ लकुचद्रावैर्डहुकरसैः[1] २२७-२३०

अथ हिङ्गुललक्षणमाह **विम्ब्याभमित्यादि** । विम्ब्याभं पक्वविम्बीफलाभं । दिव्यं श्रेष्ठं । एवंशोधितहिङ्गुलस्य लक्षणमाह मेहकुष्ठेति । रुच्यं रुचिकरम् ॥ २३१ ॥

सपर्य्याय शिलाजतुशोधनमारणादिकमाह **शिलाजतुनीत्यादि**—शिलाजतु च धातुनिः स्रवः उक्तं हि—हेमाद्याः सूर्य्यसन्तप्ताः स्रवन्ति गिरिधातवः । जत्वाभं मृदु मृत्स्नाभं यन्मलं तच्छिलाजतु ॥ तच्च चतुर्व्विधं स्वर्णादीनां मलभेदात् । उक्तं हि—अनम्लञ्च कषायञ्च कटुपाकि शिलाजतु । नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भवः । हेम्नोऽथ रजतात् ताम्रात् वरं कृष्णायसादपि ॥ तेषां लक्षणं गुणाश्च यद्यप्यत्र नोक्तास्तथापि तन्त्रान्तरेऽनुसर्त्तव्याः । यथा—मधुरञ्च सतिक्तञ्च जवापुष्पनिभञ्च यत् । विपाके कटु शीतञ्च ( तिक्तञ्च ) तत् सुवर्णस्य निःस्रवः[2] ॥ राजतं कटुकं शीतं श्वेतं स्वादु विपच्यते । ताम्रात् बर्हिणकण्ठाभं तीक्ष्णोष्णं पच्यते कटु ॥ यत् तु गुग्गुलसङ्काशं तिक्तकं लवणान्वितम् । विपाके कटु शीतञ्च सर्व्वश्रेष्ठं तदायसम् ॥ गोमूत्रगन्धः सर्व्वेषां सर्व्वे कर्म्मसु यौगिकम् । रसायनप्रयोगेषु पश्चिमन्तु विशिष्यते ॥ यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु । विशेषेण प्रशस्यन्ते मला हेमादिधातुजाः ॥ एषां मध्ये चायसः श्रेष्ठत्वात्

---

१ लकुचो लिकुचो डहुः—अमरः । (वडहरु)

२ निस्रवः पुंल्लिङ्गः, जतुनपुंसकम् ।

अथ शुद्धशिलाजतुगुणाः—

शिलाजतु भवेत् तिक्तं कटुकञ्च रसायनम्।
क्षयशोथोदरार्शांसि हन्ति बस्तिरुजां जयेत्॥ २३४॥

अथ सौवीरादिशोधनम्—

सौवीरं टङ्कणं शङ्खं कङ्कुष्ठं गैरिकं तथा।
एते वराटवच्छोध्या भवेयुर्दोषवर्जिताः॥ २३५॥

---

रसायनत्वात् सर्व्वरोगोपशान्तकरत्वाच्च सर्व्वत्रैवाद्रियते। तल्लक्षणं यथा—लौहकिट्टायते वह्नौ विधूमं दह्यतेऽम्भसि। तृणात्यग्रे कृतं श्रष्ठमधो गलति तन्तुवत् इति। साधारणशुद्धिमाह गोदुग्ध इत्यादि। गोदुग्धे तथा त्रिफलाक्वाथे तथा भृङ्गराजद्रवैश्च दिनैकमातपसंयोगात् शिलाजतु शोधयेदित्यर्थः। अत्र यद्यपि सामान्येनैवोक्तं तथापि हारीतोक्तविधानमत्र विशेषतो ज्ञेयम्। तद्यथा—विन्ध्यादौ बहुलं तत् तु तत्र लौहं यतोऽधिकम्। तच्छोधनमृते व्यर्थमेकैकमलमेलनात्॥ शिलाजतु समानीय सूक्ष्मं खण्डं विधाय च। निःक्षिप्यात्युष्णपानीये यामैकं स्थापयेत् सुधीः। मर्द्दयित्वा ततो नीरं गृह्णीयात् वस्त्रगालितम्॥ स्थापयित्वा च मृत्पात्रे धारयेदातपे बुधः। उपरिस्थं घनं यत् स्यात् तत् क्षिपेदन्यपात्रके॥ एवं पुनः पुनर्नीतं द्विमासाभ्यां शिलाजतु। भवेत् कार्य्यक्षमं वह्नौ क्षिप्तं लिङ्गोपमं भवेत्। निर्धूमञ्च ततः शुद्धं सर्व्वकर्म्मसु योजयेदिति॥ केचित् तु तत्र प्रथमतस्तस्य वहिर्मलमपाकर्त्तुं जलेन प्रक्षालनं कर्त्तव्यं, ततस्तदन्तर्गतमृत्तिकासिकतादिदोषदूरीकरणाय हारीतोक्तशिलाजतुशोधनप्रकरणोक्तक्वाथेन भावना देयेत्याहुः। तदुक्तं, शिलाजतु जले धौतं कीटादिदुष्टौषधिदोषविनाशाय अगुरुतुवरीनिम्बपत्रयवगुडूचीघृतैर्धूपयित्वा तद्यथा—शुष्कं चूर्णीकृत्य लौहपात्रे कृत्वा दशमूलकषायं त्रिफलाक्वाथं केवलोष्णोदकं वा प्रक्षिप्य लौहमुषलिकया तरलीकृत्य प्रचण्डातपे स्थापनीयम्। ततस्तु सरवद् यदूर्द्ध्वमुत्तिष्ठेत् तत् पुनर्गृहीत्वा काचादिपात्रे स्थापनीयमित्याहुः। विस्तरस्तु अग्निवेशसंहितायां वाग्भटे च ज्ञेयम्॥ २३२-२३३॥

शोधितशिलाजतुगुणमाह शिलाजतु भवेदित्यादि॥ २३४॥

सौवीरादीनां साधारणशोधनमाह सौवीरमित्यादि—तथा पुनः

---

१ चरके चिकित्सास्थाने प्रथमाध्यायस्य तृतीयपादे।

कङ्कुष्ठादीनां शोधनम्—

कङ्कुष्ठं गैरिकं शङ्खं काशीशं टङ्कणं तथा।
नीलाञ्जनं शुक्तिभेदाः खुल्लकाः सवराटकाः॥ २३६॥

जम्बीरवारिणा स्विन्नाः क्षालिताः कोष्णवारिणा।
शुद्धिमायान्त्यमी योज्याः भिषग्भिर्योगसिद्धये॥ २३७॥

अथ टङ्कणपर्यायाः—

टङ्कणं क्रामणष्टङ्कः सम्यक्क्षारश्च पाचनः।
सुभगो मालतीजातो द्रावी लौहविशुद्धिदः॥ २३८॥

अथ टङ्कणशुद्धिः—

आदौ टङ्कणमादाय काञ्जिकाम्ले विनिक्षिपेत्।
एकरात्रात् समुद्धृत्य रौद्रयन्ते विभावयेत्॥ २३९॥
नरमूत्रगतं टङ्कं गवां मूत्रगतं तथा।
दिनान्ते तत् समुद्धृत्य जम्बीराम्बुगतं ततः॥ २४०॥
जम्बीराम्लात् समुद्धृत्य नारिकेलस्य पात्रके।
मरीचचूर्णसंयुक्तं क्षालयेच्छीत लाम्बुना।
एवं टङ्कं समादाय सर्वरोगेषु योजयेत्॥ २४१॥

गुणाः—

टङ्कणोऽग्निकरो रूक्षः कफघ्नो रेचनो लघुः॥ २४२॥

अथ शङ्खशोधनम्—

अन्धमूषागतं शङ्खं पलमेकं विचक्षणः।
माषार्द्धटङ्कणैर्मिश्रं दण्डयन्त्रेण मारयेत्॥ २४३॥

अथ शुद्धशङ्खगुणाः—

शङ्खः सर्वरुजां हन्ति विशेषादुदरामयम्।

---

कङ्कुष्ठादीनां साधारणशोधनमाह कङ्कुष्ठमित्यादि। जम्बीरवारिणा स्विन्नेति जम्बीररसै र्दोलायन्त्रे स्विन्ना॥ २३५-२३७॥

अथ सपर्य्यायटङ्कणशोधनादिकमाह—टङ्कणमित्यादि—आदावित्यादौ काञ्जिकाम्लेऽम्लकाञ्जिके। एकरात्रादित्यहोरात्रात्॥ २३८—२४२॥

अथ शङ्खशुद्धिमाह अन्धमूषागतमित्यादि—अत्र पचेदिति शेषः। अन्धमूषागतं पक्वं शङ्खं अर्द्धमाषटङ्कणैः सह दण्डयन्त्रेण मारयेदिति। शुद्ध-

शूलाम्लपित्तविष्टम्भ-मेहहृत् वह्निदीपनः ॥ २४४ ॥
[ इति उपरसशोधनाद्यधिकारः । ]

अथ स्वर्णादिशोधनम्—

हेमादिलौहकिट्टान्तं शोधनं मारणं शृणु ।
तैले तक्रे गवां मूत्रे काञ्जिकेऽथ कुलत्थजे ॥ २४५ ॥
तप्ततप्तानि सिञ्चेत तत्तद्द्रावे च सप्तधा ।
एवं स्वर्णादिलौहानि शुद्धिमायान्त्यसंशयम् ॥ २४६ ॥

अशुद्धामृतस्वर्णस्य दोषाः—

सौख्यं वीर्य्यं बलं हन्ति नानारोगं करोति च ।
अशुद्धममृतं स्वर्णं, तस्मात् शुद्धन्तु मारयेत् ॥ २४७ ॥

---

शङ्खस्य गुणमाह शङ्ख इत्यादि । उदरामयं अतिसाररोगम् ॥ २४३-२४४ ॥

स्वर्णादीनां साधारणशोधनमाह **हेमादीत्यादि**—स्वर्णादीनां पत्राणि तप्ततप्तानि पृथक् तैलादिषु सप्तधा सिञ्चेदिति । सप्तधेति सामान्येनैवोक्तम् । यत एकादिशतपर्य्यन्तनिषेको विधीयते । प्रत्येकेन सप्तधेति केचित् । मनाक् तप्तलोहपत्राणि द्विगुणे तद्द्रवे क्षिपेदिति तद्द्रवमानं । तेष्वष्टलौहेषु नागं वङ्गञ्च कथं तप्तं निषेक्तव्यं अल्पतापेन गलतः ? ततश्च स्वल्पभाण्डे कृत्वेवं गलिते ते नागवङ्ग तेषु निषेचिते इति । सद्रवं सर्व्वलौहं दिनमेकं रक्षेत् । रात्रौ च निर्द्रवं नैव रक्षेत् एवं रजनीमिकां विश्रम्य कर्म्मान्तरञ्च समाचरेदिति । इदानीं विशेषशुद्धिमाह । तत्रादौ सुवर्णस्य विशेषशोधनादिकं वक्तव्यम् । यद्यप्यत्र मारणयोग्यसुवर्णस्य लक्षणादिकं नोक्तं तथापि तज्ज्ञानार्थं तत्रान्तरमनुसर्त्तव्यं ; यथा—दाहेऽतिरक्तमथ यच्च सितं छिदायां काश्मीरकान्ति च विभाति निकाषपट्टे । स्निग्धञ्च गौरवमुपैति च यत् तुलायां जानीत देवकनकं मृदुरक्तपीतं । "तच्चैकं रसवेधजं तदपरं जातं स्वयं भूमिजं, किञ्चान्यद्बहुलौहसङ्करभवं चेति त्रिधा काञ्चनं । तत्राद्यं किल पीतरक्तमपरं रक्तं ततोऽन्यद्यथा, गौराभं तदिति क्रमेण गदितं स्यात् पूर्व्वपूर्व्वोत्तमम्"-इति राजनिघण्टुः । मृत्युञ्जयतन्त्रे तु—दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभं । तारशुल्वोज्झितं स्निग्धं कोमलं गुरु हेम सत् ॥ तच्छ्वेतं कठिनं रुक्षं विवर्णं समलं दलं । दाहे च्छेदेऽसितं श्वेतं कषे त्याज्यं लघु स्फुटमिति । अशुद्धामृतस्य च सुवर्णस्य दोषमाह सौख्यमित्यादि ॥ २४५—२४७ ॥

स्वर्णशोधनम्—

मृत्तिकामातुलुङ्गाम्लैर्भावितं पञ्चवासरम् ।
मृद्भस्मलवणाद्धेम शोधयेत् पुटयेत् ततः ॥ २४८ ॥

मतान्तरम्—

वल्मीकमृत्तिका धूमो गैरिकं चेष्टका पटु ।
इत्येता मृत्तिकाः पञ्च जम्बीरैरारनालकैः ॥ २४९ ॥
पिष्ट्वा लेप्यं स्वर्णपत्रं पुटेन तु विशुध्यति ।
धारयेत् स्वर्णपत्रीभिस्त्रिदिनं पञ्चमृत्तिकाः ॥ २५० ॥

[ इति स्वर्णशोधनम् ]

अथ स्वर्णमारणम्—

माक्षिकं नागचूर्णञ्च पिष्टमर्करसेन च ।
हेमपत्रं पुटेनैवं म्रियते क्षणमात्रतः ॥ २५१ ॥

मतान्तरम्—

सुशुद्धं पारदं दत्त्वा कुर्य्यात् यत्नेन पीठिकाम् ।
दत्त्वोर्द्ध्वाधो नागचूर्णं पुटेन म्रियते ध्रुवम् ॥ २५२ ॥

मतान्तरम्—

गलितस्य सुवर्णस्य षोडशांशेन सीसकम् ।
योजयित्वा समुद्धृत्य निम्बुनीरेण मर्दयेत् ॥ २५३ ॥
गोलं कृत्वा गन्धचूर्णं समं दद्यादुपर्य्यधः ।
शरावसम्पुटे कृत्वा पुटेत् त्रिंशद्वनोपलैः ।
एवं मुनिपुटैर्हेम नोत्थानं लभते पुनः ॥ २५४ ॥

---

दोषपरिहारार्थं शोधनमाह **मृत्तिकेति**—मृत्तिका पञ्चमृत्तिका, मातुलुङ्गाम्लैर्मातुलुङ्गरसैः ॥ २४८ ॥

मतान्तरमाह **वल्मीकेत्यादि**—धूम इति धूममृत्तिका कृष्णमृत्तिकेति ख्याता। पटु पांशुजलवणम्। जम्बीरैर्जम्बीररसैः। पुटेनेति लघुपुटेन २४९-२५०

अथ स्वर्णमारणमाह **माक्षिकमित्यादि**—हेमपत्रमिति कण्टकवेध्यं स्वर्णपत्रं। शोधितस्वर्णमाक्षिकचूर्णं तथा सीसकचूर्णञ्च अर्कक्षीरेण संमर्द्य तेन स्वर्णपत्रं प्रलिप्य तं मूषायां संस्थाप्य प्रपुटेदिति ॥ २५१ ॥

मतान्तरमाह **सुशुद्धमित्यादि**—सुशुद्धं पारदं स्वर्णात् द्विगुणं दत्त्वा पीठिकां कुर्य्यात्, तदूर्द्ध्वाधः सीसकचूर्णं षोडशांशं दत्त्वा मूषायां प्रपुटेदिति ॥ २५२—२५४ ॥

मतान्तरम्—

शुद्धसूतसमं स्वर्णं खल्वे कृत्वा तु गोलकम् ।
ऊर्ध्वाधो गन्धकं दत्त्वा सर्वतुल्यं निरुध्य च ॥ २५५ ॥
त्रिंशद्वनोपलैर्दद्यात् पुटान्येवं चतुर्दश ।
निरुत्थं जायते भस्म गन्धो देयः पुनः पुनः ॥ २५६ ॥

अथ शुद्धस्वर्णगुणाः—

कषायतिक्तमधुरं सुवर्णं गुरु लेखनम् ।
हृद्यं रसायनं बल्यं चक्षुष्यं कान्तिदं शुचि ॥ २५७ ॥
आयुर्मेधावयःस्थैर्य-वाग्विशुद्धिस्मृतिप्रदम् ।
क्षयोन्मादगराणाञ्च कुष्ठानां नाशनं परम् ॥ २५८ ॥

[ इति स्वर्णमारणम् ]

अथ शुद्धरजतलक्षणम्—

दग्धोत्तीर्णं सुशीतं यन्निर्मलं कुन्दसन्निभम् ।
गुरु स्निग्धं कुमारञ्च तारमुत्तममिष्यते ॥ २५९ ॥

अथ अशुद्धरजतदोषाः—

आयुः शुक्रं बलं हन्ति रोगसङ्घं करोति च ।
अशुद्धञ्चामृतं तारं, शुद्धं मार्यमतो बुधैः ॥ २६० ॥

---

मतान्तरमाह **शुद्धसूतेति**—कण्टकवेध्यं स्वर्णपत्रं तुल्येन सूतेन समं मेलयेत्, ततो गोलकं कुर्य्यात् । आदौ अर्द्धांशं गन्धकं पात्रोपरि विन्यस्य ततो गोलकं स्थापयेत्, तदुपरि गन्धकमर्द्धं निक्षिप्य भाण्डमुखं रुद्ध्वा पुटो देयः, एवं चतुर्दशपुटा देयाः । प्रतिपुटे तु तुल्यांशं गन्धकं प्रदातव्यमिति ॥ २५५—२५६ ॥

मृतसुवर्णस्य गुणमाह **कषायमित्यादि**—कषायतिक्तमधुरामिति कषायादित्रिरसप्रधानम् ॥ २५७—२५८ ॥

अथ रजतशोधनादिकमाह । तत्र मारणयोग्यं रजतमाह **दग्धोत्तीर्णमित्यादि** । अग्नौ दग्धे सति यत् सुशीतं कुन्दसन्निभममलं तद्दग्धोत्तीर्णमिति । तन्त्रान्तरे तु—गुरु स्निग्धं मृदु श्वेतं दाहच्छेदधनक्षमं । वर्णाढ्यं चन्द्रवत् स्वच्छं तारं नवगुणं शुभं ॥ अथायोग्यलक्षणमाह—कठिनं कृत्रिमं रूक्षं रक्तं पीतदलं लघु । दाहच्छेदघनैर्नष्टं रूप्यं दुष्टं प्रकीर्त्तितमिति । अथाऽशुद्धस्य तारस्य दोषमाह **आयुरित्यादि** ॥ २५९—२६० ॥

---

१ पुटशब्दोऽत्रपुन्नपुंसकोभयालिङ्गः प्रयुक्तः ।

अथ रजतशोधनम्—

नागेन क्षारराजेन द्रावितं शुद्धिमृच्छति ।
रजतं दोषनिर्मुक्तं किंवा क्षाराम्लपाचितम् ॥ २६१ ॥

इति रजतशोधनम् ।

अथ रजतमारणम्—

माक्षिकं गन्धकञ्चैवमर्कक्षीरेण मर्दयेत् ।
तेन लिप्तं रूप्यपत्रं पुटेन म्रियते ध्रुवम् ॥ २६२ ॥

मतान्तरम्—

कण्टवेध्ये तारपत्रे दत्त्वा द्विगुणहिंगुलम् ।
पातयन्त्रे रसो ग्राह्यो रजतं मृतमुच्यते ॥ २६३ ॥

मतान्तरम्—

तालं गन्धं रौप्यपत्रं मर्दयेत् निम्बुकद्रवैः ।
त्रिपुटैश्च भवेद्भस्म योज्यमेतद्रसादिषु ॥ २६४ ॥

मतान्तरम्—

तारपत्रं चतुर्भागं भागैकं शुद्धतालकम् ।
मर्द्यं जम्बीरजैर्द्रावैस्तारपत्राणि लेपयेत् ॥ २६५ ॥
रुद्ध्वा त्रिभिः पुटैः पाच्यं पञ्चविंशद्वनोपलैः ।
म्रियते नात्र सन्देहो गन्धो देयः पुनः पुनः ॥ २६६ ॥

अथ शुद्धरजतगुणाः—

शीतं कषायं मधुरमम्लं वातप्रकोपजित् ।
दीपनं बलकृत् स्निग्धं गुल्माजीर्णविनाशनम् ।
आयुष्यं दीर्घरोगघ्नं रजतं लेखनं स्मृतम् ॥ २६७ ॥

इति रजतमारणम् ।

---

अथ शोधनमाह **नागेनेत्यादि**—क्षारराजेनेति टङ्कणक्षारेण ॥ २६१ ॥

अथ मारणमाह **माक्षिकमित्यादि**—स्वर्णमाक्षिक-गन्धक-रौप्याणां तुल्यो भागः । पुटनमत्र मूषायाम् ॥ २६२ ॥

मतान्तरमाह **कण्टवेध्यमित्यादि**—पातयन्त्र इत्यूर्द्ध्वं पातनायन्त्रेण । एवंविधमृतस्य रौप्यस्यगुणमाह शीतमित्यादि ॥ २६३—२६७ ॥

अथ अशुद्धताम्रदोषाः—

न विषं विषमित्याहुस्ताम्रञ्च विषमुच्यते ।
एको दोषो विषे त्वष्टौ दोषास्ताम्रे प्रकीर्त्तिताः ॥ २६८ ॥
भ्रमो मूर्च्छा विदाहश्च उत्क्लेद-शोषवान्तयः ।
अरुचिश्चित्तसन्ताप एते दोषा विषोपमाः ।
तस्माद्विशुद्धं ताम्रं हि ग्राह्यं रोगोपशान्तये ॥ २६९ ॥

अथ ताम्रशुद्धिः—

पटुना रविदुग्धेन ताम्रपत्राणि लेपयेत् ।
अग्नौ सन्ताप्य निर्गुण्डी-रसे सिञ्चेत् पुनः पुनः ॥ २७० ॥

मतान्तरम्—

गोमूत्रेण पचेद्यामं ताम्रपत्रं दृढाग्निना ।
शुध्यते नात्र सन्देहो मारणञ्चात्र कथ्यते ॥ २७१ ॥

इति ताम्रशोधनम् ।

अथ ताम्रमारणम्—

सूतमेकं द्विधा गन्धं यामं मर्द्यन्तु कन्यया ।
द्वयोस्तुल्यं ताम्रपत्रं लिप्त्वा स्थाल्यां निधापयेत् ॥ २७२ ॥
सम्यक् शूरणजैः सार्द्धं पार्श्वे भस्म निधापयेत् ।
चतुर्यामं पचेच्चुल्यां पात्रपृष्ठे सगोमये ॥ २७३ ॥
जलं पुनः पुनर्देयं स्वाङ्गशीतं विमर्दयेत् ।

---

ताम्रशोधनादिकमाह न **विषमित्यादि**—शोधनयोग्यताम्रस्य लक्षणं यद्यप्यत्र नोक्तं तथापि प्रयोगशिष्टार्थं तल्लक्षणं विशेषतो ज्ञेयम्; यथा—जवाकुसुमसङ्काशं स्निग्धं मृदु घनं क्षमं । लोहनागोज्झितं ताम्रं मारणाय प्रशस्यते ॥ कृष्णरुक्षमतिस्तब्धं श्वेतञ्चापि घनासहं । लौहनागयुतञ्चापि शुल्वं दुष्टं प्रकीर्त्तितमिति । ताम्रञ्च विषमिति अशुद्धताम्रं विषवद्गुणकारकमिति भावः । ताम्रस्याष्टौ दोषानाह भ्रम इत्यादि । शोधनप्रयोजनमाह **तस्मादित्यादि** ॥ २६८—२६९ ॥

शोधनमाह **पटुनेति**—पटुना सैन्धवेन रविदुग्धेनार्कदुग्धेन । अग्नौ सन्ताप्येति तप्ततप्तानि ताम्रपत्राणि सिन्धुवाररसे सप्तधा अभिषिक्तानि ॥२७०॥

मतान्तरमाह **गोमूत्रेणेति**—लवणलिप्तं ताम्रपत्रं दिनत्रयानन्तरं दृढा-

म्रियते नात्र सन्देहः सर्वरोगेषु योजयेत् ॥ २७४ ॥

मतान्तरम्—

जम्भाम्भसा[1] सैन्धवसंयुतेन
सगन्धकं स्थापय शुल्वपत्रम् ।
पक्वायमानं पुटयेत् सुयुक्त्या
वान्त्यादिकं यावदुपैति शान्तिम् ॥ २७५ ॥

अन्यमतम्—

शुद्धं ताम्रदलं विमर्द्य पटुना क्षारेण जम्बीरजैः
नीरैर्घस्त्रमिदं स्नुगर्कपयसा लिप्तं धमेत् सप्तधा ।
निर्गुण्ड्यम्बु हिमं रसेन्द्रकलितं दुग्धाज्यगन्धेन तत्
तुल्येनाथ मृतं भवेत् सुपुटितं पञ्चामृतेन त्रिधा ॥ २७६ ॥

अथ शुद्धताम्रगुणाः—

वान्तिभ्रान्तिविवर्जितं क्षयरुजाकुष्ठानि पाण्डवामयं
शूलं मेहगुदांकुरानिलगदानुक्तानुपानैर्जयेत् ।
गुञ्जामात्रमिदं ततो द्विगुणितं तच्छुद्धकायेन चेत्
भुक्तः स्थौल्यजराऽपमृत्युशमनं पथ्याशिना वत्सरात् ॥२७७॥
ताम्रमुष्णं गरहरं यकृत्प्लीहोदरापहम् ।

---

ग्निना गोमूत्रेण सह याममात्रं पचेदित्युपदिशन्ति वृद्धाः । अथ मारणमाह **सूतमेकमित्यादि** स्पष्टम् ॥ २७१—२७४ ॥

मतान्तरमाह **जम्भाम्भसेति**—ताम्रतुल्यं सैन्धवं गन्धकञ्च संगृह्य जम्बीररसेन मर्दयेत्, तेन ताम्रपत्रं लेपयेत् ततः स्थालीमध्ये संस्थाप्य स्वल्पशरावेणाच्छाद्य सन्धिं लेपयेत्, ततो वालुकाभिरुद्ध्वं मापूर्य्य विपचेत्, मृते च सञ्चूर्ण्य पञ्चगव्यैर्वारम्वारं प्रपुटेद्यावद्वान्त्यादिशान्तिमुपैतीति ॥ २७५ ॥

मतान्तरमाह **शुद्धमित्यादि**—सैन्धवं क्षारत्रयञ्च ताम्रतुल्यं संगृह्य जम्बीररसैस्तथा स्नुह्यर्कदुग्धेन सह मर्दयेत् । तेन लिप्तं ताम्रपत्रं सप्तधा धमेत् निर्गुण्डीरसैश्च सिञ्चेत् । यत् गैरिकाभचूर्णमधः पतति तत् संगृह्य प्रक्षाल्य तुल्येन गन्धकेन सूतेन च सम्मर्द्य दुग्धाज्याभ्यां पीठिकां कृत्वा प्रपुटेत्, ततः पञ्चामृतेन त्रिधा पुटेदिति ॥ २७६ ॥

एवंविधमृतताम्रस्य गुणमाह **वान्तिभ्रान्तीत्यादि**—गुदाङ्कुरमर्शोरोगं ।

---

[1] स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ।

क्रिमिशूलामवातघ्नं ग्रहण्यर्शोऽम्लपित्तजित् ॥ २७८ ॥

इति ताम्रमारणम्

अथ पित्तलकांस्ययोः शोधनादिकम्—

पित्तलञ्च तथा कांस्यं ताम्रवत् मारयेत् पृथक् ।
ताम्रवच्छोधनं तेषां ताम्रवत् गुणकारकम् ॥ २७९ ॥

[ इति पित्तलकांस्यशोधनमारणम् ]

अथ नागवङ्गयोः शोधनम्—

नागवङ्गे च गलिते रविदुग्धेन सेचिते ।
त्रिवारान् शुद्धिमायातः सच्छिद्रे हण्डिकान्तरे ॥ २८० ॥

मतान्तरम् —

वङ्गं चूर्णोदके स्विन्नं यामार्द्धेन विशुध्यति ॥ २८१ ॥

[ इति नागवङ्गशुद्धिः ]

अथ सीसकमारणम्—

भुजङ्गममगस्त्यस्य पिष्ट्वा पत्रं प्रलेपयेत् ।
तत्र संविद्रुते नागे वासाऽपामार्गसम्भवम् ॥ २८२ ॥
क्षारं विमिश्रयेत् तत्र चतुर्थांशं गुरूक्तितः ।
प्रहरं पाचयेच्चुल्यां वासादर्व्या च चालयेत् ॥ २८३ ॥
तत उद्धृत्य तच्चूर्णं वासानीरेण मर्दयेत् ।
एवं सप्तपुटैर्नागं सिन्दूरं जायते ध्रुवम् ॥ २८४ ॥

---

गुञ्जामात्रमिदमिति रोगोपशमनार्थं गुंजामात्रं ताम्रं प्रयोक्तव्यं । रसायनार्थञ्च गुजाद्वयमिति ॥ २७७—२७८ ॥

कांस्यपित्तलयोः शोधनमारणादिकमाह **पित्तलञ्चेत्यादि**—स्पष्टम् ॥२७९॥

नागवङ्गयोः शोधनमाह **नागवङ्ग इति**—गलिते ते नागवङ्गे सच्छिद्रहण्डिकान्तरनिविष्टे त्रिवारं चार्कक्षीरेणाभिषिक्त इति ॥ २८० ॥

वङ्गशोधनमाह **वङ्गमिति**—वङ्गपत्रं चूर्णोदके यामार्द्धं दोलायन्त्रे स्वेदयेदिति ॥ २८१ ॥

अथ नागमारणमाह **भुजङ्गममिति**—भुजङ्गमं सीसकं । अगस्त्यं वकपुष्पं । द्राविते नाग इति पर्णागस्त्ययोः पत्रालिप्तं सीसकं हण्डिकान्तर्निवेश्याग्नौ प्रतापयेत् गलिते सति वासकापामार्गयोः क्षारं नागात् चतुर्थांशं वारंवारं क्षिपेत् एवं प्रहरद्वयं पक्त्वा उद्धृत्य वासकरसैर्म्मर्द्दयेत् ततः सप्तधा पुटेदिति ॥ २८२—२८४ ॥

अन्यमतम्—

त्रिभिः कुम्भीपुटैर्नागो वासारसविमर्दितः।
सशिलो भस्मतामेति तद्रजः सर्वमेहजित्॥ २८५॥
दशनागबलं धत्ते वीर्य्यायुःकान्तिवर्द्धनम्।
मेहान् हन्ति हतं नागं सेव्यं वङ्गञ्च तद्गुणम्॥ २८६॥

अथ शुद्धनागगुणाः—

तारस्य रञ्जनो नागो वातपित्तकफापहः।
ग्रहणीकुष्ठगुल्मार्शःशोषव्रणविषापहः॥ २८७॥

[ इति नागमारणम्। ]

अथ वङ्गमारणम्—

वङ्गं सतालमर्कस्य पिष्ट्वा दुग्धेन सम्पुटेत्।
शुष्काश्वत्थभवैर्वल्कैः सप्तधा भस्मतां नयेत्॥ २८८॥

मतान्तरम्—

विशुद्धवङ्गपत्राणि द्रावयेत् हण्डिकान्तरे।
अपामार्गोद्भवं चूर्णं तत्तुल्यं तत्र मेलयेत्॥ २८९॥

स्थूलाग्रया लौहदर्व्या शनैस्तदभिमर्दयेत्।
यावद्भस्मत्वमाप्नोति तावन्मर्द्यन्तु पूर्ववत्॥ २९०॥

---

मतान्तरमाह **त्रिभिरित्यादि**—सशिलः मनःशिलया सहितः, कुम्भीपुटैर्गजपुटैः। एवंविधमृतस्य सीसकस्य गुणमाह सर्व्वमेहजिदित्यादि। अथ सीसकगुणं वङ्गेऽप्यतिदिशति वङ्गञ्च तद्गुणमिति॥ २८५–२८६॥

अथ वङ्गशोधनादिकमाह **वङ्गमित्यादि**।—यद्यप्यत्र मारणयोग्यं वङ्गं नोक्तं तथापि दोषलवङ्गपरिहारार्थं तल्लक्षणं विशेषतो ज्ञेयम्। यथा—श्वेतं मृदु लघु स्वच्छं स्निग्धमुष्णसहं हिमम्। सूत्रपत्रकरं कान्तं त्रपुश्रेष्ठमुदाहृतम्॥ क्षुरकं मिश्रकञ्चापि द्विविधं वङ्गमुच्यते। उत्तमं क्षुरकं तत्र मिश्रकं त्वहितम् मतमिति॥ वङ्गमित्यादि। हरितालं वङ्गञ्च समभागं गृह्णीयात्, अर्कदुग्धेन हरितालं निष्पिष्य तेन वङ्गपत्रं लेपयेत्। ततोऽश्वत्थस्य शुष्कवल्कलैः सप्तधा वेष्टयित्वा प्रपुटेत्। एवं पुटैकेन भस्मतां याति॥ २८८॥

मतान्तरमाह **विशुद्धवङ्गपत्राणीत्यादि**-विशुद्धवङ्गपत्राणि हण्डिकामध्ये निःक्षिप्य चाग्नौ प्रतापयेत्। गलिते सति तुल्यांशमपामार्गक्षारं वारं-

ततस्त्वेकीकृतं चूर्णं कृत्वा चाङ्गारवर्जितम्।
नूतनेन शरावेण रोधयेच्च भिषग्वरः।
पश्चात् तीव्राग्निना पक्कं वङ्गभस्म भवेद् ध्रुवम्॥ २९१॥

मतान्तरम्—

वङ्गं खर्परके कृत्वा चुल्ल्यां संस्थापयेत् सुधीः।
द्रवीभूते पुनस्तस्मिन् चूर्णान्येतानि दापयेत्॥ २९२॥
प्रथमे रजनीचूर्णं द्वितीये च यमानिकाम्।
तृतीये जीरकञ्चैव ततश्चिञ्चात्वगुद्भवम्॥ २९३॥
अश्वत्थवल्कलोत्थञ्च चूर्णं तत्र विनिक्षिपेत्।
एवं विधानतो वङ्गं म्रियते नात्र संशयः॥ २९४॥

गुणाः—

वङ्गं तिक्ताम्लकं रूक्षं किञ्चिद्वातप्रकोपणम्।
मेदः श्लेष्मामयघ्नञ्च क्रिमिघ्नं मेहनाशनम्॥ २९५॥

[ इति वङ्गमारणम्। ]

अथ लौहशोधनम्—

तप्तानि सर्वलौहानि कदलीमूलवारिणि।

---

वारं दत्त्वा लौहदर्व्विकया मर्द्दयेत् यावत् भस्मतामाप्नोति। ततो जले वारंवारं प्रक्षाल्य चाङ्गाररहितं कुर्य्यात्। तत आतपे संशोष्य दुग्धेन मर्द्दयेत्। तदनु नूतनशरावद्वयान्तर्निहितं कृत्वा सन्धिमालिप्य मृत्तिकावस्त्रैरावेष्ट्य तीव्राग्निना पचेदिति॥ २८९–२९१॥

**वङ्गमित्यादि**–वङ्गं स्थालीमध्ये संस्थाप्य चाग्नौ प्रतापयेत्। द्रवीभूते च प्रथमं तुल्यांशं हरिद्राचूर्णं, देयं किञ्चित् विश्राम्य तदनन्तरं यमानिकाचूर्णं तत्तुल्यं प्रक्षेप्यं, एवं सर्व्वत्र। चिञ्चात्वगुद्भवमिति चिञ्चायास्त्वग्भस्म, एवमश्वत्थवल्कलोद्भवं क्षारं प्रदेयमिति। एवं मृतवङ्गस्य गुणमाह **वङ्गमित्यादि**॥ २९२–२९५॥

इदानीं लौहशोधनमारणादिकमाह **तप्तानीति**—सर्व्वलौहानीति सर्व्वाणि कान्तपाण्डिवज्रादीनि। यद्यप्यत्र लौहशोधनं सामान्येनैवोक्तं तथापि पातञ्जलोक्तशोधनविधिना लौहं निर्म्मलं कार्य्यं। अन्यथा तदेवं सुशोधितं न स्यात्। उक्तं हि—लौहं प्रथमतः शाणादिना निर्म्मलीकृत्य पत्तलं कार्य्यं, तदनु चाङ्गेरीमातुलुङ्गाम्लवेतसेनाम्लयित्वा प्रत्येकेन सप्तवारमातपे संशोध्य

**सप्तधा त्वभिषिक्तानि शुद्धिमायान्त्यनुत्तमाम् ॥ २९६ ॥**

**मतान्तरम्—**

**त्रिफलाऽष्टगुणे तोये त्रिफला षोडशं पलम् ।**
**तत्क्वाथे पादशेषे तु लौहस्य पलपञ्चकम् ॥ २९७ ॥**
**कृत्वा च तप्तपत्राणि सप्तवारं निषेचयेत् ।**

---

ततः काञ्जिकादौ दिनद्वयं त्रयं वा स्थाप्यं, एवमम्लभावनां विधाय तदनु गोमूत्रपिष्टत्रिफलाकल्केनालिप्य आतपे शोषणीयं । ततश्च मनःशिलावल्मीकमृत्तिकाकुठारिकामूलचाङ्गेरीश्वेतदूर्व्वासैन्धवैश्च जले पिष्टैः क्रमेण प्रलिप्य आतपे शोषणीयं, ततश्च पत्तलं निर्म्मलं कृत्वा लौहमम्लीकृतं पुनः मूत्रपिष्टत्रिफलया वारिपिष्टमनोह्वया भावितं तत् भावयेत् । तदनु भस्त्रया वह्निं ध्मापयित्वा नातितप्तं क्वत्वा लौहापेक्षया द्विगुणेषु गव्यदुग्धकाञ्जिकगोमूत्रत्रिफलाक्वाथेषु पृथक् वारत्रयं निर्व्वापणीयं अथवा तप्तं कृत्वा सप्तवारं कदलीमूलवारिणि चाभिषिञ्चेत् । निषेके मात्रा च—लौहपत्रं मनाक् तप्तं द्विगुणे तद्रसे क्षिपेत् । निषेक एष निर्द्दिष्टो निषेकार्थैकवादिभिरिति । तदेवं निषेकं विधाय रात्रिमेकां विश्राम्य पुनरपि स्वच्छकाञ्जिकमात्रे लौहनिषेकं कर्त्तव्यम् । तदनु मारणादिषु योजयेदिति । एवंशोधितस्य लौहस्य पलपञ्चकं गृहीत्वा लौहार्द्धभागं षोडशांशं वा स्वर्णमाक्षिकचूर्णं त्रिफलाक्वाथेनालोड्य लेपयेत् । तदनु कुठारच्छिन्नात्रिफलापराजितास्थिसंहारहस्तिकर्णपलाशमूल-शतावरी-केशराज-शालिमूल-कुलिशमूल पुनर्नवा-भृङ्गराजैर्भेषजैः षोडशांशैरालिप्तं आध्मापितभस्त्रमुक्तपवनेन प्रज्वालितवह्नौ स्थापयेत्, धूलिमत् सर्व्वमस्वच्छसलिलञ्च सर्व्वथा विवर्ज्जयेदिति । यदा गलति लौहं तदा यथोक्तत्रिफलाक्वाथे निःक्षिपेत् । एवं सति यन्न मृतं तत्पुनरपि ध्मात्वा त्रिफलाक्वाथे क्षेपणीयं एवं सप्तवारकृते सति यन्न मृतं तत् परित्याज्यमलौहत्वात्, उक्तं हि—सप्तवारं तथा लौहं पूर्व्ववत् पूर्व्वभेषजैः । ध्मात्वा ततः समुत्थाप्य निःक्षिपेत् त्रफलाम्भसि । एवं नामात्र यो लौहो न मृतस्त्याज्य एव स इति ॥ २९६ ॥

लौहनिर्व्वापणार्थं यथा त्रिफलाक्वाथं कर्त्तव्यं तदाह **त्रिफलाष्टगुण इति**—ध्मातलौहनिर्व्वापणार्वशिष्टं त्रिफलाक्वाथ भानुपाकार्थं स्थापनीय-

एवं प्रलीयते दोषो गिरिजे ! लौहसम्भवः ॥ २९८ ॥

इति लौहशोधनम् ।

निरुत्थीकरणोपायः—

भानुपाकात् तथा स्थाली-पाकाच्च पुटपाकतः ।
निरुत्थो जायते लौहो यथोक्तफलदो भवेत् ॥ २९९ ॥

अथ भानुपाकविधिः—

लौहे दृषदि लौहञ्च मुद्गरेण हतं मुहुः ।
कृत्वाम्बुगलितं शुद्धं जलेन त्रैफलेन वा ॥ ३०० ॥
क्षालयेद्बहुशः पश्चात् कृत्वा द्रवान्तरं पृथक् ।
शोषितं भानुभिर्भानोर्भानुपाके प्रयोजयेत् ॥ ३०१ ॥
क्षालने भानुपाके तु लौहतुल्यं फलत्रिकम् ।
जलं द्विगुणितं दत्त्वा चतुर्भागावशेषितम् ॥ ३०२ ॥
एवमुक्तं फलक्वाथ-जलं दत्त्वा पुनः पुनः ।
शोषयेत् सूर्य्यतेजोभिर्निरन्तरमहस्त्रयम् ॥ ३०३ ॥
अथवा तत्र तत्क्वाथं दत्त्वा दत्त्वा भिषग्वरः ।
सप्तसप्तविधैरेव सप्त वारान् विशोधयेत् ॥ ३०४ ॥

[ इति भानुपाकविधिः । ]

---

मिति ॥ २९७–२९८ ॥

एवं मृतस्य लौहस्य भानुपाकादिभिर्निरुत्थीकर्त्तव्यं । निरुत्थीकरणहेतुमाह **भानुपाकादित्यादि** ॥ २९९ ॥

भानुपाकविधिमाह **लौह इत्यादि**—जारणानन्तरं लौहोदूखले लौहमुद्गरेण मुद्गसन्निभं सन्चूर्ण्य सलिलं त्रिफलाक्वाथं वा बहुशो दत्त्वा वारंवारं प्रक्षाल्य चाङ्गाररहितं कुर्य्यात् । ततोऽग्नौ वाऽऽतपे शुष्कीकृत्य तीक्ष्णलौहखल्ले मर्द्दयेत् । ततो यथोक्तत्रिफलाक्वाथेन सह भानुपाके योजयेत् ॥ ३००–३०१ ॥

क्षालनार्थं भानुपाकार्थं वा कियन्माना त्रिफला ग्राह्या जलं वा कियन्मानं तदाह **क्षालन इत्यादि**—निरन्तरमहस्त्रय मिति ।—एवं कृतं क्वाथं निरन्तरं त्रिदिनं दत्त्वा सूर्य्यांशुभिः शोषयेत् । अथवा क्वाथं सप्तधा विभज्य सप्तवारं दत्त्वा शोषयेत् । एवं सप्तधा कुर्य्यादिति भावः॥३०२–३०३

अथ स्थालीपाकविधिः—

इत्थमादित्यपाकान्ते स्थाल्यां पाकमुपाचरेत् ।
स्थालीपाके फलं ग्राह्यमयसस्त्रिगुणीकृतम् ॥ ३०५ ॥
तस्य षोडशिकं तोयमष्टभागावशेषितम् ।
मृदुमध्यकठोराणामन्येषामयसा समम् ॥ ३०६ ॥
क्वथनीयं समादाय चतुरष्टौ च षोडश ।
गुणानां स्थाप्यते तोयं शेषयेदयसा समम् ॥ ३०७ ॥
स्वरसस्यापि लौहेन स्थालीपाके समानता ।
स्थाल्यां क्वाथादिकं दत्त्वा यथाविधि विनिर्मितम् ।
पाकेन क्षीयते यस्मात् स्थालीपाक इति स्मृतः ॥ ३०८ ॥
हस्तिकर्णपलाशस्य मूलञ्च शतमूलिका ।
भृङ्गराजाख्यराजानामेषां निजरसैः सह ॥ ३०९ ॥
मिलित्वा वा विधातव्यं स्थालीपाके फलादनु ।

---

भानुपाकानन्तरं स्थालीपाकः कर्त्तव्यः। तत्र कियत्त्रिफलामानं कर्त्तव्यं कियन्मानं वा जलं देयमित्यत आह **स्थालीपाक** इत्यादि । यथानिर्द्दिष्ट-द्रव्याणां मध्ये लौहोद्दिष्टजनस्य यद्दोषप्रत्यनीकं न भवति तत् परित्याज्यं, यद्दोषप्रत्यनीकं तदनुक्तमपि देयमित्यत आह यथादोषेति । यद्दोषप्रत्यनीकं व्याधिप्रत्यनीकञ्च स्थालीपाकार्थमुक्तं तेषां स्वरसाप्राप्तौ क्वाथं कीदृशं कर्त्तव्यमित्यत आह मृदुमध्येति । मृदुमध्यकठोराणां द्रव्याणां क्वाथ्यमयसा समं गृहीत्वा यथाक्रमं चतुरष्टौ षोडशगुणं वा तोयं दत्त्वा लौहसमं ग्रहणीयमिति। केचित् तु व्याध्यनुरूपस्थालीपचनीयद्रव्याणामन्तरे कस्यचित् यदि स्वरसप्राप्तिर्नास्ति तत्र स्थालीपाकार्थं त्रिफलाक्वाथानुसारेणैव क्वाथ्यजलादिकं दत्त्वा क्वथनीयं, तच्च क्वाथं स्थालीपाके प्रयोजयेदिति । स्वरस-मानार्थमाह स्वरसस्येति । स्थालीपाकस्य निरुक्तिमाह स्थाल्यामित्यादि ॥ ३०५–३०८ ॥

प्रथमतः स्थाल्यां लौहचूर्णं त्रिफलाक्वाथेनालोड्या वह्निपाकं विधाय ततोऽनन्तरं हस्तिकर्णपलाशादीनां व्यस्तानां समस्तानां वा स्वरसैरपि पूर्ववत् स्थालीपाकः कार्य्यः। ततो दोषप्रत्यनीकद्रव्याणां स्वरसैः क्वाथैर्वा

यथादोषौषधेनापि स्थालीपाको विधीयते ॥ ३१० ॥

[ इति स्थालीपाकविधिः ]

अथ पुटपाकविधिः—

स्थालीपाके सुसंपक्कं प्रक्षाल्य स्वच्छवारिणा ।
शुष्कं सञ्चूर्ण्य यत्नेन पुटपाके प्रयोजयेत् ॥ ३११ ॥
पुटाद्दोषविनाशः स्यात् पुटादेव गुणोदयः ।
म्रियते च पुटाल्लौहस्तस्मात् पुटं समाचरेत् ॥ ३१२ ॥
यथा यथा प्रदीयन्ते पुटाः सुबहुशो यदि ।
तथा तथा प्रकुर्वन्ति गुणानेव सहस्रशः ॥ ३१३ ॥
पुटपाकेन पक्कन्तु शस्यते रसकर्मसु ।
दशादिशतपर्य्यन्तो गदे पुटविधिर्मतः ॥ ३१४ ॥
शतादिस्तु सहस्रान्तः पुटो देयो रसायने ।
वाजीकर्मणि विज्ञेयो दशादिशतपञ्चकः ॥ ३१५ ॥
तावदेव पुटेल्लौहं यावच्चूर्णीकृतं जले ।
निस्तरङ्गं लघुत्वेन समुत्तरति हंसवत् ॥ ३१६ ॥
पुटपाकौषधस्यापि क्वाथो वा स्वरसोऽपि वा ।
वक्ष्यमाणप्रमाणेन कर्त्तव्यो भिषजां वरैः ॥ ३१७ ॥

---

स्थालीपाकः कार्य्य इति ॥ ३०९–३१० ॥

स्थालीपाकानन्तरं स्वच्छवारिणा लौहं प्रक्षाल्य चातपे शोषयेत् । ततः सञ्चूर्ण्य वक्ष्यमाणविधिना पुटपाकं कुर्य्यादिति । पुटपाकस्य प्रयोजनमाह **पुटादित्यादि**–यैर्द्रव्यैः पुटो देयस्तेषां गुणाः सहस्रशो लौहेऽपि वर्त्तन्ते इत्यत आह **यथा यथेति** ॥ ३११–३१३ ॥

पुटानां संख्याभेदेन कर्म्मभेदानाह **दशादीत्यादि**–दशादिशतपर्य्यन्तं व्याधिनिवारकं, एवमन्यच्च । एतच्च विशिष्टज्ञानार्थं । यदा तु प्रतिपुटानन्तरं केतकीरजःसदृशं पेषणं वस्त्रपूतञ्च भवति, तदा संख्याविभेदप्रयोजनं नास्ति; सप्ताष्टाभिरेव विशिष्टफलदं भवतीति । यदा संख्याविभेदो न कार्य्यस्तथाविभेदेऽपि यथाविधलौहं कर्त्तव्यं तदर्थमाह **तावदेवेति** ३१४–३१६

अथ पुटपाकौषधस्य क्वाथं स्वरसमपि यथा प्रयोज्यं तदर्थं साधारण-

---

१ यथा दोषेत्यस्यावतरणं मृदुमध्येत्यस्याऽवतरणसङ्गत्यर्थं व्युत्क्रमेण लिखितम् ।

रसाभावे तु सर्वेषां क्वाथो ग्राह्यो मनीषिभिः।
अभावे स्वरसस्यापि क्वाथ एव फलत्रिकात् ॥ ३१८ ॥

अथ त्रिफलादिगणः—

त्रिफला त्रिवृता दन्ती कटुकी तालमूलिका।
वृद्धादारश्च वृश्चीर-वृषपत्रक-चित्रकाः ॥ ३१९ ॥
शृङ्गबेरविडङ्गौ च भृङ्गभल्लातकौषधम्।
दाडिमस्य च पत्राणि शतपुत्री पुनर्नवा ॥ ३२० ॥
कुठार-क्रामकौ कन्दः तन्त्री भेकस्य पर्णिका।
हस्तिकर्णपलाशश्च कुलिशः केशराजकः ॥ ३२१ ॥
माणः खण्डितकर्णश्च गोजिह्वा लोहमारकः।
गिरिशान्तनकः प्रोक्तस्त्रिफलादिरयं गणः।
सामान्यपुटपाकार्थमेतानीच्छन्ति सूरयः ॥ ३२२ ॥

अथ एरण्डादिगणः—

विशेषपुटपाकाय गणानन्यान् शृणूदितान्।
एरण्डः शारिवा द्राक्षा शिरीषश्च प्रसारणी ॥ ३२३ ॥
माषमुद्गाख्यपर्णिन्यौ विदारीकन्द-केतकी।
एरण्डादिगणो ह्येष सर्ववातविकारनुत् ॥ ३२४ ॥

अथ किराताादिगणः—

किरातममृता निम्बं कुस्तुम्बुरु शतावरी।
पटोलं चन्दनं पद्मं शाल्मल्युडुम्बरी जटा।

---

विधानमाह पुटपाकेत्यादि ॥ ३१७–३१८ ॥

साधारणपुटपाकार्थं त्रिफलादिगणमाह त्रिफलेत्यादि—त्रिवृता रक्तते-उडीति ख्याता चित्रकं चित्रकमूलं, शतपुत्री शतमूली। कुठारः कुडालिया इति ख्याता। क्रामकः क्रान्तक्रामकः, कन्दः शूरणकन्दः कुलिशोऽस्थिसंहारः ॥ ३१९–३२२ ॥

विशेषपुटपाकार्थमाह विशेषेत्यादि—एरण्डादिगणमाह एरण्डेति—एरण्डादिगणश्च वातघ्नः तेन पुटनादिना लौहोऽपि वातघ्नो भवति ३२३–३२४

किराताादिगणमाह किरातमित्यादि—कुस्तुम्बुरु धन्याकं। किरातादि-

पैत्तिकामयहन्ताऽयं किरातादिगणो मतः ॥ ३२५ ॥

अथ शृङ्गवेरादिगणः—

शृङ्गवेरस्य मूलानि निर्गुण्डी कौटजं फलम् ।
करञ्जाद्वितयं मूर्वा शोभाञ्जन-शिरीषकौ ॥ ३२६ ॥
वरुणश्चार्कपर्णञ्च पटोलं कण्टकारिका ।
शृङ्गबेरादिको ह्येष गणः श्लेष्मगदापहः ॥ ३२७ ॥

अथ गोक्षुरादिगणः—

गोक्षुरक्षुरकौ व्याघ्री सिंहपुच्छीद्वयं स्थिरा ।
गोक्षुरादिरिति प्रोक्तो वातश्लेष्महरो गणः ॥ ३२८ ॥

अथ पटोलादिगणः—

पटोलपत्रकोशीर-कासमर्दापराजिताः ।
लोध्रेन्दीवर-कह्लार-वाराही कान्तया सह ।
पटोलादिरिति ज्ञेयः पित्तश्लेष्मगदापहः ॥ ३२९ ॥

अथ किंशुकादिगणः—

किंशुकः काश्मरी विश्वमाग्निमन्थास्त्रिकण्टकः ।
श्योनाकः शालपर्णी च सिंहपुच्छीद्वयं स्थिरा ॥ ३३० ॥
पाटला कण्टकारी च बृहती बिल्व एव च ।
किंशुकादिगणो ह्येष दोषत्रयहरो मतः ॥ ३३१ ॥

अथ शतावर्य्यादिगणः—

शतावरीबलाधात्री गुडूचीवृद्धदारकः ।
वानरीभृङ्गराजाख्य विदारीगोक्षुरक्षुरैः ।
वाजिगन्धाकणायुक्तैर्वाजीकर्म्मसु शस्यते ॥ ३३२ ॥

---

गणः पित्तघ्नः ॥ ३२५ ॥

शृङ्गवेरादिगणमाह शृङ्गवेरेति । शृङ्गवेरादिगणः कफघ्नः । कौटजं फलं इन्द्रयवम् ॥ ३२६–३२७ ॥

गोक्षुरादिगणमाह गोक्षुरेति-गोक्षुरादिगणश्च वातश्लेष्मघ्नः । एवमन्यत्र ॥ ३२८—३३१ ॥

वाजीकर्म्मसु येन प्रयुञ्जीत तमाह शतावरीत्यादि—बला श्वेतबाट्यालं, वाजिगन्धा अश्वगन्धा ॥ ३३२ ॥

विदारीकन्दादिगणः—

विदारीकन्दापिण्डाह्व-भृङ्गराजशतावरी ।
क्षीरकञ्चुकभल्लातामृतकाचित्रकैस्तथा ॥ ३३३ ॥
करिकर्णपलाशैश्च मुषलीमधुकैरपि ।
मुण्डरीकेशराजैश्च पुटो देयो रसायने ॥ ३३४ ॥
सामान्ये तु विशेषे च पुटे यद्यत् प्रकीर्त्तितम् ।
मिलितैरेकशो वा तैर्यथेष्टं पुटयेत् ततः ।
पुटपाके फलादीनामयसा ग्रहणं समम् ॥ ३३५ ॥

अथ पुटपाकप्रकरणमाह—

हस्तमात्रमिते गर्त्ते करीषेणार्द्धपूरिते ।
अथवा तुषकाष्ठाभ्यां पूरितेऽर्द्धे निधापयेत् ।
लौहमग्निं ततो दत्त्वा तथैवोर्द्ध्वं प्रपूरयेत् ॥ ३३६ ॥
दिवा वा यदि वा रात्रौ विधिनानेन पाचयेत् ।
चतुर्भिः प्रहरैरेव पुटपाकेन मारयेत् ॥ ३३७ ॥

---

रसायनार्थं यैश्च पुटो देयस्तानाह **विदारीकन्देति**—विदारी शुक्लभूमिकूष्माण्डम् ॥ ३३३-३३४ ॥

सामान्यविशेषपुटकगणैर्व्यस्तैः समस्तैर्वा पुटो देय इत्यताह—**सामान्य इत्यादि**—तैरेकैकशः समस्तैर्वा । यथेष्टमिति दशादिसहस्रपर्य्यन्तं निर्म्मलत्वेन लघुत्वेन वा यथा हंसवत् जले समुत्तरति तथा प्रपुटेदिति । पुटनार्थञ्च पुटकगणस्य स्वरसो ग्राह्यः, स्वरसाभावे लौहसमं पुटनद्रव्यं संगृह्य यथोक्तक्वाथः कर्त्तव्यः, तेनायश्चूर्णं पङ्कोपमं कुर्य्यात् । ततो लौहे मृन्मये पात्रे वा लिप्त्वा तत्तुल्येनापरपात्रेणाच्छाद्य सन्धिमालिप्य यथोक्तविधिना प्रपचेदिति ॥ ३३५ ॥

पुटपाकप्रकारमाह **हस्तमात्रेति**—हस्तैकमात्रं सर्व्वतो हस्तैकपरिमाणं, तेन हस्तैकमात्रखननं सममध्यं कटाहसदृशं वर्त्तुलाकारं गर्त्तं कर्त्तव्यम् । वन्यकरीषेण तुषेण काष्ठेन वार्द्धपूरिते तस्मिन् चाग्निं निधाय सम्पुटञ्च दत्त्वा अपरमर्द्धं करीषादिभिः पूरयेत् । एवं विधानेन चतुर्भिः प्रहरैरेव पुटपाकः कीर्त्तितः । प्रतिपुटान्ते लौहपात्रे सुपाषाणपात्रे वा केतकीरजःसदृशं चूर्णयेदिति । अन्यत् लौहमारणादिविशेषविधानं लौहप्रदीपादौ बोध्यम् ॥ ३३६-३३७ ॥

पुटपाके क्षणादूर्द्ध्वं स्थितो भवति भस्मसात्।
अधस्तादपकृष्टस्तु मन्दो भवति वीर्यतः ॥ ३३८ ॥
कुण्डस्थो भस्मनाच्छन्न आकृष्टव्यः सुशीतलः।
समाकृष्टस्य तप्तस्य गुणहानिः प्रजायते ॥ ३३९ ॥

मतान्तरम्—

शुद्धस्य सूतराजस्य भागो भागद्वयं बलेः।
द्वयोः समं लोहचूर्णं मर्दयेत् कन्यकाद्रवैः ॥ ३४० ॥
यामद्वयं ततो गोलं स्थापयेत् ताम्रभाजने।
आच्छाद्यैरण्डजैः पत्रैरुष्णो यामद्वयाद्भवेत् ॥ ३४१ ॥
त्रिरात्रं धान्यराशिस्थं तत् ततो मर्दयेद् दृढम्।
रजस्तद्वस्त्रगलितं नीरे तरति हंसवत्।
तीक्ष्णं मुण्डं कान्तलोहं निरुत्थं जायते मृतम् ॥ ३४२ ॥

मतान्तरम्—

क्षिपेद्वा द्वादशांशेन दरदं तीक्ष्णचूर्णतः।
कन्यानीरेण संमर्द्य यामयुग्मञ्च सम्पुटेत्।
एवं सप्तपुटे मृत्युं लौहचूर्णमवाप्नुयात् ॥ ३४३ ॥

[ इति पुटपाकविधिः ।]

अथ लौहस्य निरुत्थीकरणम्—

सर्वमेतत् मृतं लौहं पक्तव्यं मित्रपञ्चकैः।
यद्येवं स्यात् निरुत्थञ्च सेव्यं रक्तिचतुष्टयम् ॥ ३४४ ॥

---

पुटपाकस्य गुणदोषमाह **पुटपाक**--इत्यादि ॥ ३३८-३३९ ॥

पुटपाके मतान्तरमाह **शुद्धस्येत्यादि**--सूतराजस्य पारदस्य भागैकं तथा बलेर्गन्धकस्य भागद्वयं द्वयोः समं लौहचूर्णं संगृह्य मर्द्दयेत् यावत् कज्जलतामुपैति। ततः कन्याद्रवैर्यामद्वयं पिष्टाताम्रपात्रे तत् गोलकं संस्थाप्य एरण्डपत्रैराच्छाद्य प्रपुटेत्। तत ऊरुबूकपत्रैः पुनरावेष्ट्य धान्यराशौ त्रिदिनं स्थापयेत्। तत उद्धृत्य मर्द्दयेत्। एवं पुनःपुनः कुर्य्यात् यावज्जले तरति ॥ ३४०-३४२ ॥

मतान्तरमाह **द्वादशांशेनेति**—दरदं हिङ्गुलं, तीक्ष्णं लौहम् ॥ ३४३ ॥

अथ निरुत्थलौहस्य परीक्षामाह **सर्व्वमित्यादि**—मित्रपञ्चकैरिति वक्ष्यमाणमित्रपञ्चकैः ॥ ३४४ ॥

अथ मित्रपञ्चकम्—

मधु सर्पिस्तथा गुञ्जा टङ्कणं गुग्गुलुस्तथा ।
मित्रपञ्चकमेतत् तु गणितं धातुमेलने ॥ ३४५ ॥

निरुत्थीकरणे मतान्तरम्—

गोघृतं गन्धकं लौहं तप्तखल्ले विमर्दयेत् ।
दिनैकं कन्यकाद्रावै रुद्ध्वा गजपुटे पचेत् ।
इत्येवं सर्वलौहानां कर्त्तव्यं स्यात् निरुत्थितम् ॥ ३४६ ॥

रसायने विशेषो यथा—

मर्द्दयेच्च लौहभस्म गुञ्जामध्वाज्यटङ्कणैः ।
धमेद्वह्नौ पुनर्लौहं तदा योज्यं रसायने ॥ ३४७ ॥

गुणाः—

कृष्णायः शोथशूलार्शःक्रिमिपाण्डुत्वशोषनुत् ।
वयस्यं गुरु चक्षुष्यं सर्वमेदोऽनिलापहम् ॥ ३४८ ॥
आयुःप्रदाता बलवीर्य्यकर्त्ता रोगापहर्त्ता मर्दनस्य कर्त्ता ।
अयःसमानं न हि किञ्चिदस्ति रसायनं श्रेष्ठतमं नराणाम् ॥ ३४९ ॥

लौहसेवने वर्जनीयानि ।

कूष्माण्डं तिलतैलञ्च रसोनं राजिकां तथा ।
मद्यमम्लरसञ्चैव त्यजेत् लौहस्य सेवकः ॥ ३५० ॥

अथ वज्रपाण्ड्यादिगुणाः—

सामान्याद्द्विगुणं क्रौञ्चं कालिङ्गोऽष्टगुणस्ततः ।

---

मित्रपञ्चकमाह मधुसर्पिरित्यादि । मतान्तरपरीक्षामाह **गोघृतमित्यादि**—अत्र घृतं गन्धं लौहञ्च समभागम् ॥ ३४५–३४६ ॥

रसायने तु घृत-मधु-गुञ्जा-टङ्कणैः समं लौहं मर्द्दयित्वा वह्नौ धमेत्, यदि पूर्व्ववत् संश्लिष्टं न भवति तदा योज्यं, अन्यथा परित्याज्यमिति ॥३४७॥

मृतलौहस्य गुणमाह **कृष्णेत्यादि**—कृष्णायः पाण्डि-वज्रादिव्यतिरिक्तं लौहम् ॥ ३४८-३४९ ॥

लौहसेवनकाले वर्जनीयद्रव्याण्याह **कूष्माण्डमित्यादि**—कूष्माण्डमित्युपलक्षणं, ककाराष्टकवर्ज्जनाभिप्रायेण कूष्माण्डमित्युक्तम् । कृष्णायसां गुणं पूर्व्वमुक्तम् ॥ ३५० ॥

कलेः शतगुणं भद्रं भद्राद्वज्रं सहस्रधा ॥ ३५१ ॥

वज्रात् शतगुणं पाण्डि निरङ्गं दशभिर्गुणैः ।
ततः कोटिसहस्रैर्वा कान्तलौहं महागुणम् ॥ ३५२ ॥

[ इति लौहमारणम् । ]

अथ मण्डूरस्य उत्कर्षादिनिर्णयः—

ये गुणा मारिते मुण्डे ते गुणा मुण्डकिट्टके ।
तस्मात् सर्वत्र मण्डूरं रोगशान्त्यै प्रयोजयेत् ॥ ३५३ ॥
शतोर्द्ध्वमुत्तमं किट्टं मध्यञ्चाशीतिवार्षिकम् ।
अधमं षष्टिवर्षीयं ततो हीनं विषोपमम् ॥ ३५४ ॥

मण्डूरशोधनम्—

दग्ध्वाऽक्षकाष्ठैर्मलमायसन्तु गोमूत्रनिर्वापितमष्टवारान् ।
विचूर्ण्य लीढं मधुनाऽचिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति ॥ ३५५ ॥
किट्टाद्दशगुणं मुण्डं मुण्डात् तीक्ष्णं शताधिकम् ।
तीक्ष्णात् लक्षगुणं कान्तं भक्षणात् कुरुते गुणम् ॥ ३५६ ॥

[ इति किट्टशोधनमारणम् । ]

नागैः सुवर्णं रजतञ्च ताप्यै-
र्गन्धेनताम्रं शिलया च नागम् ।

---

इदानीं वज्रपाण्ड्यादिगुणञ्चाह सामान्याद्विगुणमित्यादि ॥ ३५१-३५२॥

इति लौहाध्यायः ।

अथ मण्डूरशोधनादिकमाह ये गुणा इति—मृतलौहे ये गुणाः प्रोक्ताः मुण्डकिट्टे मण्डूरेऽपि ते गुणा वर्त्तन्ते । अत्र मुण्डं लौहोपलक्षितम् । यतो यल्लौहस्य यद्गुणं तदुत्थितमण्डूरेऽपि तद्गुणमिति । उक्तं हि—यल्लौहं यद्गुणं प्रोक्तं तत्किट्टमपि तद्गुणमिति ॥ ३५३ ॥

यद्यन्मण्डूरं श्रेष्ठं यच्च हीनं तदाह—शतोद्ध्र्वमित्यादि—शतोद्ध्र्वं शतवर्षादूद्ध्र्वम् ॥ ३५४ ॥

इदानीं शोधनमाह दग्ध्वाक्षेत्यादि—आयसं मलं मण्डूरं विभीतककाष्ठानलैर्दग्धव्यं, यदाग्निवर्णं भवति तदा गोमूत्रे निर्व्वापयेदिति; एवं सप्तवारं कृत्वा शोधयेदिति ॥ ३५५ ॥

मण्डूरात् मुण्डादिलौहानां गुणविभेदमाह किट्टादित्यादि ॥ ३५६ ॥

तालेन वङ्गं त्रिविधञ्च लौहं
नारीपयो हन्ति च हिङ्गुलेन ॥ ३५७ ॥
[ इति स्वर्णादिशोधनमारणविधिः । ]

अथ मणिमुक्तादिशोधनम्—

स्वेदयेद्दोलिकायन्त्रे जयन्त्याः स्वरसेन च ।
मणिमुक्ताप्रवालानि यामैकेन च शोधयेत् ॥ ३५८ ॥

मणिमुक्तादिमारणम्—

मुक्ताफलानि शद्धानि खल्ले पिष्ट्वा पुटेल्लघु ।
एवं भस्मत्वमाप्नोति वज्रकं काञ्जियोगतः ॥ ३५९ ॥

मतान्तरम्—

कुमार्य्या तण्डुलीयेन तुल्येन च निषेचयेत् ।
प्रत्येकं सप्तवारांश्च तप्ततप्तानि कृत्स्नशः ॥ ३६० ॥
मौक्तिकानि प्रवालानि तथा रत्नान्यशेषतः!
क्षणाद्विविधवर्णानि म्रियन्ते नात्र संशयः ॥ ३६१ ॥

प्रवालमारणम्—

क्षीरदुग्धेन प्रवालञ्च भावयित्वा तु हण्डिके ।
मध्येऽपि तक्रसहितं स्थापयेत् तां निरोधयेत् ।
चुल्ल्यामिग्निप्रतापेन म्रियते प्रहरद्वये ॥ ३६२ ॥

सर्वरत्नानां शोधनम्—

कुलत्थस्य पलशतं वारिद्रोणेन पाचयेत् ।
तस्मिन् पादविशेषे च क्वाथेऽष्टौ मणयः शिलाः ॥ ३६३ ॥

---

अथ स्वर्णादीनां साधारणमारणद्रव्यं समासत आह **नागैरित्यादि**॥३५५॥

अथ मणिमुक्ताप्रवालादीनां साधारणशोधनमाह **स्वेदयेदित्यादि**॥३५८॥

तेषां साधारणमारणमाह **मुक्ताफलेति**—विशुद्धानि मुक्ताफलानि खल्ले पिष्ट्वा लघुपुटे पचेत् वज्रकन्तु काञ्जिकसहितं पुटे पचेदिति। अथवा विविधानि मणिमुक्ताप्रवालानि सप्तवारान् तप्ततप्तानि कुमार्य्यादिस्वरसे प्रक्षेप्याणि ॥ ३५९-३६१ ॥

विशेषमारणमाह **क्षीरदुग्धेनेति**। स्पष्टम् ॥ ३६२ ॥

**कुलत्थेत्यादि**-अष्टौ मणयः शिला इति अष्टौ मणयः मुक्तादयः, शिला

आतपे त्रिदिनं शोध्यः क्राथसिक्ताः पुनःपुनः ।
शुध्यन्ते सर्वरत्नानि मणयश्च न संशयः ॥ ३६४ ॥

[ इति मुक्तादिशोधनमारणम् । ]

[ इति धात्वादिशोधनमारणविधिः । ]

अथ विषशुद्धिः—

कृत्वा चणकसंस्थानं गोमूत्रैर्भावयेत् त्र्यहम् ।
समटङ्कणसम्पिष्टं मृतमित्युच्यते विषम् ॥ ३६५ ॥

---

मनःशिला ॥ ३६३–३६४॥

अथ विषोपविषशोधनादिकमाह–विषं हि द्विविधं स्थावरजङ्गमभेदात् । मूलाद्यात्मकं स्थावरविषं दशविधं । सर्पादिसम्भवं जङ्गमविषं षोडशात्मकं । मूलं पत्रं फलं पुष्पं, त्वक् क्षीरं सार एव च । निर्यासो धातवः कन्दः, स्थावरस्याश्रया दश । तत्र मूलविषं करवीरादि, पत्रविषं विषपत्रादि, फलविषं कर्कोटकादि, पुष्पविषं वेत्रादि, त्वक्सारनिर्य्यासविषाणि करम्भादीनि, क्षीरविष स्नुह्यादि, धातुविषं हरितालादि, कन्दविषं वत्सनाभशक्तुकादि । तत्र कन्दजविषञ्चाष्टादशविधं यथा—दार्व्विकं वत्सनाभञ्च सैकतं शक्तुकं मुस्तकं सार्षपं कौर्म्मं शृङ्गी कालकूटं दर्दुरं हालाहलं यमदंष्ट्रा मेषशृङ्गी हारिद्रं कर्कटं रक्तशृङ्गी ग्रन्थिकं केशरञ्च कन्दजविषं । तेषामाद्यञ्चाष्टविधविषं यौगिकं । अन्यं दशविधञ्च विवर्जनीयमिति । जङ्गमविषस्य षोडशाश्रयानाह–दृष्टिनिःश्वासदंष्ट्राश्च, नखमूत्रमलानि च । शुक्रं लालामुखं स्पर्शः सन्दंशश्चावमर्द्दितं । गुदास्थिपित्तशूकानि, दशषट् जङ्गमाश्रयाः । दृष्टिनिश्वासविषाः दिव्याः सर्पाः । दंष्ट्राविषाः भौमाः सर्पाः । नखविषाः व्याघ्रादयः । मूत्रपुरीषविषाः गृहगोधिकादयः । शुक्रविषाः मूषिकादयः । लालाविषाः उच्चिटिङ्गादयः । लालास्पर्शमूत्रपुरीषार्त्तव–शुक्रमुखसन्दंशदंष्ट्रास्पर्शावमर्द्दितगुदपुरीषविषाश्चित्रशीर्षादयः । अस्थिविषाः सर्पादयः । पित्तविषाः नकुलमत्स्यादयः । शूकविषाः, भ्रमरादयः । एषां स्थावरोपलक्षितं यौगिकमष्टविधकन्दविषं यदुक्तं–तेषां शोधनादिकमाह ।—**कृत्वा चणकेति**–चणकसंस्थानं चणकसदृशं । गोमूत्रैर्भावयेदिति गोमूत्रैर्दोलायन्त्रे स्वेदयेदिति ॥ ३६५ ॥

मतान्तरम्—

अथवा त्रैफले क्वाथे विषं शुध्यति पाचितम्।
दोलायां त्रिफलाक्वाथे छागीक्षीरे च पाचितम्॥ ३६६॥
गोमूत्रपूर्णपात्रे च दोलायन्त्रे विषं पचेत्।
दशतोलकमानेन चादौ वैद्यो दिवानिशम्॥ ३६७॥

मतान्तरम्—

विषभागांश्चणकवत् स्थूलान् तु कृत्वा भाजने।
तत्र गोमूत्रकं दत्त्वा प्रत्यहं नित्यनूतनम्॥ ३६८॥
शोषयेत् त्रिदिनादूर्ध्वं धृत्वा तीव्रातपे ततः।
प्रयोगेषु प्रयुञ्जीत भागमानेन तद्विषम्॥ ३६९॥

[ इति विषशुद्धिः। ]

अथोपविषमाह—

अर्कसेहुण्डधुस्तूर-लाङ्गलीकरवीरकाः।
गुञ्जाऽहिफेनावित्येताः सप्तोपविषजातयः॥ ३७०॥

तच्छुद्धिः—

धुस्तूरस्य च यद्बीजमन्यच्चोपविषञ्च यत्।
तच्छोध्यं दोलिकायन्त्रे क्षीरपूर्णेऽथ पात्रके॥ ३७१॥

[ इत्युपविषशुद्धिः। ]

अथ जैपालशुद्धिः—

निस्तुषं जयपालञ्च द्विधा कृत्वा विचक्षणः।
एतद्बीजस्य मध्यन्तु पत्रवत् परिवर्जयेत्॥ ३७२॥
अष्टमांशेन चूर्णेन टङ्कणस्य च मेलयेत्।

---

अथवेत्यादि-पाचितमित्यत्र त्र्यहमिति शेषः। एवं क्षीरे च पाचितमिति॥ ३६६-३६७॥

अथोपविषमाह **अर्केत्यादि**—उपविषा गौणविषाः अर्कादयश्च स्थावरविषान्तर्भूता एव। तेषां शोधनमाह धुस्तूरस्येति॥ ३७०-३७१॥

अथ फलविषाणामन्तरे जैपालशोधनमाह **निस्तुषमित्यादि-तुषर**हितं जैपालं द्विधाकृत्य मध्यस्थं पत्रवत् द्रव्यं परित्यज्य नूतनशरावोपरि घर्षणीयं यावन्निःस्नेहतां व्रजेत्, ततोऽष्टमांशटङ्कणेन सह मिश्रीकृत्य केचि-

केशयन्त्रे च तद्भाव्यं पाच्यं दुग्धने सम्प्लुतम् ।
त्रिरात्रं शुद्धिमायाति जैपालममृतोपमम् ॥ ३७३ ॥

अथ स्नुहीक्षीरशुद्धिः—

चिञ्चापत्ररसे कर्षे वस्त्रपूते पलद्वयम् ।
स्नुहीक्षीरं रौद्रयन्त्रे भावयेद् यत्नतः सुधीः ।
द्रवे शुष्के समुत्तार्य्य सर्वरोगेषु योजयेत् ॥ ३७४ ॥

अथ जलौकाशोधनम्—

चिरन्तनीं जलौकान्तु ताम्रपात्रेषु रक्षयेत् ।
चतुर्माषं निशाचूर्णं जलाष्टकपले क्षिपेत् ॥ ३७५ ॥
तस्मिन् क्षिपेत् जलौकां तां स्वयं लालां परित्यजेत् ।
त्यक्तलाला जलौका च सा योज्या रक्तमोक्षणे ॥ ३७६ ॥
रोमपृष्ठा च कपिला रक्तरेखा च दुर्बला ।
वर्जनीया विशेषेण भिषजा कीर्त्तिमिच्छता ॥ ३७७ ॥

अथ वृद्धदारकबीजशोधनम्—

बीजमादौ समादाय रौद्रयन्त्रे विशोषयेत् ।
ईषत्सैन्धवयुक्तेन द्रवेण यत्नतः सुधीः ।
अपामार्गस्य वा तोयैर्वार्द्धक्यवीजशोधनम् ॥ ३७८ ॥

मतान्तरम्—

वृद्धदारकवीजन्तु पक्वं दोलाकृतं पचेत् ।
दुग्धपूर्णेषु पात्रेषु ततः शुध्यति निश्चितम् ॥ ३७९ ॥
[ इति वृद्धदारकबीजशोधनम् । ]

अथ नानाबीजशोधनम्—

अपामार्गकषायेण निम्बुवीजं विशोधयेत् ।

---

यन्त्रेण भाव्यं दुग्धेन च पाच्यमिति ॥ ३७२–३७३ ॥

क्षीरविषाणां मध्ये स्नुहीक्षीरशोधनमाह **चिञ्चापत्रेति** ॥ ३७४ ॥

अथ जलौकाशोधनमाह चिरन्तनमित्यादि—वर्जनीयजलौकामाह **रोमपृष्ठेति** ॥ ३७५–३७७ ॥

वृद्धदारकशोधनमाह बीजमित्यादि—वार्द्धक्यबीजमिति वृद्धदारकबीजम् ॥ ३७८–३७९ ॥

मूलक्काथैः कुमार्य्याश्च जैपालबीजशोधनम् ॥ ३८० ॥
इन्द्रवारुणिकाक्काथैः राजवृक्षस्य बीजकम् ।
समूलोत्तरवारुण्या धुस्तूरबीजशोधनम् ॥ ३८१ ॥
शिग्रुकार्पासबीजानि अपामार्गस्य बीजकम् ।
घर्मेण शोधनं तेषां न दद्यात् सैन्धवं ततः ॥ ३८२ ॥
तिक्ता कोषातकी दन्ती पटोली चेन्द्रवारुणी ।
कटुतुम्बी देवदाली काकतुण्डी च शुध्यति ॥ ३८३ ॥
धात्रीफलरसेनैव महाकालस्य शोधनम् ।
करञ्जयुग्मयोर्बीजं भृङ्गराजेन शोधयेत् ॥ ३८४ ॥
गुञ्जादिसर्वबीजानां नरमूत्रैः पटुं विना ।
नारिकेलाम्बुना शोध्यं बीजं भल्लातकोद्भवम् ॥ ३८५ ॥
गुडूचीत्रिफलाक्काथे क्षीरं चैव विशेषतः ।
पक्त्वा च खण्डशः शुद्धं गृह्णीयात् मृदु गुग्गुलुम् ॥ ३८६ ॥

[ इति विषोपविषादिशोधनम् । ]

इति रसेन्द्रसारसंग्रहे प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

### अथ विरेकाधिकारः

क्षीराब्धेरुत्थितं देवं पीतवस्त्रं चतुर्भुजम् ।
वन्दे धन्वन्तरिं भक्त्या नानागदानिसूदनम् ॥ १ ॥

---

अन्येषां बीजानां साधारणशोधनमाह अपामार्गेति—स्पष्टम् ।।३८०–३८६।।

द्रव्यादीनां शोधनादिपरिव्यक्त्यनन्तरं धर्म्मार्थकाममोक्षाणां मूलस्यारोग्यस्य श्रेयसो जीवितस्य चापहन्तृणां रोगाणामुपशमनार्थमिदानीं चिकित्साध्यायः। शिष्टाचारानुमतश्रुतिबोधितकर्त्तव्यताकं प्रारिप्सिताध्यायसमाप्तिफलकं तत्प्रतिबन्धकविघ्नध्वंसमात्रफलकं वा स्वयंकृतमादिदेवधन्वन्तरिनमस्कारं शिष्यशिक्षार्थं प्राक् प्राणैषीत्। अथवा धन्वन्तरिनामोत्कीर्त्तनमेव सर्व्वरोगनिवारकत्वात् गरीयस्त्वाच्च नमस्कारपूर्व्वं तन्नाम आदौ निबध्नाति **क्षीराब्धेरित्यादि**—क्षीराब्धेरुत्थितः क्षीरसमुद्रमन्थनादमृतैः

प्रायशो वपुषः शुद्धिं कृत्वा देयं तदौषधम् ।
अतः पूर्वं चिकित्सायां रेचकौषधमुच्यते ॥ २ ॥

अथ इच्छाभेदी रसः—

तुल्यं टङ्कणपारदं समरिचं तुल्यांशकं गन्धकं
विश्वा च द्विगुणा ततो नवगुणं जैपालचूर्णं क्षिपेत्।
गुञ्जैकप्रमितो रसो हिमजलैः संसेवितो रेचयेत् ।
यावन्नोष्णजलं पिबेदपि वरं पथ्यञ्च दध्योदनम् ॥ ३ ॥

प्रकारान्तरम्—

जैपालाष्टौ द्विको गन्धस्त्रिशुण्ठी मरिचं द्विकम् ।
एकः सूतः टङ्कणैको गुञ्जामात्रा वटी कृता ॥ ४ ॥
शूलव्याधिप्रभृतयः कुष्ठकादशपित्तजाः ।
भगन्दरादिहृद्रोगाः सर्वे नश्यन्ति भक्षणात् ॥ ५ ॥

अथ गदमुरारिः इच्छाभेदी—

रसबलिगगनार्कं शुद्धतालं विषञ्च
त्रिकटुत्रिफलमेतत् टङ्कणं भृङ्गमेभिः ।
सममिह जयपालोद्भूतचूर्णं विमर्द्य
द्विनिशमनिशमेतद् भृङ्गराजोत्थवारा ॥ ६ ॥

---

सह उत्थितः, स च धन्वन्तरिर्विष्णोरवतारविशेषः, व्याधिपीडितानां देवानां रोगनिरासार्थं प्रजाहितार्थञ्चानुकम्पया प्रकाशितः । देवमित्यादि- देवं । नानागदनिषूदनमिति चिकित्सया, किंवा तन्नामस्मरणादेव व्याधयो दूरादेव पलायन्ते ॥ १ ॥

शरीरशोधनानन्तरमौषधं प्रदेयमाशुकारित्वादत आह प्रायश इत्यादि।२

**तुल्यमिति**—प्रत्येकमेकभागतुल्यं, विश्वा च द्विगुणा। तत इति विश्वाया एकभागापेक्षया द्वैगुण्यं एवं जैपालचूर्णस्यापि नवगुणत्वं, हिमजलैरिति शिशिरजलैः ॥ ३ ॥

**जैपालेति**—जैपालस्याष्टौ भागाः, तथा गन्धकस्यापि द्वौ भागौ, एवं शुण्ठीमरिचादीनां यथोक्तं भागं ग्राह्यम् ॥ ४–५ ॥

**गदमुरारिरसे**—बलिर्गन्धकः, गगनमभ्रं, अर्कस्ताम्रम् । सममिहेति

भवति गदमुरारिः स्वेच्छया भेदकोऽयं
हरति सकलरोगान् सन्निपातानशेषान् ।
इह हि भवति पथ्यं मत्स्यमांसादि सर्वं
घृतविलुलितमस्मिन् भोजनं भूरि देयम् ॥ ७ ॥

अथ रुक्मिशो रसः—

अभयाचूर्णमादाय नूतनैर्जयपालकैः ।
पञ्चमांशेन मिलितैः, स्नुहीदुग्धेन मर्दिताः ॥ ८ ॥
गुडिकास्तस्य कर्त्तव्या वर्त्तुलाश्चणकप्रभाः ।
एकैकस्यास्य टङ्कस्य रेचनैश्च रसैस्तथा ॥ ९ ॥
रुक्मिशो न च दाहः स्यान्न च मूर्च्छा भ्रमः क्लमः ।
वेगतः सारयेदेषा विशेषादामनाशिनी ॥ १० ॥
निरूहेण तथा नैव तथा बिन्दुघृतेन च ।
त्रिवृता न तथा रेच्या यथा स्याद् गुडिकोत्तमा ॥ ११ ॥
अतिशुद्धं भवेद् देहमतिप्रबलमुत्तमम् ।
अतिरूपमतिप्रौढमत्यायुष्करमुत्तमम् ॥ १२ ॥
विष्टम्भे गुडिका देया चोदरे दारुणामये ।
अधोदेशेषु सर्वेषु गुदेषु च महौषधिः ।
दीयते क्षीयते सामः कामकायविवर्द्धनः ॥ १३ ॥

अथ इच्छाभेदी-गुडिका—

पारदं गन्धकं कुर्यात् सौभाग्यं पिप्पलीसमम् ।
समानि जयपालानि क्रियन्ते रेचनाय च ।
शीतेन रेचयेत् सम्यगुष्णेनैव प्रशाम्यति ॥ १४ ॥

---

जैपालचूर्णस्य सर्व्वचूर्णसमत्वं ज्ञेयम् । एतत् सर्व्वमेकीकृत्य भृङ्गराजोत्थरसैः निरन्तरं दिनद्वयं घर्षणीयम् ॥ ६–७ ॥

अभयेत्यादि—पञ्चमांशेन मिलितैरिति हरीतकीचूर्णात् पञ्चमांशेन मिलितैर्जयपालकैः ॥ ८–१३ ॥

इच्छाभेदिगुडिकायां—सौभाग्यं टङ्कणक्षारम् । समानि जयपालानीति सर्व्वैस्तुल्यं जयपालचूर्णमित्यर्थः । शीतेनेति शीताचारेण ॥ १४ ॥

अन्यश्चेच्छाभेदी रसः—

शुण्ठी मरिचसंयुक्तं रसगन्धकटङ्कणम् ।
जैपालास्त्रिगुणाः प्रोक्ताः सर्वमेकत्र चूर्णयेत् ॥ १५ ॥
इच्छाभेदी द्विगुञ्जः स्यात् सितया सह दापयेत् ।
यावन्तश्चुलुकाः पीतास्तावद्वारान् विरेचयेत् ।
तक्रौदनं खादितव्यमिच्छाभेदी यथेच्छया ॥ १६ ॥

अथ पुष्परेचनी गुडिका—

देवदाली स्वर्णपुष्पं गुडेन गुडिका कृता ।
गुदमध्ये प्रदेयैषा पातयेच्च महागदम् ॥ १७ ॥
अधश्च साममायाति पुनः सा दीयते गुदे ।
प्रक्षाल्य वारिणा चैषा वारं वारं प्रयच्छति ॥ १८ ॥
अनेन क्रमयोगेन मलमामविरेचनम् ।
जायते सकलं देहं शुद्धवर्णं निरामयम् ॥ १९ ॥

अथ सर्वाङ्गसुन्दरो रसः—

शुद्धसूतञ्च गन्धञ्च विषञ्च जयपालकम् ।
कटुत्रयञ्च त्रिफला टङ्कणञ्च समांशकम् ॥ २० ॥
अस्य मात्रा प्रयोक्तव्या गुञ्जात्रयसमा ततः ।
सर्वेषु ज्वररोगेषु सामवाते विशेषतः ॥ २१ ॥
नाशयेत् श्वासकासञ्च अग्निमान्द्यं विशेषतः ।
ब्रह्मणा निर्मितः पूर्वं रसः सर्वाङ्गसुन्दरः ॥ २२ ॥

निषिद्धविरेचकानाह—

बालवृद्धकृशक्षीण·पीनसार्त्तभयार्दिताः ।
रूक्षशोषतृषायुक्ताः गर्भिणी च नवज्वरी ॥ २३ ॥

---

**इच्छाभेदिरसे**—जैपालास्त्रिगुणो इति एकभागापेक्षया जैपालचूर्णस्य त्रैगुण्यमित्यर्थः ॥ १५–१६ ॥

**पुष्परेचनीगुडिकायां**—देवदाली हस्तिघोषकः, स्वर्णपुष्पं आरग्वधः तस्य फलमज्जा ग्राह्या । गुडेन गुडिकेति मिलितचूर्णात् गुडस्य द्वैगुण्यम् ॥ १७–१९ ॥

निषिद्धविरेचकानाह बालवृद्धेति—बालस्य सुकुमारत्वात्, वृद्धस्य

अधो गच्छति यस्यासृक् सूतिकाऽऽतङ्कपीडिता।
नैते विरेकयोग्याः स्युरन्येषाञ्च बलाबलम्॥ २४॥
नवज्वरे च ये योगाः भेदकाः परिकीर्त्तिताः।
ते तथैव प्रयोक्तव्याः वीक्ष्य देहबलादिकम्॥ २५॥
[इति विरेकाधिकारः।]

## अथ ज्वरचिकित्सा—

### नवज्वराङ्कुशः—

क्रमेण वृद्धान् रसगन्धहिङ्गुलान् नैकुम्भबीजान्यथ दन्तिवारिणा।
पिष्ट्वाऽस्य गुञ्जाऽभिनवज्वरापहा जलेन चार्द्रा सितया प्रयोजिता॥१॥

### हिङ्गुलेश्वरो रसः—

तुल्यांशं मर्दयेत् खल्ले पिप्पली हिङ्गुलं विषम्।
द्विगुञ्जा मधुना देया वातज्वरनिवृत्तये॥ २॥

### ज्वरधूमकेतुः-रसः

भवेत् समं सूतसमुद्रफेन हिङ्गुलगन्धं परिमर्द्य यत्नात्।
नवज्वरे वल्लमितं त्रिघस्रमार्द्राम्बुनाऽयं ज्वरधूमकेतुः॥३॥

### मृत्युञ्जयो रसः—

अव्यक्तः सिद्धिदः शुद्धो रोगघ्नः कीर्त्तिवर्द्धनः।

---

क्षीणधातुत्वात्, कृशस्य क्षीणप्राणत्वात्, भीतस्य व्याकुलमनस्त्वात्, रुक्षस्य विरेचनं ग्रहणीदूषकत्वात्, शोषिणः पुरीषस्योपस्तम्भकत्वात्, तृष्णार्त्तस्य रोगवर्द्धकत्वात्, नवज्वरेऽविपक्वदोषनिर्हरणैर्मरणप्रसङ्गात्; एवं सर्व्वत्र निषिद्धम्॥ २३–२५॥

सर्व्वरोगप्राधान्यात् प्रथमं ज्वरचिकित्सामाह **क्रमेणत्यादि**—नैकुम्भबीजानि दन्तीबीजानि। दन्तीवारिणेति—भाव्यद्रव्यसमं क्वाथ्यं, क्वाथ्यादष्टगुणं जल, मित्यादिपरिभाषया दन्तीक्वाथो ग्राह्यः, तेन क्वाथेन पिष्ट्वा-सप्तधा भावना कार्य्या॥ १॥

**हिङ्गुलेश्वरे** वातज्वरेति वातप्रधानज्वर इत्यर्थः॥ २॥

**धूमकेतुरसे**—सूतादिद्रव्यचतुष्टयं समं समभागम्। परिमर्द्य त्रिघस्रमिति आर्द्रकरसेन त्रिदिनं परिमर्द्य धूमकेतुर्भवेदित्यर्थः॥ ३॥

**मृत्युञ्जयरसे**—पिप्पलीकणेति षष्ठीसमासः, न तु कणो जीरकं। यदाह

यशःप्रदः शिवः साक्षात् मृत्युञ्जयरसः स्मृतः ॥ ४ ॥
विषस्यैकस्तथा भागो मरिचं पिप्पली-कणः ।
गन्धकस्य तथा भागो भागः स्यात् टङ्कणस्य च ॥ ५ ॥
सर्वत्र समभागः स्यात् हिङ्गुलन्तु द्विभागिकम् ।
चूर्णयेत् खल्लमध्ये तु मुद्गमानां वटीं चरेत् ॥ ६ ॥
जम्बीरस्य रसेनात्र कार्य्यं हिङ्गुलशोधनम् ।
रसश्चेत् समभागः स्यात् हिङ्गुलं नेष्यते तदा ॥ ७ ॥
गोमूत्रशोधितञ्चात्र विषं सौरविशोधितम् ।
मृत्युरूपं ज्वरं हन्ति मृत्युञ्जयरसः स्मृतः ॥ ८ ॥
मृत्युर्विनिर्जितो यस्मात् तेन मृत्युञ्जयो रसः ।
मधुना लेहनं प्रोक्तं सर्वज्वरनिवृत्तये ॥ ९ ॥
दध्युदकानुपानेन वातज्वरनिबर्हणः ।
आर्द्रकस्य रसैः पानं दारुणे सान्निपातिके ॥ १० ॥
जम्बीरद्रवयोगेन अजीर्णज्वरनाशनः ।
अजाजीगुडसंयुक्तो विषमज्वरनाशनः ॥ ११ ॥
तीव्रज्वरे महाघोरे पुरुषे यौवनान्विते ।
पूर्णमात्रा प्रदातव्या पूर्णं वटीचतुष्टयम् ॥ १२ ॥
स्त्रीबालवृद्धक्षीणेषु चार्द्धमात्रा प्रकीर्त्तिता ।
अतिवृद्धे च क्षीणे च शिशौ चाल्पवयस्यपि ॥ १३ ॥
तुर्य्यमात्रा प्रदातव्या व्यवस्थासारनिश्चिता ।
नवज्वरे महाघोरे यामैकात् नाशयेद् ध्रुवम् ॥ १४ ॥
मध्यज्वरे तथा जीर्णे त्रिरात्रात् नाशयेद् ध्रुवम् ।
सप्ताहात् सन्निपातोत्थं ज्वराजीर्णकसंज्ञकम् ॥ १५ ॥

### जयावटी—

विषं त्रिकटुकं मुस्तं हरिद्रा निम्बपत्रकम् ।

---

सोमेश्वरः,—विषस्यैकं तथा भागं पिप्पल्या मरिचस्य च । गन्धकस्य तथा भागं भागं स्याट्टङ्कणस्य च । सर्व्वत्र समभागं स्याद्धिङ्गुलन्तु द्विभागिकमित्यादि ॥ ४-१५ ॥

जयावटिकायां—जयन्तीमूलचूर्णं तुल्यांशं देयं योगवाहिकत्वात्, एवं

विडङ्गमष्टमं चूर्णं छागमूत्रैः समं समम् ।
चणकाभा वटी कार्य्या स्यात्-जया योगवाहिका ॥ १६ ॥

जयन्ती वटिका—

विषं पाठाऽश्वगन्धा च वचा तालीशपत्रकम् ।
मरिचं पिप्पली निम्बमजामूत्रेण तुल्यकम् ।
वटिका पूर्ववत् कार्य्या जयन्ती योगवाहिका ॥ १७ ॥

जया जयन्ती वटीप्रयोगविधिः—

जयन्ती वा जया वाऽथ क्षीरैः पित्तज्वरापहा ।
मुद्गामलकयूषेण पथ्यं देयं घृतं विना ॥ १८ ॥
जयन्ती वा जया वाऽथ सक्षौद्रमरिचान्विता ।
सन्निपातज्वरं हन्ति रसश्चानन्दभैरवः ॥ १९ ॥
जयन्ती वा जया वाऽथ विषमज्वरनुद् घृतैः ।
सर्वज्वरं मधुव्योषैः गवां मूत्रेण शीतकम् ॥ २० ॥
चन्दनस्य कषायेण रक्तपित्तज्वरापहा ।
जयन्ती वा जया वाऽथ माक्षिकेण च कामजित् ॥ २१ ॥
जयन्ती वा जया क्षीरैः पाण्डुशोथविनाशिनी ।
जयन्ती वा जया वाऽथ तण्डुलोदकपानतः ॥ २२ ॥
अश्मरीं हन्ति नो चित्रं मूत्रकृच्छ्रन्तु दारुणम् ।
जयन्तीं वा जयां वाऽथ गोमूत्रेण युतां पिबेत् ॥ २३ ॥
हन्त्याशु काकणं कुष्ठं सुलेपेन च तद् द्रुतम् ।
द्विनिष्कं केतकीमूलं पिष्ट्वा तोयेन पाययेत् ॥ २४ ॥
जयन्ती वा जया वाऽथ मेहं हन्ति सुराह्वयम् ।
जयन्ती वा जया वाऽथ मधुना मेहजित् भवेत् ॥ २५ ॥
लोध्रमुस्ताऽभयातुल्यं कट्फलञ्च जलैः सह ।
क्वाथयित्वा पिबेच्चानु मधुना सर्वमेहजित् ॥ २६ ॥
जयन्तीं वा जयां वाऽथ गुडैः कोष्णजलैः पिबेत् ।
त्रिदोषोत्थं हरेत् गुल्मं * रसश्चानन्दभैरवः ॥ २७ ॥
जयन्ती वा जया हन्ति शुण्ठ्या सर्वं भगन्दरम् ।

---

जयन्तीवटिकायामपि ॥ १६—१७ ॥

जयन्ती वा जया वाऽथ तक्रेण ग्रहणीप्रणुत् ॥ २८ ॥
जयन्ती वा जया वाऽथ* रसश्चानन्दभैरवः ।
रक्तपित्ते त्रिदोषोत्थे शीततोयेन पाययेत् ॥ २९ ॥
जयन्ती वा जया वाऽथ भृङ्गद्रावैर्निशान्ध्यनुत् ।
जयन्तीं वा जयां वाऽथ घृष्ट्वा स्तन्येन चाञ्जयेत् ।
स्रावणं सर्वदोषोत्थं मांसवृद्धिञ्च नाशयेत् ॥ ३० ॥

भस्मेश्वरयोगः--

भस्म षोडशनिष्कं स्यादारण्योपलकोद्भवम् ।
निष्कत्रयञ्च मरिचं विषनिष्कञ्च चूर्णयेत् ॥ ३१ ॥
अयं भस्मेश्वरो नाम सन्निपातनिकृन्तनः ।
पञ्चगुञ्जामितं खादेदार्द्रकस्य रसेन तु ॥ ३२ ॥

स्वच्छन्दभैरवरसः—

ताम्रभस्म विषं हेम्नः शतधा भावितं रसैः ।
गुञ्जार्द्धं सन्निपातादि नवज्वरहरं परम् ॥ ३३ ॥
आर्द्राम्बुशर्करासिन्धु-युतः स्वच्छन्दभैरवः ।
इक्षुद्राक्षासिताश्चापि दधि पथ्यं रुचौ ददेत् ॥ ३४ ॥

ज्वरमुरारिरसः--

हिङ्गुलञ्च विषं व्योषं टङ्गणं नागराभये ।
जयपालसमायुक्तं सद्यो ज्वरविनाशनम् ॥ ३५ ॥

नवज्वरेभाङ्कुशः—

सगन्धटङ्कं रसतालकञ्च, विमर्दितं भावय मीनपित्तैः ।
दिनत्रयं वल्लमितं प्रदद्यात्, वृन्ताकतक्रौदनमेव पथ्यम् ।
नवज्वरेभाङ्कुशनामधेयः, क्षणेन घर्मोद्गममातनोति ॥३६॥

त्रैलोक्यडुम्बररसः—

सूतार्कगन्धचपलाजयपालतिक्ता,
पथ्या त्रिवृच्च विषतिन्दुकजं समांशम् ।

---

स्वच्छन्दभैरवरसे—हेम्न इति धुस्तूरस्य । ज्वरमुरारिरसे सर्व्वचूर्णसमं जयपालचूर्णं, सर्व्वं पिष्ट्वा कलायप्रमाणा वटी कार्य्या ॥३३-३४॥

संमर्द्य वज्रिपयसा मधुना द्विगुञ्जः,
त्रैलोक्यडुम्बररसोऽभिनवज्वरघ्नः ॥ ३७ ॥

प्रतापमार्त्तण्डरसः—

विषहिंगुलजैपाल-टङ्कणं क्रमवर्द्धितम् ।
रसः प्रतापमार्त्तण्डः सद्यो ज्वरविनाशनः ॥ ३८ ॥

तरुणज्वराररिसः—

जैपालगन्धं त्रिषपारदञ्च-तुल्यं 'कुमारीस्वरसेन पिष्टम् ।
अस्य द्विगुञ्जा हि सितोदकेन, ख्यातो रसोऽयं तरुणज्वरारिः ३९
दातव्य एषोऽहनि पञ्चमे वा, षष्ठेऽथवा सप्तम एव वाऽपि ।
जाते विरेके विजितो ज्वरः स्यात् , पटोलमुद्गाम्बुनिषेवणेन ॥४०॥

गदमुरारिः—

रसबलिशिललौहव्योषताम्राणि तुल्या-
न्यथ सदरद-नागाभ्याञ्च भागः प्रदिष्टः ।
भवति गदमुरारिश्चास्य गुञ्जाद्वयं वै,
क्षपयति दिवसेन प्रौढमामज्वराख्यम् ॥ ४१ ॥

विद्याधररसः--

रसो गन्धस्ताम्रस्त्रिकटुकटुकीटङ्कणवरा-
त्रिवृद्दन्ती हेम द्युमणिविषमेतत्समभिदम् ।
समस्तैस्तुल्यं स्याद्विमलजयपालोद्भवरजः
ततः स्नुक्क्षीरेण प्रचुरमृदितं दन्तिसलिलैः ॥ ४२ ॥
द्विगुञ्जाऽस्य प्रौढं जयति वटिका साममतुलं
ज्वरं पाण्डुं गुल्मं ग्रहणिगुदकीलोद्भवरुजः ।

---

**त्रैलोक्यडुम्बररसे**—अर्कस्ताम्रं, चपला पिप्पली, तिक्ता कटुकी, विषतिन्दुकजं मधुरतिन्दुकफलम् ॥ ३७ ॥

**तरुणज्वराररिसे**—तुल्यमिति सर्व्वं समभागं, न तु स्वरसेन तुल्यम् ॥ ३९-४० ॥

**गदमुरारिरसे**—शिला मनःशिला, छान्दसत्वाद् ह्रस्वः । नागं सीसकम् ॥ ४१ ॥

**विद्याधररसे**—वरा त्रिफला, हेम धुस्तूरबीजं, द्युमणिः अर्कमूलं,

मरुच्छूलाजीर्णं प्रबलमथ सामं क्रिमिगदं ।
विबन्धं प्लीहानं प्रबलमपि विद्याधररसः ॥ ४३ ॥

अमृतमञ्जरी—

हिङ्गुलं मरिचं टङ्कं पिप्पली विषमेव च ।
जातीकोषं समं सर्वं जम्बीराद्भिर्विमार्दितम् ॥ ४४ ॥
गुञ्जाद्वयं त्रयं वाऽपि देयञ्च सान्निपातिके ।
कासश्वासौ जयत्याशु सर्वज्वरविनाशनः ॥ ४५ ॥

महाज्वराङ्कुशः—

सूतं गन्धं विषं तुल्यं धूर्त्तबीजं त्रिभिः समम् ।
चतुर्णां द्विगुणं व्योषं-चूर्णं गुञ्जाद्वयं हितम् ॥ ४६ ॥
जम्बीरस्य च मज्जाभिरार्द्रकस्य रसैर्युतम् ।
महाज्वराङ्कुशो नाम ज्वराष्टकनिषूदनः ॥ ४७ ॥
ऐकाहिकं द्व्याहिकं वा त्र्याहिकञ्च चतुर्थकम् ।
विषमञ्च त्रिदोषोत्थं हन्ति सर्वं न संशयः ॥ ४८ ॥

ज्वरकेशरिका—

शुद्धसूतं विषं व्योषं गन्धं त्रैफलमेव च ।
जयपालं समं कुर्य्याद् भृङ्गातोयेन मर्दयेत् ॥ ४९ ॥
वटिकां गुञ्जमात्रान्तु कृत्वा वैद्यः प्रयत्नतः ।
प्रमाणं सर्षपाकारं बालानाञ्च प्रशस्यते ॥ ५० ॥
नारिकेलाम्बुना वाऽपि सर्वज्वरविनाशिनी ।
नारिकेलजलं शस्तं कर्षत्रयं पिबेदनु ॥ ५१ ॥
सितया च समं पीता पीत्तज्वरविनाशिनी ।
मरिचेन च पीता सा सन्निपातज्वरं जयेत् ॥ ५२ ॥
पिप्पलीजीरकाभ्यान्तु दाहज्वरविनाशिनी ।
विषमज्वरभूतोत्थं ज्वरं प्लीहानमेव च ॥ ५३ ॥
अग्निमान्द्यमजीर्णञ्च श्वयथुञ्च सुदारुणम् ।

---

विमलजयपालोद्भवरज-इति शोधितजयपालबीजचूर्णम् ॥ ४२—४३ ॥

महाज्वराङ्कुशे—व्योषचूर्णमिति मिलितत्रिकटुचूर्णं सर्व्वापेक्षया द्विगुणम् ॥ ४६–४८ ॥

शूलाजीर्णं तथा गुल्मं कुष्ठाष्टादश पित्तजान् ।
ज्वरकेशरिका ख्याता तरुणज्वरनाशिनी ॥ ५४ ॥

नवज्वरेभसिंहः—

शुद्धसूतं तथा गन्धं लौहं ताम्रञ्च सीसकम् ।
मरिचं पिप्पलीं विश्वं समभागं विचूर्णयेत् ॥ ५५ ॥
अर्द्धभागं विषं दद्यात् मर्दयेत् वासरद्वयम् ।
शृङ्गबेरानुपानेन दद्यात् गुञ्जाद्वयं भिषक् ॥ ५६ ॥
नवज्वरे महाघोरे वातसङ्ग्रहणीगदे ।
नवज्वरेभसिंहोऽयमेषु रोगेषु योज्यते ॥ ५७ ॥

## अथ निरामज्वरे ।

उदकमञ्जरीरसः—

सूतो गन्धष्टङ्कणः सोषणः स्यादेतैस्तुल्या शर्करा मत्स्यपित्तैः ।
भूयो भूयो भावयेत्तु त्रिरात्रं वल्लो देयः शृङ्गवेरस्य वारा ॥५८॥
सम्यक् तापे वारिभक्तं सतक्रं वृन्ताकाढ्यं पथ्यमेतत् प्रदिष्टम् ।
आङ्गं रोगं हन्ति सामं प्रभावात् पित्ताधिक्ये मूर्ध्नि वारिप्रयोगः ॥५९॥

चन्द्रशेखरो रसः—

विहाय शर्करां यदा, प्रदीयते मनःशिला ।
तदा निरामकज्वराऽरिरेष चन्द्रशेखरः ॥ ६० ॥

पञ्चवक्त्ररसः—

रसो गन्धकष्टङ्कणः सोषणोऽयं, फणी पिप्पलीत्येष धुस्तूरपिष्टः ।
जयेत् सन्निपातं द्विगुञ्जानुपानं भवेदर्कमूलाम्बु सव्योषचूर्णम् ॥६१॥

पर्पटरसः—

शुद्धसूतं द्विधा गन्धं मर्द्यं भृङ्गरसेन च ।
मृतं ताम्रं लोहभस्म पादांशेन तयोः क्षिपेत् ॥ ६२ ॥

---

ज्वरकेशरिकायां—त्रिफलमिति त्रिफलाचूर्णम् ॥ ४९-५४ ॥
नवज्वरेभसिंहे—विश्वं शुण्ठीचूर्णम् ॥ ५५-५७ ॥
उदकमञ्जरीरसे—ऊषणं मरिचं, शर्करा विषं तच्च सर्व्वद्रव्यसमं । त्रिरात्रमिति चतुर्विंशति प्रहरपर्य्यन्तं । वृन्ताको वार्त्ताकुफलम् ॥५८-५९॥
पञ्चवक्त्ररसे—धुस्तूरपिष्ट इति धुस्तूररसैः पिष्टः ॥ ६१ ॥

लौहपात्रे च विपचेत् चालयेत् लौहचाटुना ।
तत् क्षिपेत् कदलीपत्रे गोमयोपरिसंस्थिते ॥ ६३ ॥
पश्चात् सञ्चूर्णयेत् खल्ले निर्गुण्ड्या भावयेद्दिनम् ।
जयन्तीत्रिफलाकन्या-वासाभार्गीकटुत्रिकैः ॥ ६४ ॥
भृङ्गाग्निमूलमुण्डीभिर्भावयेत् दिनसप्तकम् ।
अङ्गारैः स्वेदयेत् किञ्चित् पर्पटाख्यो महारसः ॥ ६५ ॥
चतुर्गुञ्जामितो भक्ष्यः सम्यक् श्लेष्मज्वरं हरेत् ।
पथ्याशुण्ठ्यमृताक्काथमनुपानं प्रयोजयेत् ॥ ६६ ॥

वातपित्तान्तकरसः—

मृतसूताभ्रमुस्तार्कं तीक्ष्णमाक्षिकतालकम् ।
गन्धकं मर्दयेत् तुल्यं यष्टिद्राक्षाऽमृतारसैः ॥ ६७ ॥
धात्रीशतावरीद्रावैः द्रवैः क्षीरविदारिजैः ।
दिनं दिनं विभाव्याथ सिताक्षौद्रयुता वटी ॥ ६८ ॥
माषमात्रं निहन्त्याशु वातपित्तज्वरं क्षयम् ।
दाहं तृषां भ्रमं शोषं वातपित्तान्तको रसः ।
सिताक्षीरं पिबेच्चानु यष्टिक्काथं सितायुतम् ॥ ६९ ॥

विश्वेश्वररसः—

मृतसूतार्कतीक्ष्णञ्च तालं गन्धञ्च कट्फलम् ।
मेषशृङ्गी वचा शुण्ठी भार्गी पथ्या च बालकम् ॥ ७० ॥
धन्याकं मर्दयेत् तुल्यं पर्पटोत्थद्रवैर्दिनम् ।
मद्यं माषं लिहेत् क्षौद्रैः कफपित्तमदात्यये ॥ ७१ ॥
रसो विश्वेश्वरो नाम प्रोक्तो नागार्जुनेन च ।
काकमाचीरसं चानु सैन्धवेन युतं पिबेत् ॥ ७२ ॥

शीतारिरसः—

पारदं गन्धकं शुद्धं टङ्कणञ्च समं समम् ।
पारदात् द्विगुणं देयं जैपालं तुषवर्जितम् ॥ ७३ ॥
सैन्धवं मरिचं चिञ्चात्वग्भस्म शर्कराऽपि च ।

---

पर्पटीरसे—तयोरिति रसगन्धकयोः ॥ ६२-६३ ॥
वातपित्तान्तकरसे—तीक्ष्णं लौहं, तालं हरितालम् ॥ ६७-६९ ॥

प्रत्येकं सूतकं तुल्यं जम्बीरैर्मर्दयेत् दिनम् ॥ ७४ ॥
द्विगुञ्जस्ततस्तोयेन वातश्लेष्मज्वरापहः।
रसः शीतारिनामायं शीतज्वरहरः परः ॥ ७५ ॥

चिन्तामणिरसः—

रसविषगन्धकटङ्कण-ताम्रयवक्षारकञ्च सव्योषम्।
तालकफलत्रयञ्च, क्षौद्रं दत्त्वा शतं वारान् ॥ ७६ ॥
संमर्द्य रक्तिविमिता, वटिका कार्य्या भिषग्वरैः प्राज्ञैः।
शुण्ठीपिष्टेन समं चैकां द्वे वाऽथवा तिस्रः ॥ ७७ ॥
संप्राश्य नारिकेलज-जलमनुपेयञ्च विमलमतिमद्भिः।
सैन्धवजीरकसहितं तक्रं पथ्यं प्रयोक्तव्यम् ॥ ७८ ॥
प्रशमयति सन्निपात-ज्वरं तथा जीर्णकज्वरं विविधम्।
प्लीहानं चाध्मानं, कासं श्वासं च वह्निमान्द्यञ्च।
चिन्तामणी रसोऽयं किल स्वयं भैरवेण निर्दिष्टः ॥ ७९ ॥

चिन्तामणिरसः—( प्रकारभेदेन—)

रसं गन्धं विषं लौहं धूर्त्तबीजन्तु तत्समम्।
द्वौ भागौ ताम्रवह्निञ्च व्योषचूर्णञ्च तत्समम् ॥ ८० ॥
जम्बीरस्य च मज्जाभिरार्द्रकस्य रसैर्युतम्।
अस्यानुपानेन वटीं ज्वरे देया प्रयत्नतः ॥ ८१ ॥
गुञ्जाद्वयां वटीं खादेत् सद्यो ज्वरविनाशिनीम्।
वातिकं पैत्तिकञ्चापि श्लैष्मिकं सान्निपातिकम् ॥ ८२ ॥
ऐकाहिकं द्व्याहिकञ्च चातुर्थकविपर्य्ययम्।
असाध्यञ्चापि साध्याञ्च ज्वरञ्चैवातिदुस्तरम् ॥ ८३ ॥
अग्निमान्द्येऽप्यजीर्णे च आध्मानेऽनिलसम्भवे।
अतिसारे च्छर्दिते च अरोचकनिपीडिते ॥ ८४ ॥
ज्वरान् सर्वान् निहन्त्याशु भास्करस्तिमिरं यथा।
चिन्तामणिरसो नाम सर्वज्वरकुलान्तकः ॥८५॥

---

शीतारिरसे—शर्करा विषम् ॥ ७३-७५ ॥
चिन्तामणिरसे—व्योषं त्रिकटु, फलत्रयं त्रिफला ॥ ७६-७९ ॥
चिन्तामणिरसे—धूर्त्तबीजन्तु तत्सममिति मिलितसर्वचूर्णसमं धुस्तूरबीजम् ॥ ८०-८५ ॥

## अथ सन्निपातज्वरे

### कुलवधूरसः—

शुद्धसूतं मृतं ताम्रं मृतं नागं मनःशिला ।
तुत्थकं तस्य तुल्यांशं दिनमेकं विमर्दयेत् ॥ ८६ ॥
द्रवैश्चोत्तरवारुण्याश्चणमात्रा वटी कृता ।
सन्निपातं निहन्त्याशु नस्यमात्रेण दारुणम् ।
एषा कुलवधूर्नाम जले घृष्ट्वा प्रयोजयेत् ॥ ८७ ॥

### जयमङ्गलरसः—

भस्मसूताभ्रकं तारं मुण्डतीक्ष्णालमाक्षिकम् ।
वह्निटङ्कणकव्योषं समं संमर्दयेत् दिनम् ॥ ८८ ॥
पाठानिर्गुण्डिकायष्टि बिल्वमूलकषायकैः ।
ततो मूषागतं रुद्ध्वा विपचेद् भूधरे पुटे ॥ ८९ ॥
माषैकं दशमूलस्य कषायेण प्रयोजयेत् ।
अञ्जनेनाथवा नस्यात् सन्निपातं जयेद् ध्रुवम् ॥ ९० ॥

### नस्यभैरवरसः—

मृतसूतार्कतीक्ष्णाग्निं टङ्कणं खर्परं समम् ।
सव्योषमर्कदुग्धेन दिनञ्च मर्दयेत् दृढम् ।
अर्कक्षीरयुतं नस्यं सन्निपातहरं परम् ॥ ९१ ॥

### अञ्जनभैरवरसः—

सूततीक्ष्णकणागन्धमेकांशं जयपालकम् ।
सर्वैस्त्रिगुणितं जम्बूवारिणा च सुपेषितम् ।
नेत्राञ्जनेन हन्त्याशु सर्वोपद्रवमुद्धतम् ॥ ९२ ॥

### अञ्जनोरसः—

गन्धेशं लशुनाम्भोभिर्मर्दयेद् याममात्रकम् ।
तस्योदकेन संयुक्तं नस्यं तत् प्रतिबोधकृत् ।

---

**कुलवध्वां**—तस्य तुल्यांशमित्येकभागतुल्यं । यद्यपि नस्यमित्युक्तं तथाप्यत्राञ्जनेन व्यवहरन्ति वृद्धाः ॥ ८६-८७ ॥

**जयमङ्गले**—विह्निश्चित्रकः । ८८-९० ॥

**अञ्जनभैरवे**—एकांशमिति प्रत्येकमेकांशम् ॥ ९२ ॥

मरिचेन समायुक्तं हन्ति तन्द्राप्रलापकान् ॥ ९३ ॥

अञ्जनो रसः-( प्रकारभेदेन )

वाह्लीकं रसकं तुत्थं कर्पूरं मृतशुल्वकम् ।
कासमर्दरसैर्मर्द्य दिनार्द्धं वटकीकृतम् ।
अञ्जनं ज्वरदाहघ्नं सर्वदोषनिषूदनम् ॥ ९४ ॥

त्रैलोक्यसुन्दरः-रसः—

रसगन्धकयोर्माषौ प्रत्येकं कज्जलीकृतौ ।
शक्रश्च मुषली चैव धुस्तूरं केशराजकम् ॥ ९५ ॥
देवदाली जयन्ती च तथा मण्डूकपर्णिका ।
एषां पत्ररसैः शाणैः शिलायां खल्लयेत् पुनः ॥ ९६ ॥
शोषयित्वा वटी कार्य्या त्वनेका राजिकोपमा ।
त्रिदोषजं ज्वरं हन्ति तथा प्रबलकोष्ठकम् ॥ ९७ ॥
तप्ते तु नारिकेलस्य जलं देयं प्रयत्नतः ।
यदा वटी न कार्य्या तु तदा खाद्या तु रक्तिका ।
त्रैलोक्यसुन्दरो नाम सन्निपातहरो रसः ॥ ९८ ॥

अन्यस्वच्छन्दभैरवरसः—

रसगन्धकयोः शाणं प्रत्येकं कज्जलीकृतम् ।
सुवर्णमाक्षिकं शाणं शुद्धञ्चैकत्र कारयेत् ॥ ९९ ॥
रुद्रजटा निसिन्धुश्च नागदाऽऽमलकी तथा ।
विषकण्टालिका चैषां स्वरसं शाणमात्रकम् ॥ १०० ॥
दत्त्वा संशोध्य संमर्द्य कार्य्या मुद्गसमा वटी ।
आर्द्रकस्य रसैः पेया जीरकञ्चानु भक्षयेत् ॥ १०१ ॥
स्वच्छन्दभैरवाख्योऽयं सन्निपातोग्रव्यहृत् मतः ।

---

अञ्जनरसे—ईशः पारदः ॥ ९३ ॥

अञ्जनरसे—वाह्लीकं हिङ्गु, रसकं स्फटिकारीति लोके । कासमर्दः कालकासन्दा इति ख्यातः क्षुपविशेषः ॥ ९४ ॥

त्रैलोक्यसुन्दररसे—शक्रः कुटजः । मुषली इत्यत्र सुषवीति केचित् पठन्ति, तत् तु न सम्यक् व्यवहारसिद्धं । देवदाली हस्तिघोषकः ॥९५-९८॥

स्वच्छन्दभैरवरसे—नागदा हरीतकी, विषकण्टालिका विषकाटाली-

ग्रहणीसूतिकाऽऽतङ्कं नाशयेदविचारतः॥ १०२॥

अथ शीताङ्गसंन्निपातलक्षणम्—

शीतं शरीरं शीताङ्गे छर्द्यतीसारकम्पनम्।
क्षुद्विघातोऽङ्गमर्दश्च हिक्का श्वासः क्लमो वमिः।
सर्वाङ्गशिथिलत्वञ्च सन्निपाते प्रजायते॥ १०३॥

आनन्दभैरवो रसः—

हिङ्गुलञ्च विषं व्योषं मरिचं टङ्गणं कणा।
जातीकोषसमं चूर्णं जम्बीरद्रवमार्दितम्।
रक्तिमानां वटीं कुर्य्यात् खादेदार्द्रकसंयुताम्॥ १०४॥
वटीद्वयं त्रयं वाऽपि सन्निपाते सुदारुणे।
ज्वरमष्टविधं हन्ति तथाऽतीसारनाशनः॥ १०५॥
जीर्णज्वरहरश्चैव तथा सर्वाङ्गभेदकः।
आमवातादिरोगञ्च नाशयेदविकल्पतः॥ १०६॥

आनन्दभैरवी वटिका—

विषं त्रिकटुकं गन्धं टङ्गणं मृतशुल्बकम्।
धुस्तूरस्य च बीजानि हिङ्गुलं नवमं स्मृतम्॥ १०७॥
एतानि समभागानि दिनैकं विजयाद्रवैः।
मर्दयेत् चणकाभान्तु वटीञ्चानन्दभैरवीम्॥ १०८॥
भक्षयेच्च पिबेच्चानु रविमूलकषायकम्।
सव्योषं हन्ति नो चित्रं सन्निपातं सुदारुणम्।
शीताङ्गे सन्निपाते वा सामान्ये वा त्रिदोषजे॥ १०९॥

---

ति ख्याता॥ ९९-१०२॥

आनन्दभैरवीवटिकायां शीताङ्गसान्निपात इत्युक्तं किञ्च रोगविनिश्चय-संग्रहे-शीताङ्गसन्निपातलक्षणं नोक्तं तस्मादत्र तल्लक्षणमाह **शीतं शरीर-मित्यादि**॥ १०३॥

**आनन्दभैरवरसे**—व्योषं त्रिकटुकं, अत्र पिप्पल्या भागद्वयं व्योषम-ध्ये पठितत्वात् पृथगुपादानाच्च एवं मरिचस्यापि॥ १०४-१०६॥

**आनन्दभैरवीवटिकायां**—विजया जयन्ती, त्रैलोक्यविजयेति केचि-त्। रविमूलकषायकं अर्कमूलक्वाथः, कटुरोहिण्या मूलं कटुकं मूलं। वागुजी

धान्याकपिप्पलीशुण्ठी-कटुकीकण्टकारिका।
पिप्पलीसंयुतं क्वाथं चतुर्गुञ्जा च पर्पटी ॥ ११० ॥
सन्निपातज्वरं हन्ति वटिकाऽऽनन्दभैरवी।
मूलञ्च कटुरोहिण्याः समं बिल्वं सजीरकम् ॥ १११ ॥
दध्ना पिष्टं पिबेच्चानु वटीं चानन्दभैरवीम्।
सन्निपातातीसारघ्नीं पथ्यं शाक[1]विवर्जितम् ॥ ११२ ॥
आनन्दभैरवीं पीत्वा क्वाथं वरुणसम्भवम्।
पाययेदश्मरीं हन्ति सप्तरात्रात् न संशयः ॥ ११३ ॥
वागुजीसम्भवैस्तैलैर्वटीञ्चानन्दभैरवीम्।
लेहयेत् निष्कमात्रान्तु गलत्कुष्ठञ्च नाशयेत् ॥ ११४ ॥
दधिमस्तुसिताक्षौद्रैः वटीञ्चानन्दभैरवीम्।
भक्षयेत् मूत्रकृच्छ्रार्त्तो यवक्षारं सिताऽन्वितम् ॥ ११५ ॥
गोदुग्धं क्वथितञ्चानु शीतलं मधुना पिबेत्।
गुञ्जामूलं पिबेत् क्षीरैरनुपानं प्रशस्यते ॥ ११६ ॥
अनेन चानुपानेन वटिकाऽऽनन्दभैरवी।
देया रुद्रजटाक्षौद्रैः सर्वमेहप्रशान्तये ॥ ११७ ॥

प्राणेश्वरी रसः—

शुद्धसूतं तथा गन्धं सूतार्द्धं विषसंयुतम्।
समं तत् मर्दयेत् ताल[2]मूलीनीरैस्त्र्यहं बुधः ॥ ११८ ॥
पूरयेत् कूपिकाऽन्तश्च सन्निरुध्य विशोषयेत्।
सप्तभिर्मृत्तिकावस्त्रैर्वेष्टयित्वा तु शोधयेत् ॥ ११९ ॥
पुटेत् कुम्भीप्रमाणेन स्वाङ्गशीतं समुद्धरेत्।
गृहीत्वा कूपिकायाश्च मर्दयेच्च दिनं ततः ॥ १२० ॥
अजाजी जीरकं हिङ्गु-सर्जिकाटङ्कणैर्युतम्।
गुग्गुलुः पञ्चलवणं यवक्षारो यमानिका ॥ १२१ ॥
मरिचं पिप्पली चैव प्रत्येकञ्च समांशतः।
एषां कषायेण पुनर्भावयेत् सप्तधाऽऽतपे ॥ १२२ ॥

---

ह।कुर्वीति ख्याता, सोमराजीति केचित्। रुद्रजटेति स्वनामख्याता १०७–११७
प्राणेश्वररसे--कूपिका।मिति काचकूपिकां, प्रत्येकञ्च समांशत इति अ-

---

१ शाकविवर्जनमेवाऽत्र पथ्यमित्यर्थः।

नागवल्लीदलयुतं पञ्चगुञ्जं रसेश्वरम् ।
दद्यात् नवज्वरे तीव्रे कोष्णं वारि पिबेदनु ॥ १२३ ॥
प्राणेश्वररसो नाम्ना सन्निपातप्रकोपजित् ।
शीतज्वरे दाहपूर्वे गुल्मे शूले त्रिदोषजे ॥ १२४ ॥
वाञ्छितं भोजनं दद्यात् कुर्य्याच्चन्दनलेपनम् ।
तापोद्रेकप्रशमनो नानाऽतीसारनाशनः ।
भवेच्च नात्र सन्देहः स्वास्थ्यञ्च लभते नरः ॥ १२५ ॥

सन्निपातभैरवरसः—

ताम्रं गन्धं रसं श्वेत-गुञ्जामरिचपूतनाः ।
समीनपित्तजैपालान् तुल्यानेकत्र मर्दयेत् ॥ १२६ ॥
गुञ्जाचतुष्टयञ्चास्य नवज्वरहरं परम् ।
ज्वराङ्कुशः सन्निपात-भैरवोऽयं प्रकाशितः ॥ १२७ ॥

शीतभञ्जीरसः—

रसो हिङ्गुलगन्धश्च जैपालं सम्मितं त्रिभिः ।
दन्तीक्वाथेन संमर्द्य रसो ज्वरहरः परः ॥ १२८ ॥
आर्द्रकस्य रसेनैव दापयेद्रक्तिकाद्वयम् ।
नवज्वरं महाघोरं नाशयेद् याममात्रतः ॥ १२९ ॥
शर्करादधिभक्तञ्च पथ्यं देयं प्रयत्नतः ।
शीततोयं पिबेच्चानु-इक्षुमुद्गरसो हितः ।
शीतभञ्जीरसो नाम सर्वज्वरकुलान्तकः ॥ १३० ॥

उन्मत्तरसः[1]—

रसं गन्धञ्च तुल्यांशं धुस्तूरफलजैर्द्रवैः ।

---

जाज्यादिद्रव्यं प्रत्येकं सूततुल्यम् ॥ ११८–१२५ ॥

**सन्निपातभैरवे**—पूतना हरीतकी, मीनपित्तं मत्स्यपित्तम् १२६–१२७

**शीतभञ्जीरसमाह** रस इत्यादि—रसादिगन्धान्तैस्त्रिभिस्तुल्यं जैपालं, रसादित्रयाणां त्रयो भागाः ॥ १२८–१३० ॥

**उन्मत्तरसे**—तुल्यं त्रिकटुकमिति त्रिकटुचूर्णं प्रत्येकं रसतुल्यं प्रदा-

---

१ उन्मत्तः कितवो धूर्त्तो, धत्तूरः कनकाह्वयः । मातुलो मदनश्चेत्यमरः । धुस्तुरस्तु पुण्डरीशो धूस्तूरः कनकाह्वय इति शब्दवर्णवः ।

मर्दयेत् दिनमेकन्तु तुल्यं त्रिकटुकं क्षिपेत् ॥ १३१ ॥
उन्मत्ताख्यो रसो नाम नस्ये स्यात् सन्निपातजित्।
सन्निपातार्णवे मग्नं योऽभ्युद्धरति रोगिणम्।
कस्तेन न कृतो धर्मः ? काञ्च पूजां न सोऽर्हति ॥ १३२ ॥

मृतसञ्जीवनो रसः—

म्लेच्छस्य भागाश्चत्वारो जैपालस्य त्रयो मताः।
द्वौ भागौ टङ्कणस्यैव भागैकममृतस्य च ॥ १३३ ॥
तत्सर्वं मर्दयेत् श्लक्ष्णं शुष्कं यामं भिषग्वरः।
शृङ्गवेराम्बुना देयो व्योषचित्रकसैन्धवैः ॥ १३४ ॥
माषद्वयमितस्तापं हरत्येष विनिश्चयः।
घनसारेण सारेण चन्दनेन विलपनम् ॥ १३५ ॥
विदध्यात् कांस्यपात्रे च सेचयेद्रोगिणं भिषक्।
शाल्यन्नं तक्रसहितं भोजयेदिक्षुसंयुतम् ॥ १३६ ॥
सन्निपाते महाघोरे त्रिदोषे विषमज्वरे।
आमवाते वातशूले गुल्मे प्लीह्नि जलोदरे ॥ १३७ ॥
शीतपूर्वे दाहपूर्वे विषमे सततज्वरे।
अग्निमान्द्ये च वाते च प्रयोज्योऽयं रसेश्वरः।
मृतसञ्जीवनो नाम विख्यातोऽयं रसायने ॥ १३८ ॥

खल्पवडवानलरसः

शुद्धताम्रस्य भागैकं मरिचस्य तथैव च।
विषं तत्तुल्यकं दद्यात् तत्सर्वं श्लक्ष्णचूर्णितम् ॥ १३९ ॥
लाङ्गलीरससंयुक्तं तत्सर्वं पुटके पचेत्।
रक्तिकाद्वितयं वाऽपि त्रितयं वा प्रकल्पयेत् ॥ १४० ॥
दोषे व्योषसमायुक्तो त्रिदोषशमनो भवेत्।

---

तव्यम् ॥ १३१–१३२ ॥

**मृतसञ्जीवनरसमाह** म्लेच्छस्येत्यादि—म्लेच्छस्य ताम्रस्य, अमृतस्य विषस्य घनसारेण कर्पूरेण,सारेणेति चन्दनेन सह सम्बन्धः ॥ १३३–१३८ ॥

**स्वल्पवडवानलरसे**—विषं तत्तुल्यकमित्येकभागसमं विषं लाङ्गल

६

भक्षयेत् पवने चोग्रे वडवानलसंज्ञितम् ॥ १४१ ॥

बृहद्वडवानलो रसः

सूतकं गन्धकञ्चैव हरितालं मनःशिला।
अभ्रकं वत्सनाभश्च दारु जङ्गमजं विषम् ॥ १४२ ॥
जैपालात् सार्द्धशतकं सर्वं सञ्चूर्ण्य मर्दयेत्।
मात्स्यमाहिषामायूरच्छागपित्तैर्विभावयेत् ॥ १४३ ॥
वटिकां शीततोयेन कुर्य्यात् गुञ्जाप्रमाणतः।
वडवानलनामाऽयं नारिकेलजलेन वै।
भक्षयेत् सन्निपातार्त्तो मुक्तस्तस्मात् सुखी भवेत् ॥१४४॥

सूचिकाभरणो रसः—

रसगन्धकनागञ्च विषं स्थावरजङ्गमम्।
मात्स्यवाराहमायूरच्छागपित्तैर्विभावयेत् ॥ १४५ ॥
सूचिकाभरणो नाम भैरवेण प्रकीर्त्तितः।
सूचिकाग्रेण दातव्यः सन्निपातनिबर्हणः ॥ १४६ ॥

पञ्चाननरसः—

शम्भोः कण्ठविभूषणं समरिचं दैत्येन्द्ररक्ते रविः
पक्षौ सागरलोचनं शशियुगं भागोऽर्कसङ्ख्यान्वितः।
खल्ले तत् परिमर्दितं रविजलैर्गुञ्जैकमात्रं ददेत्
सिंहोऽयं ज्वरदन्तिदर्पदलनः पञ्चाननाख्यो रसः ॥ १४७ ॥

त्रिदोषनीहारविनाशसूर्य्यो रसः

रसेन गन्धं द्विगुणं कृशानो रसैर्विमर्द्याष्टदिनानि घर्मे।

---

विषलाङ्गलीति ख्याता ॥ १३९–१४१ ॥

**बृहद्वडवानलरसे**—वत्सनाभं स्वनामख्यातमूलविषं, जङ्गमविषं कालसर्पविषं, दारु दारुमूषं, जैपालं सार्द्धशतकमिति आकृतिमानात् १४२–१४

**सूचिकाभरणरसे**—विषं स्थावरजङ्गमामिति स्थावरविषं जङ्गमविषञ्च। पेयोऽयमार्द्रकरसेन ॥ १४५–१४६ ॥

**पञ्चाननरसे**—शम्भोः कण्ठविभूषणं विषं, दैत्येन्द्रो गन्धकः, रक्तं हिङ्गुलं, रविस्ताम्रं, विषादीनां यथाक्रमं पक्षावादिभागो बोध्यः। रविजलैः अर्कमूलरसैः ॥ १४७ ॥

रसाष्टभागन्त्वमृतञ्च दद्यात् विमर्दयेत् वह्निरसेन किञ्चित् ॥ १४८ ॥
पित्तैस्तु सम्भावित एष देयः त्रिदोषनीहारविनाशसूर्य्यः ॥ १४९ ॥

रसराजेन्द्रः रसः—

पलं शुद्धस्य सूतस्य पलं ताम्रमयस्तथा ।
अभ्रं नागं पलं वङ्गं पलं गन्धकतालकम् ॥ १५० ॥
पलं शुद्धविषं चूर्णं सर्वमेकत्र कारयेत् ।
मर्दयेत् काकमाच्याश्च आर्द्रकस्य रसेन च ॥ १५१ ॥
मात्स्यवाराहमायूर-च्छागमाहिषपित्तकैः ।
मर्दयेद् भिन्नभिन्नञ्च त्रिकटोरम्बुभिस्तथा ॥ १५२ ॥
सिद्धोऽयं रसराजेन्द्रो धन्वन्तरिसुसंस्कृतः ।
गुञ्जामात्रं रसं दद्यात् सुरसार-ससंयुतम् ॥ १५३ ॥
मेघवारिप्रवाहेण धारितं वारि मस्तके ।
अनिवारो यदा दाहस्तदा देया च शर्करा ।
भोजनं दधिसंयुक्तं वारमेकन्तु दापयेत् ॥ १५४ ॥
ईश्वरेण हतः कामः केशवेन च दानवः ।
पावकेन यथा शीतमनेन च तथा ज्वरः ॥ १५५ ॥

मृतसञ्जीवनो रसः—

शुद्धसूतं द्विधा गन्धं खल्ले तत् कज्जलीकृतम् ।
अभ्रलौहकयोर्भस्म ताम्रभस्म समं समम् ॥ १५६ ॥
विषं तालं वराटञ्च शिलाहिङ्गुलचित्रकान् ।
हस्तिशुण्डी चातिविषा त्र्यूषणं हेममाक्षिकम् ॥ १५७ ॥
चूर्णं विमर्दयेद्द्रावैरार्द्रकस्य दिनत्रयम् ।
निर्गुण्डीविजयाद्रावैस्त्रिदिनं मर्दयेत् पुनः ॥ १५८ ॥
काचकूप्यां निवेश्याथ वालुकायन्त्रके पचेत् ।
द्वियामान्ते समुद्धृत्य मर्दयेदार्द्रकैर्द्रवैः ॥ १५९ ॥

---

**त्रिदोषनीहाररसे**—कृशानुश्चित्रकः अमृतं विषं तच्च रसस्याष्टमांशम् । १४८–१४९

**रसराजेन्द्ररसे**—अयो लौहं, तच्च पलं ग्राह्यं, एवं गन्धकं तालकमपि प्रत्येकं पलं । त्रिकटोरम्बुभिस्त्रिकटुकक्वाथैः, सुरसा तुलसी ॥ १५०–१५५ ॥

**मृतसञ्जीवनरसे**—समं सममिति अभ्रादीनां प्रत्येकं गन्धकसममि-

मृतसञ्जीवनो नाम रसोऽयं शङ्करोदितः।
मृतोऽपि सन्निपातार्त्तो जीवत्येव न संशयः॥ १६०॥

गन्धककज्जलीविधिः—

कण्टकारी सिन्धुवारस्तथा नाट-करञ्जकम्[1]।
अमीषां रसमादाय कृत्वा खर्परखण्डके॥ १६१॥
प्रक्षिप्य गन्धकं तत्र ज्वालां मृद्वग्निना ददेत्।
गन्धके स्नेहतापन्ने पारदं तत्समे क्षिपेत्॥ १६२॥
मिश्रीकृत्य ततो द्वाभ्यां द्रवं तमवतारयेत्।
आमर्दयेत् तथा तन्तु यथा स्यात् कज्जलप्रभम्॥ १६३॥
ततस्तु रक्तिकामस्य जीरकस्य च माषकम्।
माषैक लवणस्यापि पर्णे कृत्वा प्रदापयेत्॥ १६४॥
ज्वरे त्रिदोषजे घोरे जलमुष्णं पिबेदनु।
छर्द्यां शर्करया दद्यात् सामे दद्यात् तथा गुडम्॥ १६५॥
क्षये च च्छागदुग्धं स्यादनुपानं प्रयोजितम्।
रक्तातिसारे कुटज-मूलवल्कलजं रसम्॥ १६६॥
रक्तक्षये तथा दद्यादुडुम्बरभवं रसम्।
सर्वव्याधिहरश्चायं गन्धकः कज्जलीकृतः।
आयुर्वृद्धिकरश्चायं मृतञ्चापि प्रबोधयेत्॥ १६७॥

पित्तभावितौषधप्रयोगे उपचारः—

ये रसाः पित्तसंयुक्ताः प्रोक्ताः सर्वत्र शम्भुना।
जलसेकावगाहैश्च बलिनस्ते तु नान्यथा।
यथालाभेन पित्तेन रसाः सर्वे भवन्ति हि॥ १६८॥

---

त्यर्थः। द्वियामान्ते समुद्धृत्येति तद्वालुकायन्त्रं प्रहरद्वयं पक्त्वा ततः कूपिकायाः समाकृष्य पुनरार्द्रकद्रवेण संमर्द्य वटिका कार्य्येत्यर्थः॥१५६-१६०॥

**कण्टकारीत्यादि**—कण्टकार्य्यादीनां स्वरसं खर्परे कृत्वा तत्र गन्धकं निःक्षिप्य ज्वलदङ्गारोपरि स्थापयेत्, द्रवीभूते गन्धकं तत्तुल्यं पारदं निःक्षिप्य द्वयं मिश्रितमालोक्य अवतार्य्य कज्जलीकृत्य च पर्णादिभिः सह भक्षयेत्॥ १६१-१६७॥

---

१ करञ्जः स कण्टकः, कण्टकरहितश्च, अत्र स कण्टकोऽपेक्षितः।

वेतालो रसः—

रसं गन्धं विषञ्चैव मरिचाऽऽलं समांशिकम् ।
शिलायां मर्दयेत् तावद् यावज्जायेत कज्जलम् ॥ १६९ ॥
गुञ्जामात्रं प्रयोक्तव्यं हरेद्द्वादशसंख्यकम् ।
साध्यासाध्यं निहन्त्याशु सन्निपातं सुदारुणम् ॥ १७० ॥
दन्तपङ्क्तिर्दृढा यस्य लोचने भ्रान्ततारके ।
चलिते चेन्द्रियग्रामे वेतालं विनियोजयेत् ॥ १७१ ॥
म्लानेषु लिप्तदेहेषु मोहग्रस्तेषु देहिषु ।
दातुमर्हति वेतालं यमदूतनिवारकम् ॥ १७२ ॥

चन्द्रशेखरो रसः—

शुद्धसूतं समं गन्धं मरिचं टङ्कणं तथा ।
चतुस्तुल्या शिला योज्या मत्स्यपित्तेन भावयेत् ॥ १७३ ॥
त्रिदिनं मर्दयेत् तेन रसोऽयं चन्द्रशेखरः ।
द्विगुञ्जमार्द्रकद्रावैर्देयं शीतोदकं पुनः ॥ १७४ ॥
तक्रभक्तञ्च वृन्ताकं भिषक् तत्र प्रयोजयेत् ।
त्रिदिनात् श्लेष्मपित्तोत्थमत्युग्रं नाशयेत् ज्वरम् ॥१७५॥

कस्तूरीभैरवो रसः—

हिङ्गुलञ्च विषं टङ्कः जातीकोषफलं तथा
मरिचं पिप्पली चैव कस्तूरी च समांशिका ।
रक्तिद्वयं ततः खादेत् सन्निपाते सुदारुणे ॥ १७६ ॥

बृहत्कस्तूरीभैरवो रसः—

मृतं वङ्गं खर्परञ्च कस्तूरी स्वर्णतारके ।
एतेषां समभागेन कर्षमेकं पृथक् पृथक् ॥ १७७ ॥
मृतं कान्तं पलं देयं हेमसारं द्विकार्षिकम् ।
रसभस्म लवङ्गञ्च जातिकाफलमेव च ॥ १७८ ॥
वक्ष्यमाणौषधैर्भाव्यं प्रत्येकं दिनसप्तकम् ।

---

**वेतालरसे**—आलं हरितालं । चलिते चेन्द्रियग्राम इति स्वविषयग्रहणाशक्ते इन्द्रियसमग्रे ॥ १६९–१७२ ॥

**बृहत्कस्तूरीभैरवे**—तारकं रौप्यं, हेमसारं स्वर्णमाक्षिकं, द्विचन्द्र-

द्रोणपुष्परसैर्वाऽपि नागवल्ल्या रसेन च ॥ १७९ ॥
दत्त्वा द्विचन्द्रत्रिकटू यत्नतो वटिकां चरेत् ।
वातात्मके सन्निपाते महाश्लेष्मगदेषु च ॥ १८० ॥
त्रिदोषजनिते घोरे सन्निपाते सुदारुणे ।
नष्टगर्भे नष्टशुक्रे प्रमेहे विषमज्वरे ॥ १८१ ॥
कासे श्वासे क्षये गुल्मे महाशोथे महागदे ।
स्त्रीणां शतं गच्छतश्च न च शुक्रक्षयो भवेत् ।
एतान् सर्वान् निहन्त्याशु भास्करस्तिमिरं यथा ॥१८२॥

अन्यबृहत्कस्तूरीभैरवो रसः—

मृगमद·शशिसूर्य्यौ धातकी शूकशिम्बी
कनकरजतमुक्ता विद्रुमो लौहपाठाः ।
क्रिमिरिपुघनविश्वातोयतालाभ्रधात्री·
रविदलरसपिष्टः कस्तूरीभैरवोऽयम् ॥ १८३ ॥
कस्तूरीभैरवः ख्यातः सर्वज्वरविनाशनः ।
आर्द्रकस्य रसैः पेयो विषमज्वरनाशनः ॥ १८४ ॥
द्वन्द्वजान्[२] भौतिकान् वाऽपि ज्वरान् कामादिसम्भवान् ।
अभिचारकृतांश्चैव तथा शुक्रकृतान् पुनः ।
निहन्याद्भक्षणादेव डाकिन्यादियुतांस्तथा ॥ १८५ ॥

सौभाग्यवटी—

सौभाग्यामृतजीरपञ्चलवणव्योषाभयाक्षामला·
निश्चान्द्राभ्रकशुद्धगन्धकरसानेकीकृतान् भावयेत् ।

---

मिति कर्पूरं द्विकर्षमित्यर्थः । एवं त्रिकटुचूर्णान्यपि । तानि कर्पूरत्रिकटुचूर्णानि भावनानन्तरं देयानि । महाश्लेष्मगदाष्वति श्लेष्मणोऽत्युल्बणत्वे १७७–१८२

**अपरबृहतकस्तूरीभैरवे**—मृगमदः कस्तूरी, शशी कर्पूरं, सूर्य्यस्ताम्रं, क्रिमिरिपुर्विडङ्गं, घनं मुस्तकं, तोयं बालकं, तालं हरितालं, रविदलरसः अर्कपत्ररसः ॥ १८३–१८५ ॥

**सौभाग्यवटीमाह** सौभाग्येत्यादि—सौभाग्यं टङ्गणं, अमृतं विषं, सौ·

---

१ छन्दोऽनुरोधाद्–ह्रस्वः पठितव्यः ।
२ बृहत्कस्तूरी भैरवोरसःप्रयोक्तव्यः, स एतान् सर्वान् निहन्ति·इत्यन्वयः ।

निर्गुण्डी, युग-भृङ्गराजकवृषापामार्गपत्रोल्लसत्-
प्रत्येकस्वरसेन सिद्धगुडिका हन्ति त्रिदोषोदयम् ॥ १८६ ॥
येषां शीतमतीव देहमखिलं स्वेदद्रवार्द्रीकृतम्
निद्रा घोरतरा समस्तकरणव्यामोहमुग्धं मनः।
शूलश्वासबलासकाससहितं मूर्च्छाऽरुचिस्तृड्ज्वरं
तेषां वै परिहृत्य मृत्युवदनात् प्रत्यानयेत् जीवनम् ॥१८७॥

सन्निपातहरो रसः—

पारदं गन्धकं टङ्कं सोषणं गजपिप्पली।
व्योषञ्च धुस्तूरजलैः पिष्टं गुञ्जाद्वयं द्रुतम्।
सन्निपातं निहन्त्यर्क-कषायैर्व्योषचूर्णितैः ॥ १८८ ॥

सन्निपातवडवानलो रसः—

रसाष्टकोऽमृतं सप्त स्यात् षष्ठो गन्धतालयोः।
दन्तीबीजानि षड्भागाः पञ्चभागन्तु टङ्कणम् ॥ १८९ ॥
चत्वारि धूर्त्तबीजस्य व्योषस्य त्रितयो भवेत्।
एतानि वह्निमूलस्य क्वाथेन परिमर्दयेत् ॥ १९० ॥
आर्द्रकस्य रसेनाथ देयं गुञ्जाद्वयं हितम्।
वडवानलसंज्ञोऽयं सन्निपातहरः परः ॥ १९१ ॥

सिंहनादरसः—

लौहपात्रगते गन्धे द्राविते तत्र निक्षिपेत्।
शुद्धसूतं समं चाभ्रं भार्गीद्रावं तयोः समम् ॥ १९२ ॥
निर्गुण्ड्याः पल्लवोत्थञ्च तुल्यं तुल्यं प्रदापयेत्।
पचेन्मृद्वग्निना तावत् यावत् शुष्कं द्रवद्वयम् ॥ १९३ ॥
विषपादयुतः सोऽयं सिंहनादरसोत्तमः।
गुञ्जामात्रः प्रदातव्यः सन्निपातज्वरान्तकः।

---

भाग्यादिसप्तदशद्रव्याणि समभागेन चैकीकृतानि लौहपात्रे पाषाणपात्रे वा कृत्वा भावयेत्। युगभृङ्गराजः भृङ्गराजः केशराजश्च। सिद्धगुडिकेति सिद्धफला गुडिका ॥ १८६-१८७ ॥

**सन्निपातहररसे**—धुस्तूरजलैः धुस्तूररसः ॥ १८८ ॥

**सिंहनादरसे**—भार्गीद्रावं तयोः सममिति रसगन्धकयोः समं भार्गीद्रा-

अनुपानं पिबेद् व्याघ्री क्राथं पुष्करचूर्णितम् ॥ १९४ ॥

सन्निपातसूर्य्यो रसः—

रसेन गन्धं द्विगुणं विमर्द्य तत्पादभागं रवितारहेम ।
भस्मीकृतं योजय, मर्द्दयेत्तद् दिनत्रयं वह्निरसेन घर्मे ॥
विषञ्च दत्त्वाऽत्र कलाप्रमाणं मत्स्यादिपित्तैः परिभावयेच्च ।
वल्लद्वयं चास्य ददीत वह्निकटुत्रयार्द्रद्रवसंप्रयुक्तम् ॥ १९६ ॥
तैलेन चाभ्यञ्जनमेव कुर्य्यात् स्नानं जलेनापि च शीतलेन ।
यावद्भवेद् दुःसहशीतमस्य मूत्रं पुरीषञ्च शरीरकम्पः ॥ १९७ ॥
पथ्ये यदीहा परिजायतेऽस्य मरीचखण्डं दधिभक्तकञ्च ।
स्वल्पं ददीतार्द्रकमत्स्यशाकं दिनान्तरं स्नानविधिञ्च कुर्य्यात् ॥

## अभिन्यासे—

स्वच्छन्दनायको रसः—

सूतगन्धकलौहानि रौप्यं संमर्दयेत् त्र्यहम् ।
सूर्य्यावर्त्तश्च निर्गुण्डी तुलसी गिरिकार्णिका ॥ १९९ ॥
अग्निवल्ल्यार्द्रकं वह्निः विजयाऽथ जया सह ।
काकमाचीरसैरेषां पञ्चपित्तैश्च भावयेत् ॥ २०० ॥
अन्धमूषागतं पश्चात् वालुकायन्त्रगं दिनम् ।
विपचेत् चूर्णितं खादेत् माषैकं चार्द्रकद्रवैः ॥ २०१ ॥
निर्गुण्डीदशमूलानां कषायं सोषणं पिबेत् ।
अभिन्यासं निहन्त्याशु रसः स्वच्छन्दनायकः ।
छागीदुग्धेन मुद्गं वा पथ्यमत्र प्रयोजयेत् ॥ २०२ ॥
मायूरमात्स्यवाराहच्छागमाहिषमेव च ।
पञ्चपित्तमिदं देयं भावनासु च सर्वदा ॥ २०३ ॥

सन्निपातान्तको रसः—

शुद्धसूतः समो गन्धः दरदः शुद्धखर्परम् ।

---

वं निर्गुण्ड्याः स्वरसञ्च । विषपादमिति गन्धकापेक्षया चतुर्थांशम् १९२–१९४

**सन्निपातसूर्य्ये**—तत्पादभागमिति भस्मीकृतं रवितारहेम प्रत्येकं मिलितरसगन्धकयोः पादभागम् ॥ १९५–१९८ ॥

अथाभिन्यासज्वरचिकित्सामाह **सूतेत्यादि** ॥ १९९–२०३ ॥

रसस्य द्विगुणौ देयौ मृतताम्राम्लवेतसौ ॥ २०४ ॥
भृङ्गराजद्रवैर्भाव्यं प्रत्यहं भावना पृथक् ।
दातव्यं तच्चतुर्गुञ्जमार्द्रकस्य रसैः सह ।
सन्निपातं निहन्त्याशु सन्निपातान्तको रसः ॥ २०५ ॥

## विषमजीर्णज्वरे—

### विषमज्वरलक्षणम्—

यः स्यादनियतात् कालाच्छीतोष्णाभ्यां तथैव च ।
वेगतश्चापि विषमः स ज्वरो विषमः स्मृतः ॥ २०६ ॥

### अथ जीर्णज्वरलक्षणम्—

त्रिसप्ताहव्यतीतस्तु ज्वरो यस्तनुतां गतः ।
प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते ॥ २०७ ॥

### अथ ज्वराङ्कुशो रसः—

रसस्य द्विगुणं गन्धं गन्धतुल्यञ्च टङ्कणम् ।
रसतुल्यं विषं योज्यं मरिचं पञ्चधा विषात् ॥ २०८ ॥
दन्तीबीजं कटफलञ्च प्रत्येकं मरिचोन्मितम् ।
ज्वराङ्कुशो रसो नाम मर्दयेद् याममात्रकम् ।
मासैकेन निहन्त्याशु ज्वरं जीर्णं त्रिदोषजम् ॥ २०९ ॥

### अथ ज्वरारि-अभ्रम्—

अभ्रं ताम्रं रसं गन्धं विषञ्चैव समं समम् ।
द्विगुणं धूर्त्तबीजञ्च व्योषं पञ्चगुणं मतम् ॥ २१० ॥
आर्द्रकस्य रसेनैव वटी कार्य्या द्विगुञ्जिका ।
अनुपानं प्रयोक्तव्यं यथादोषानुसारतः ॥ २११ ॥
अभ्रं ज्वरारिनामेदं सर्वज्वरविनाशनम् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ २१२ ॥
विषमाख्यान् ज्वरान् सर्वान् धातुस्थान् विषमज्वरान् ।
प्लीहानं यकृतं गुल्ममग्रमांसं सशोथकम् ॥ २१३ ॥

---

**सन्निपातान्तकरसे**—मिलितौ ताम्राम्लवेतसौ रसस्य द्विगुणौ देयौ ॥ २०४–२०५ ॥

**ज्वरारि-अभ्रे**—द्विगुणं धूर्त्तबीजमिति एकभागापेक्षया द्विगुणं एवं

हिक्कां श्वासञ्च कासञ्च मन्दानलमरोचकम् ।
नाशयेन्नात्र सन्देहो वृक्षमिन्द्राशनिर्यथा ॥ २१४ ॥

अथ ज्वराशनि-रसः—

रसं गन्धं सैन्धवञ्च विषं ताम्रं समांशिकम् ।
सर्वचूर्णसमं लौहं तत्समं शुद्धमभ्रकम् ॥ २१५ ॥
लौहे च लौहदण्डे च निर्गुण्डीस्वरसेन च ।
मर्दयेत् यत्नतः पश्चात् मरिचं सूततुल्यकम् ॥ २१६ ॥
नागवल्ल्या दलेनैव दातव्यो रक्तिसम्मितः ।
सर्वज्वरहरः श्रेष्ठो ज्वरान् हन्ति सुदारुणान् ॥ २१७ ॥
कासं श्वासं महाघोरं विषमाख्यं ज्वरं वमिम् ।
धातुस्थं परमं दाहं ज्वरं दोषत्रयोद्भवम् ॥ २१८ ॥

अथ अर्द्धनारीश्वरो रसः—

रसगन्धौ समौ शुद्धौ विषं ग्राह्यञ्च तत्समम् ।
जैपालं तत्समं ग्राह्यं मरिचञ्च चतुर्गुणम् ॥ २१९ ॥
त्रिफलाया रसैर्मर्द्यं भावना पञ्चधा तथा ।
जम्बीराणां द्रवैर्नस्यमेकस्मिन् नासिकापुटे ॥ २२० ॥
शरीरार्द्धगतं घोरं ज्वरं हन्ति न संशयः ।
अर्द्धनारीश्वरो नाम रसः शम्भुप्रकीर्त्तितः ॥ २२१ ॥

अथ चन्दनादिलौहम्—

रक्तचन्दनह्रीबेर-पाठोशीरकणाशिवा-
नागरोत्पलधात्रीभिस्त्रिमदेन समन्वितम् ।
लौहं निहन्ति विविधान समस्तान् विषमज्वरान् ॥ २२२ ॥

---

व्योषमप्येकभागापेक्षया पञ्चगुणम् ॥ २१०-२१४ ॥

**अर्द्धनारीश्वररसे**—विषं ग्राह्यञ्च तत्सममिति मिलितरसगन्धयोः समं । जैपालं तत्सममिति विषतुल्यं जैपालं देयम् । मरिचञ्च चतुर्गुणमितक-भागापेक्षया मरिचस्य चातुर्गुण्यमिति श्रीकण्ठः । सोमेश्वरस्तु मिलितर-सगन्धकापेक्षया चतुर्गुणमित्याह व्यव हारोऽप्यनेनैव ॥ २१९-२२१ ॥

**चन्दनादिलौहे**—लौहं सर्व्वचूर्णसमं लौहप्रधानयोगत्वात् जीर्णज्वर-हरत्वाच्च ॥ २२२ ॥

अथ ज्वरारिरसः—

शुद्धसूतं द्विधा गन्धं विषञ्चैव कटुत्रयम्।
नागभस्म शिला चैव प्रत्येकं कर्षमानकम्॥ २२३॥
शुद्धतालर्द्धकर्षञ्च शुल्वमेकत्र कारयेत्।
धुस्तूरस्य च बीजानि कार्षिकाणि प्रकल्पयेत्॥ २२४॥
रोहित-मत्स्यपित्तेन अर्कक्षीरार्द्रकाम्बुना।
मर्दयेदुदयास्तञ्च चणकाभा वटी कृता॥ २२५॥
आर्द्रकस्य रसैः कर्षैर्मधुमाषसमायुतम्।
भक्षयेत् प्रातरुत्थाय ज्वरारिरससंज्ञितम्॥ २२६॥
वातिकं पैत्तिकञ्चैव कफजं नाशयेद् ध्रुवम्।
वातपित्तसमुद्भूतं वातश्लैष्मिकमेव च॥ २२७॥
भयादुत्पत्तिकं वाऽपि शोकोत्पन्नमथापि वा।
अभिचाराभिषापोत्थं भूतोत्थञ्च ज्वरं जयेत्॥ २२८॥
मेदःप्राप्तं सन्ततञ्च रसस्थे तु ज्वरे तथा।
सन्निपातज्वरे देयो मधुव्योषसमायुतः॥ २२९॥
घर्मं पित्तं तथा कम्पं दाहं हन्ति न संशयः।
इन्द्रवज्रो यथा वृक्षं तथा ज्वरविनाशनः॥ २३०॥
वर्जयेत् क्षीरमांसञ्च दधितक्रसुराघृतम्।
ज्वरे मांसास्थिगे चैव रक्तस्थे तु ज्वरे नृणाम्॥ २३१॥
शैत्ये दाहे तथा घर्मे प्रलापे चातुराहिके।
महावेगे ज्वरे चैव जीर्णे चापि प्रदापयेत्॥ २३२॥

अथ सर्वज्वरहरलौहम्—

चित्रकं त्रिफला व्योषं विडङ्गं मुस्तकं तथा।
श्रेयसी पिप्पलीमूलमुशीरं देवदारु च॥ २३३॥
किराततिक्तकं पाठा कटुकी कण्टकारिका।
शोभाञ्जनस्य बीजानि मधुकं वत्सकं समम्॥ २३४॥
लौहतुल्यं गृहीत्वा तु वटिकां कारयेद्भिषक्।

---

ज्वरारिरसे—शुल्वमपि कर्षार्द्धमानम्॥ २२३–२३२॥
सर्व्वज्वरहरलौहे—व्योषं त्रिकटु, श्रेयसी गजपिप्पली, उशीरं वीर-

सर्वज्वरहरं लौहं सर्वरोगहरं तथा ॥ २३५ ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ।
द्वन्द्वजं विषमाख्यञ्च धातुस्थञ्च ज्वरं जयेत् ॥ २३६ ॥
शीतं कम्पं तृषां दाहं घर्मस्रुतिवामिभ्रमीन् ।
रक्तपित्तमतीसारं मन्दाग्निं कासमेव च ॥ २३७ ॥
प्लीहानं यकृतं गुल्मं सामवातं सुदारुणम् ।
अर्शांसि घोरमुदरं मूर्च्छां पाण्डुं हलीमकम् ॥ २३८ ॥
अजीर्णं ग्रहणीञ्चैव यक्ष्माणं शोथमेव च ।
बल्यं वृष्यं पुष्टिकरं सर्वरोगनिसूदनम् ।
सर्वज्वरहरं लौहं चन्द्रनाथेन भाषितम् ॥ २३९ ॥

अथ बृहत्सर्वज्वरलौहम्—

पारदं गन्धकञ्चैव ताम्रमभ्रञ्च माक्षिकम् ।
हिरण्यं तारतालञ्च कर्षमेकं पृथक् पृथक् ॥ २४० ॥
कान्तलौहं पलं देयं सर्वमेकीकृतं शुभम् ।
वक्ष्यमाणौषधैर्भाव्यं प्रत्येकं दिनसप्तकम् ॥ २४१ ॥
कारवेल्लरसैर्वाऽपि दशमूलरसेन च ।
पर्पट्याश्च कषायेण त्रिफलाक्वाथकेन वा ॥ २४२ ॥
गुडूच्याः स्वरसेनैव नागवल्लीरसेन च ।
काकमाचीरसेनैव निर्गुण्ड्याः स्वरसैस्तथा ॥ २४३ ॥
पुनर्नवाऽऽर्द्रकाम्भोभिर्भावना परिकीर्त्तिता ।
रक्तिकादिक्रमेणैव वटिकां कारयेद्भिषक् ॥ २४४ ॥
पिप्पलीगुडसंयुक्ता वटिका ज्वरनाशिनी ।
ज्वरमष्टविधं हन्ति जीर्णज्वरहरं[1] तथा ॥ २४५ ॥
वारिदोषोद्भवञ्चैव नानादोषोद्भवं तथा ।
सततादि ज्वरं हन्ति साध्यासाध्यमथापि वा ॥ २४६ ॥

---

णमूलं, किराततिक्तकं भूनिम्बं, वत्सकं कुटजं; समभागेन मिलितं चूर्णं लौहतुल्यं गृहीत्वा माषकोन्मिता वटिका कार्य्या ॥ २३३–२३९ ॥

बृहत्सर्व्वज्वरहरलौहे—माक्षिकं स्वर्णमाक्षिकं तारं रौप्यं, तालं हरि-

---

१ जीर्णज्वरहरमित्यस्य लौहमित्यनेन सम्बन्धः।

क्षयोद्भवञ्च धातुस्थं कामशोकभवं तथा ।
भूतावेशभवञ्चैव त्रिदोषजनितं तथा ॥ २४७ ॥
अभिघातज्वरञ्चैव तथाऽभिचारसम्भवम् ।
अभिन्यासं महाघोरं विषमं त्र्याहिकं तथा ॥ २४८ ॥
शीतपूर्वं दाहपूर्वं त्रिदोषं विषमज्वरम् ।
प्रलेपकज्वरं घोरमर्द्धनारीश्वरं तथा ॥ २४९ ॥
प्लीहज्वरं तथा कासं चातुर्थकविपर्य्ययम् ।
पाण्डुरोगं कामलाञ्च अग्निमान्द्यं महागदम् ।
एतान् सर्वान् निहन्त्याशु पक्षार्द्धेन न संशयः ॥ २५० ॥
शाल्यन्नं तक्रसहितं भोजयेद्विडसंयुतम् ।
ककारपूर्वकं सर्वं वर्जनीयं न संशयः ॥ २५१ ॥
मैथुनं वर्जयेत् तावद् यावन्न बलवान् भवेत् ।
सर्वज्वरहरं लौहं दुर्लभं परिकीर्त्तितम् ॥ २५२ ॥

अथ महाराजवटी—

रसगन्धकमभ्रञ्च प्रत्येकं कर्षसम्मितम् ।
वृद्धदारकवङ्गञ्च लौहं कर्षार्द्धकं क्षिपेत् ॥ २५३ ॥
स्वर्णं ताम्रञ्च कर्पूरं प्रत्येकं कर्षपादिकम् ।
शक्राशनं वरी चैव श्वेतसर्ज-लवङ्गकम् ॥ २५४ ॥
कोकिलाक्षं विदारी च मुषली शूकशिम्बिकम् ।
जातीफलं तथा कोषं बला नागबला तथा ॥ २५५ ॥
माषद्वयमितं भागं तालमूल्या रसेन च ।
पिष्ट्वा च वटिका कार्य्या चतुर्गुञ्जाप्रमाणतः ॥ २५६ ॥
मधुना भक्षयेत् प्रातर्विषमज्वरशान्तये ।
धातुस्थांश्च ज्वरान् सर्वान् हन्यादेव न संशयः ॥ २५७ ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ।
ज्वरं नानाविधं हन्ति कासं श्वासं क्षयं तथा ॥ २५८ ॥

---

तालं, नागवल्लं पर्णपत्रम् ॥ २४०–२५२ ॥

**महाराजवटिकायां—**वृद्धदारकं वृद्धदारकबीजं तच्च शोधितं ग्राह्यं, शक्राशनं त्रैलोक्यविजयाबीजं, वरी शतमूली, श्वेतसर्जो श्वेतधूनकः, मुषली

बलपुष्टिकरं नित्यं कामिनीं रमयेत् सदा ।
न च शुक्रं क्षयं याति न बलं ह्रासतां व्रजेत् ॥ २५९ ॥
उर्ध्वगश्लेष्मजं हन्ति सन्निपातं सुदारुणम् ।
कामलां पाण्डुरोगञ्च प्रमेहं रक्तपित्तकम् ।
महाराजवटी ख्याता राजयोग्या च सर्वदा ॥ २६० ॥

अथ अपरचिन्तामणिरसः—

हाटकं राजतं तालं मुक्ता गन्धकपारदौ ।
त्रिकटु कुनटी चैव कस्तूरी च पृथक् समम् ॥ २६१ ॥
जलेन वटिका कार्या द्विगुञ्जाफलमानतः ।
चिन्तामणिरसो ह्येष ज्वराष्टक-निकृन्तनः ॥ २६२ ॥

अथ त्रैलोक्यचिन्तामणिरसः—

भागद्वयं स्वर्णभस्म द्विभागं तारमभ्रकम् ।
लौहात् पञ्च प्रवालञ्च मौक्तिकं त्रयसम्मितम् ॥ २६३ ॥
भस्मसूतं सप्तकञ्च सर्वं मर्द्दयन्तु कन्यया ।
छायाशुष्का वटी कार्य्या छागीदुग्धानुपानतः ॥ २६४ ॥
क्षयं हन्ति तथा कासं गुल्मञ्चापि प्रमेहनुत् ।
जीर्णज्वरहरश्चायं उन्मादस्य निकृन्तनः ।
सर्वरोगहरश्चापि वारिदोषनिवारणः ॥ २६५ ॥

अथ वृहच्चिन्तामणिरसः—

रसं गधं विपञ्चैव त्रिकटु त्रैफलं तथा ।
शिलाह्वा रौप्यकं स्वर्णं मौक्तिकं तालकं समम् ॥ २६६ ॥
मृगकस्तूरिकायाश्च[1] ग्राह्यं षण्माषिकं भिषक् ।
भृङ्गराजरसेनैव तुलस्याः स्वरसेन वा ॥ २६७ ॥
आर्द्रकस्य रसेनैव वटीं कुर्य्यात् द्विगुञ्जिकाम् ।
चिन्तामणिरसो ह्येष सर्वरोगकुलान्तकः ॥ २६८ ॥
सन्निपातज्वरहरः कफरोगं विनाशयेत् ।

---

तालमूली, कोषं जातीकोषम् ॥ २५३–२६० ॥

त्रैलोक्यचिन्तामणिरसं—द्विभागं तारमभ्रकमिति तारमभ्रकं प्रत्येकं द्विभागं । वटिका तु द्विगुञ्जमाना ॥ २६३–२६५ ॥

---

१ पुष्पकस्तूरिका-वारणार्थं मृगग्रहणम् ।

एकजं द्वन्द्वजञ्चैव विविधं विषमज्वरम् ॥ २६९ ॥
अग्निमान्द्यं शिरःशूलं विद्रधिं सभगन्दरम् ।
एतान्येव निहन्त्याशु भास्करस्तिमिरं यथा ॥ २७० ॥

अथ पुटपाक विषमज्वरान्तकलौहम्—

हिङ्गुल-संम्भवं सूतं गन्धकेन सुकज्जलम् ।
रसपर्पटीवत् पाच्यं सूताङ्घ्रि हेमभस्मकम् ॥ २७१ ॥
लौहं ताम्रमभ्रकञ्च रसस्य द्विगुणं क्षिपेत् ।
वङ्गञ्चैव प्रवालञ्च रसार्द्धञ्च विनिक्षिपेत् ॥ २७२ ॥
मुक्ता शङ्खं शुक्तिभस्म रसपादिकमेव च ।
मुक्तागृहे च संस्थाप्य पुटपाकेन साधयेत् ॥ २७३ ॥
भक्षयेत् प्रातरुत्थाय द्विगुञ्जाफलमानतः ।
अनुपानं प्रयोक्तव्यं कणाहिङ्गु ससैन्धवम् ॥ २७४ ॥
ज्वरमष्टविधं हन्ति वातपित्तकफोद्भवम् ।
प्लीहानं यकृतं गुल्मं साध्यासाध्यमथापि वा ॥ २७५ ॥
सन्ततं सतताख्यञ्च त्र्याहिकं चतुराहिकम् ।
कामलां पाण्डुरोगञ्च शोथं मेहमरोचकम् ॥ २७६ ॥
ग्रहणीमामदोषञ्च कासं श्वासञ्च दारुणम् ।
मूत्रकृच्छ्रातिसारञ्च नाशयेदविकल्पतः ॥ २७७ ॥

अथ बृहद्विषमज्वरान्तकलौहम् —

शुद्धसूतं तथा गन्धं कारयेत् कज्जलीं शुभाम् ।
मृतसूतं हेम तारं लौहमभ्रञ्च ताम्रकम् ॥ २७८ ॥

---

**बृहच्चिन्तामणिरसे**-शिलाह्वा मनःशिला, तालकं हरितालम् २६६–२७०

**विषमज्वरान्तकलौहे**—हिङ्गुलसम्भवं सूतं हिङ्गुलोत्थपारदं तुल्यांशगन्धकेन सह कज्जलीं कृत्वा वक्ष्यमाणरसपर्पटीवत् पर्पटीकृतं। ततः पारदा च चतुर्थांशं स्वर्णभस्म, लौहं ताम्रमभ्रञ्च प्रत्येकं द्विगुणं, वङ्गं प्रवालञ्चार्द्धभागं, मुक्ता शङ्खं शुक्तिभष्म च पादांशं निःक्षिप्य कन्यानीरेण मर्द्दयेत्। ततः शुक्तिसम्पुटे कृत्वा वन्यकरीषाग्निना पुटपाकविधिना पचेत्। वटिका च द्विगुञ्जमाना ॥ २७१–२७७ ॥

**बृहद्विषमज्वरान्तके**—मृतसूतं रससिन्दूरं तालसत्त्वं हरितालभस्म,

तालसत्त्वं वङ्गभस्म मौक्तिकं सप्रवालकम् ।
सुवर्णमाक्षिकञ्चापि चूर्णयित्वा विभावयेत् ॥ २७९ ॥
निर्गुण्डी नागवल्ली च काकमाची सपर्पटी ।
त्रिफला कारवेल्लञ्च दशमूली पुनर्नवा ॥ २८० ॥
गुडूची वृषकश्चापि सभृङ्गकेशराजकः ।
एतेषाञ्च रसेनैव भावयेत् त्रिदिनं पृथक् ॥ २८१ ॥
गुञ्जामानां वटीं कुर्य्यात् शास्त्रवित् कुशलो भिषक् ।
पिप्पलीगुडकेनैव लिहेच्च वटिकां शुभाम् ॥ २८२ ॥
ज्वरमष्टविधं हन्ति निरामं साममेव वा ।
सप्तधातुगतञ्चापि नानादोषोद्भवं तथा ॥ २८३ ॥
सततादि ज्वरं हन्ति साध्यासाध्यमथापि वा ।
अभिघाताभिचारोत्थं ज्वरं जीर्णं विशेषतः ॥ २८४ ॥

अथ शीतभञ्जीरसः—

तालकं दरदोद्भूत-पारदो गन्धकः शिला ।
क्रमवृद्ध्या ताम्रपत्रीं द्रव्यैरेतैर्विलेपयेत् ॥ २८५ ॥
अधोमुखीं दृढे भाण्डे तां निरुध्याथ पूरयेत ।
चुल्ल्यां बालुकया घस्नमग्निं प्रज्वालयेद्दृढम् ॥ २८६ ॥
शीते संचूर्ण्य माषोऽस्य नागवल्लीदले स्थितः ।
भक्षितो मरिचैः सार्द्धं समस्तान् विषमज्वरान् ।
शीतदाहादिकं हन्यात् पथ्यं शाल्योदनं पयः ॥ २८७ ॥

अथ चिन्तामणिः ( प्रकाभेदेन )

तालकं शुल्वकं चूर्णं शिखिग्रीवं समांशिकम् ।
संपिष्य कारयेत् सर्वं चक्रिकासन्निभं शुभम् ॥ २८८ ॥
शरावपिहितं रात्रौ पचेद् गजपुटेन तु ।

---

सुवर्णमाक्षिकं स्वर्णमाक्षिकम् ॥ २७८–२८४ ॥

**शीतभञ्जीरसे**—दरदोद्भूतपारदः हिङ्गुलोत्थरसः । शिला मनःशिला; क्रमवृद्ध्येति—यथाक्रमं भागवृद्ध्या । अधोमुखीति तां ताम्रपात्रीं भाण्डे अधोमुखीं निरुध्य बालुकया भाण्डं प्रपूर्य्य दृढाग्निसन्तापे द्वादशप्रहरं यावत पचेत् ॥ २८५–२८७ ॥

साङ्गशीतं समुद्धृत्य भक्षयेत् माषमात्रकम् ।
शर्करासहितं सेव्यं सर्वज्वरहरं परम् ॥ २८९ ॥

अथ ज्वराङ्कुशः—

ताम्रतो द्विगुणं ताळं मर्दयेत् सुपवीद्रवैः ।
प्रपुटेत् भूधरे शीते वज्रीक्षीरैर्विमर्दयेत् ॥ २९० ॥
प्रपुटेत् भूधरे पश्चात् पञ्चगुञ्जामितं शुभम् ।
आर्द्रकस्य रसेनैव सर्वज्वरनिकृन्तनः ॥ २९१ ॥
ऐकाहिकं द्व्याहिकञ्च त्र्याहिकञ्चातुराह्निकम् ।
विषमञ्चापि शीताढ्यं ज्वरं हन्ति ज्वराङ्कुशः ॥ २९२ ॥

अथ मेघनादोरसः—

आरं कांस्यं मृतं ताम्रं त्रिभिस्तुल्यञ्च गन्धकम् ।
रसेन मेघनादस्य पिष्ट्वा रुद्ध्वा पुटे पचेत् ॥ २९३ ॥
भक्षयेत् पर्णखण्डेन विषजज्वरनाशनम् ।
अस्य मात्रा द्विगुञ्जा स्यात् पथ्यं दुग्धौदनं हितम् ।
पञ्चामृतपलञ्चैकमनुपानं प्रयोजयेत् ॥ २९४ ॥

अथ शीतज्वरहरो रसः—

सूतमाक्षिकगन्धानां भागश्चारुष्करस्य च ।
तथाऽष्टौ तालकाच्चूर्णात् रविदुग्धस्य षोडश ॥ २९५ ॥
स्नुहीक्षीरस्य चैवाष्टौ सर्वं मृद्वग्निना पचेत् ।
साङ्गशीतं समुद्धृत्य ततः खल्ले विमर्दयेत् ।
शीतज्वरहरो नाम्ना रसोऽयं परिकीर्त्तितः ॥ २९६ ॥

अथ अन्यशीतभञ्जीरसः—

पारदं रसकं तालं तुत्थं टङ्कणगन्धकम् ।

---

**मेघनादरसे**—मेघनादो रक्ततण्डुलीयकः । मात्रा चास्य द्विगुञ्जामाना ॥ २९३–२९४ ॥

**शीतज्वरहरे**—सूतादीनामेको भागः, हरितालस्याष्टौ भागाः, अर्कदुग्धस्य षोडशभागास्तथा स्नुहीदुग्धस्याष्टौ भागाः, एतत् सर्व्वमेकीकृत्य पुटपाकविधिना मृद्वग्नौ पचेदित्यर्थः ॥ २९५–२९६ ॥

**शीतभञ्जीरसे**-रसकं खर्परमिति माधवः, स्फटिकारीति चन्द्रिकाकाराः

सर्वमेतत् समं शुद्धं कारवेल्लरसैर्दिनम् ॥ २९७ ॥
मर्दयेत् तेन कल्केन ताम्रपात्रोदरं लिपेत् ।
अङ्गुलार्द्धार्द्धमानेन तं पचेत् सिकताह्वये ॥ २९८ ॥
यन्त्रे यावत् स्फुटन्त्येव व्रीहयस्तस्य पृष्ठतः ।
ततस्तत् शीतलं ग्राह्यं ताम्रपात्रोदरात् भिषक् ॥ २९९ ॥
माषैकं पर्णखण्डेन भक्षयेत् मरिचैः समम् ।
शीतभञ्जीरसो नाम त्रिदिनान्नाशयेज्ज्वरम् ॥ ३०० ॥

अथ पञ्चननो रसः—

रसकं तालकं तुत्थं टङ्कणं रसगन्धकम् ।
तुल्यांशं सुषवीतोयैर्मर्दयेत् यामयुग्मकम् ॥ ३०१ ॥
कृत्वा गोलं ताम्रपात्रेणाधोवक्त्रेण रोधयेत् ।
स्थालीं मृत्कर्पटे लिप्त्वा पचेत् चुल्ल्यां दिनं ततः ॥ ३०२ ॥
तच्छीतं ताम्रभस्मापि गृह्णीयात् सुरसाजलैः ।
यामं मर्द्यं ततो वल्लं तुलसीमरिचैर्युतम् ॥ ३०३ ॥
हन्ति सर्वं ज्वरं घोरं विषमञ्च त्रिदोषजम् ।
धात्रीकल्केन वा युक्तं दाहाख्यं विषमं जयेत् ॥ ३०४ ॥
पथ्यं दुग्धौदनं दद्यात् मुद्गयूषं सशर्करम् ।
ज्वरे धातुगते दद्यात् पिप्पलीक्षौद्रसंयुतम् ।
अयं पञ्चाननो नाम विषमज्वरनाशनः ॥ ३०५ ॥

अथ वमनयोगः—

कुमारीमूलकर्षैकं पिबेत् कोष्णजलेन तु ।

---

पारदादिषड्द्रव्येणोदरलिप्तं ताम्रपात्रं अधोमुखं कृत्वा स्थाल्यां संस्थाप्य पात्रान्तरेणाच्छाद्य बदरीपत्रकल्केन सन्धिं निरुध्य च वालुकाभिः स्थालीं प्रपूर्य्य तदुपरि व्रीहीन् प्रक्षिपेत्, ततः पात्राधो ज्वाला देया यावत् व्रीहयो न स्फुटन्ति, ततस्तत् पात्रमुद्धृत्य तुल्यांशमरिचैः सह चूर्णयेत्। मात्रा चास्य द्विगुञ्जमाना ॥ २९७ ३०० ॥

**पञ्चाननरसोऽपि** शीतभञ्जीवत् द्वादशप्रहरं पचेत् ॥ ३०१–३०५ ॥

**वमनयोगमाह कुमारिकेति**—कोष्णजलेन सह पिष्टं कुमारिकामूलं

विषमन्तु ज्वरं हन्ति वमनेन चिरन्तनम् ॥ ३०६ ॥

अथ विश्वेश्वरो रसः—

दरदं गन्धकं सूतं तुल्यांशं मर्दयेद् द्रवैः ।
अश्वत्थजैस्त्र्यहं पश्चात् रसैः कोलकमूलजैः ॥ ३०७ ॥
निदिग्धिकारसैः काक-माचिकाया रसैः पुनः ।
द्विगुञ्जां वा त्रिगुञ्जां वा गोक्षीरेण प्रदापयेत् ।
रात्रिज्वरं निहन्त्याशु नाम्ना विश्वेश्वरो रसः ॥ ३०८ ॥

अथ त्र्याहिकारिरसः—

रसकेन समं शङ्खं शिखिग्रीवञ्च पादिकम् ।
गोजिह्वया जयन्त्या च तण्डुलीयैश्च भावयेत् ॥ ३०९ ॥
प्रत्येकं सप्त सप्ताथ शुष्कं गुञ्जाचतुष्टयम् ।
जरणेन घृतेनाद्यात् त्र्याहिकज्वरशान्तये ॥ ३१० ॥

अथ चातुर्थकारिः—

हरितालं शिला तुत्थं शङ्खचूर्णञ्च गन्धकम् ।
समांशं मर्दयेत् प्राज्ञः कुमारीरसभावितम् ॥ ३११ ॥
शरावसम्पुटे कृत्वा पश्चाद् गजपुटे पचेत् ।
कुमारिकारसेनैव वल्लमात्रा वटी कृता ॥ ३१२ ॥
दत्ता शीतज्वरं हन्ति चातुर्थकं विशेषतः ।
मरिचघृतयोगेन तक्रं पीत्वा चरेद्वटीम् ।
एतया वमनं भूत्वा ज्वरस्तस्मात् विनश्यति ॥ ३१३ ॥

अथ चिन्तामणिरसः—(प्रकारभेदेन)—

रसं गन्धं विषं शुल्वं मृतमभ्रं फलात्रिकम् ।
दन्तीबीज त्र्यूषणञ्च समं खल्ले विमर्दयेत् ॥ ३१४ ॥
द्रोणपुष्पीरसैर्भाव्यं शुष्कं तद् वस्त्रगालितम् ।

---

कोष्णजलेनैव पिबेत् ॥ ३०६ ॥

**विश्वेश्वररसे**—दरद-हिङ्गुलम् । अश्वत्थजैरिति अश्वत्थवल्कलरसः ॥ ३०७–३०८ ॥

**त्र्याहिकारिरसे**—शिखिग्रीवं तुत्थकं, पादिकमिति रसकशङ्खयोः पादिकम् ॥ ३०९–३१० ॥

चिन्तामणिरसोऽजीर्णे ह्येष वै शस्यते सदा ॥ ३१५ ॥
ज्वरमष्टविधं हन्ति सर्वशूलहरः परः ।
गुञ्जैकं वा द्विगुञ्जं वा देयमार्द्रकवारिणा ॥ ३१६ ॥

अथ बृहच्चिन्तामणिरसः—

रसगन्धकलौहानि ताम्रं तारं हिरण्यकम् ।
हरितालं खर्परञ्च कांस्यं वङ्गञ्च विद्रुमम् ॥ ३१७ ॥
मुक्तामाक्षिककाशीशं शिला च टङ्कणं समम् ।
कर्पूरञ्च समं दत्वा भावना सप्त सप्तकम् ॥ ३१८ ॥
भार्गी वासा च निर्गुण्डी नागवल्ली जयन्तिका ।
कारवेल्लं पटोलञ्च शक्राशनपुनर्नवे ॥ ३१९ ॥
आर्द्रकञ्च ततो दद्यात् प्रत्येकं वारसप्तकम् ।
चिन्तामणिरसो नाम सर्वज्वरविनाशनः ॥ ३२० ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ।
द्वन्द्वजं विषमाख्यञ्च धातुस्थञ्च ज्वरं जयेत् ॥ ३२१ ॥
कासं श्वासं तथा शोथं पाण्डुरोगं हलीमकम् ।
प्लीहानमग्रमांसञ्च यकृतञ्च[1] विनाशयेत् ॥ ३२२ ॥

महाज्वराङ्कुशः—

पारदं गन्धकं ताम्रं हिङ्गुलं तालमेव च ।
वङ्गं लौहं माक्षिकञ्च खर्परञ्च मनःशिला ॥ ३२३ ॥
मृताभ्रकं गैरिकञ्च टङ्गणं दन्तिबीजकम् ।
सर्वाण्येतानि द्रव्याणि चूर्णयित्वा विभावयेत् ॥ ३२४ ॥
जम्बीरविजयाचित्र-तुलसीतिन्तिडीरसैः ।
एभिर्दिनत्रयं भाव्यं निर्जने रौद्रसंकुले ॥ ३२५ ॥

---

चिन्तामणिरसे—शुल्वं ताम्रं । त्र्यूषणं त्रिकटुकम् ॥ ३१४–३१६ ॥

बृहच्चिन्तामणिरसे—तारं रौप्यं,विद्रुमं प्रवालं, माक्षिकं स्वर्णमाक्षिकं, शिला मनःशिला, काशीशं धातुकाशीशम् । भार्ग्यादिभिः प्रत्येकशः सप्तसप्तकं भावना देया ॥ ३१७–३२२ ॥

---

१ यकृत् प्रातिपदिकं नपुंसकम्, अत्रतु द्वितीयैकवचनान्तम् । यकृच्चैव–इति पठितव्यम् । यकृत्, यकृती, यकृन्ति २ ।

चणमात्रां वटीं कृत्वा छायाशुष्काञ्च कारयेत् ।
मन्दाग्निदीपनी चैव सर्वज्वरविनाशिनी ॥ ३२६ ॥
द्वन्द्वजं सर्वजञ्चैव चिरकालसमुद्भवम् ।
ऐकाहिकं द्व्याहिकञ्च ज्वरञ्च सान्निपातिकम् ॥ ३२७ ॥
चातुर्थकं तथाऽत्युग्रं जलदोषसमुद्भवम् ।
सर्वान् ज्वरान् निहन्त्याशु भास्करस्तिमिरं यथा ।
महाज्वराङ्कुशो नाम रसोऽयं मुनिभाषितः ॥ ३२८ ॥

अथ तन्त्रान्तरोक्तमहाज्वराङ्कुशो रसः—

पारदं हिङ्गुलं ताम्रं माक्षिकं तुल्यमेव च ।
वङ्गं मृतञ्च गन्धञ्च खर्परञ्च मनःशिला ॥ ३२९ ॥
तालकं घनपाषाणं गैरिकं टङ्कणं तथा ।
दन्तीबीजानि सर्वाणि चूर्णयित्वा विभावयेत् ।
भावना पूर्ववत् देया वटीं कुर्य्याच्च पूर्ववत् ॥ ३३० ॥

अथ सर्वतोभद्ररसः—

विशुद्धं गगनं ग्राह्यं द्विकर्षं शुद्धगन्धकम् ।
तोलकं तोलकार्द्धञ्च हिङ्गुलोत्थरसं तथा ॥ ३३१ ॥
कर्पूरं केशरं मांसी तेजपत्रं लवङ्गकम् ।
जातीकोषफलञ्चैव सूक्ष्मैला करिपिप्पली ॥ ३३२ ॥
कुष्ठं तालीशपत्रञ्च धातकीचोचमुस्तकम् ।
हरीतकी च मरिचं शृङ्गवेरं बिभीतकम् ॥ ३३३ ॥
पिप्पल्यामलकञ्चैव शाणभागं विचूर्णितम् ।
सर्वमेकीकृतं पिष्ट्वा वटीं कुर्य्याद् द्विगुञ्जिकाम् ॥ ३३४ ॥
भक्षयेत् पर्णखण्डेन मधुना सितयाऽपि वा ।
रोगं ज्ञात्वाऽनुपानञ्च प्रातः कुर्य्याद् विचक्षणः ॥ ३३५ ॥
हन्ति मन्दानलान् सर्वान् आमदोषं विषूचिकाम् ।
पित्तश्लेष्मभवं रोगं वातश्लेष्मभवं तथा ॥ ३३६ ॥

---

**तन्त्रान्तरोक्त महाज्वराङ्कुशरसे**—घनपाषाणं कान्तपाषाणम् ३२९-३३०।
**सर्व्वतोभद्ररसे**—गगनमभ्रं पलार्द्धमानं, गन्धकं तोलकमानम्। अन्यत् सर्व्वं तोलार्द्धं। केशरं नागकेशरं, फलं जातीफलं। करिपिप्पली गजपि-

आनाहं मूत्रकृच्छ्रञ्च संग्रहग्रहणीं वमिम् ।
अम्लपित्तं शीतपित्तं रक्तपित्तं विशेषतः ॥ ३३७ ॥
चिरज्वरं पित्तभवं धातुस्थं विषमज्वरम् ।
कासं पञ्चविधं हन्ति कामलां पाण्डुमेव च ॥ ३३८ ॥
सर्वलोकहितार्थाय शिवेन कथितः पुरा ।
सर्वतोभद्रनामायं रसः साक्षात् महेश्वरः ॥ ३३९ ॥

अथ बृहज्ज्वरान्तकलौहम्—

रसं गन्धं तोलकञ्च जातीकोषफले तथा ।
हेमभस्म तु पादैकं तोलार्द्धं रूप्यलौहकम् ॥ ३४० ॥
शिलाजत्वभ्रकञ्चैव भृङ्गराजञ्च मुस्तकम् ।
केशराजमपामार्गं लवङ्गञ्च फलत्रिकम् ॥ ३४१ ॥
वराङ्गवल्कलञ्चैव पिप्पलीमूलमेव च ।
सैन्धवञ्च विडञ्चैव गुडूचीचूर्णमेव च ॥ ३४२ ॥
कण्टकारीं रसोनञ्च धान्यकं जीरकद्वयम् ।
चन्दनं देवदारुञ्च दार्वीन्द्रयवमेव च ॥ ३४३ ॥
किराततिक्तकं बालं तोलकञ्च समाहरेत् ।

---

प्पली । चोचं गुडत्वक् ॥ ३३१–३३९ ॥

बृहज्ज्वरान्तकलौहे—तोलकमिति रसादिफलान्तं प्रत्येकं तोलकभागं, हेमभस्म तु पादैकमिति एकभागापेक्षया पादैकं । वराङ्गवल्कलं गुड़त्वक् ।

---

१ योगोऽयं नागार्ज्जुनोक्तसिद्धप्रयोगतन्त्रस्य । तत्र हि पाठः—"रसं गन्धं पलार्द्धञ्च जाती कोषफले तथा । हेमभस्म तु कर्षार्द्धं निरुत्थं तत्र निःक्षिपेत्" ॥ तथा "किराततिक्तकं बालं पलार्द्धञ्च समाहरेत्" तथा "पलमूषणजं चूर्णं भावयेदार्द्रकैरसै"रिति । गोपालेन तु पादमात्रां कल्पयित्वा प्रतिसंस्कृत्य लिखितम् । ननु तर्हि मात्राहीनप्रस्तुतस्यौषधस्य गुणहानिर्भवतीनि चेत्, न ; तोलकशब्देनात्र पलस्यैव ग्राह्यत्वात् दीपिकाकारार्थबोधिकाकाराणामपि एतदेव मतम् । तोलार्द्धं रूप्यलौहकमिति रौप्यं लौहञ्च प्रत्येकं तोलार्द्धं ग्राह्यमिति दीपिकाकारः । परन्तु "निरुत्थं तत्र निःक्षिपेत्" इति जायान् पाठः । अत्र लौहस्य भागानुक्तेः सर्व्वद्रव्यसमत्वं ज्ञेयं लौहप्रधानयोगत्वात् जीर्णज्वरहरत्वाच्च ।

द्वितोलं मरिचं देयं भावयेदार्द्रकद्रवैः ॥ ३४४ ॥
माषार्द्धं भक्षयेत् प्रातर्मधुना मधुरीकृतम् ।
ज्वरं नानाविधं हन्ति शुक्रस्थं चिरकालजम् ॥ ३४५ ॥
साध्यासाध्यविचारोऽत्र नैव कार्य्यो भिषग्वरैः ।
अन्तर्धातुगतञ्चैव नाशयेन्नात्र संशयः ॥ ३४६ ॥
भूतोत्थं श्रमजञ्चापि सन्निपातज्वरं तथा ।
असाध्यञ्च ज्वरं हन्ति यथा सूर्योदयस्तमः ॥ ३४७ ॥
गरुडञ्च समालोक्य यथा सर्पः पलायते ।
तथैवास्य प्रसादेन ज्वरः सोपद्रवो ध्रुवम् ॥ ३४८ ॥
बलदं पुष्टिदञ्चैव मन्दाग्निनाशनं परम् ।
वीर्य्यस्तम्भकरञ्चैव कामलापाण्डुरोगनुत् ॥ ३४९ ॥
सदा रमयते नारीं न तु वीर्य्यं क्षय व्रजेत् ।
प्रमेहं विविधञ्चैव विविधां ग्रहणीं तथा ।
अनुपानविशेषेण सर्वव्याधिं विनाशयेत् ॥ ३५० ॥

अथ चूडामणिरसः—

मृतं सूतं प्रवालञ्च स्वर्णं तारञ्च वङ्गकम् ।
शुल्वं मुक्तां तीक्ष्णमभ्रं सर्वमकत्र योजयेत् ॥ ३५१ ॥
पिष्ट्वा जलेन वटिका कार्य्या वल्लप्रमाणतः ।
धातुस्थं सन्निपातोत्थं ज्वरं विषमसम्भवम् ॥ ३५२ ॥
कामशोकसमुद्भूतं त्रिदोषजनितं तथा ।
कासं श्वासञ्च विविधं शूलं सर्वाङ्गसम्भवम् ॥ ३५३ ॥
शिरोरोगं कर्णशूलं दन्तशूलं गलग्रहम् ।
वातपित्तसमुद्भूतं ग्रहणीं सर्वसम्भवाम् ॥ ३५४ ॥
आमवातं कटीशूलमग्निमान्द्यं विषूचिकाम् ।
अर्शांसि कामलां मेहं मूत्रकृच्छ्रादिकञ्च यत् ॥ ३५५ ॥

---

गुडूचीचूर्णमित्यत्र गुडूचीसत्त्वमिति व्यवहरन्ति वृद्धाः । रसोनं रसोनकन्दं तच्च दुग्धेन परिशोधितं ग्राह्यम् । भावयेदाद्रकद्रवैरिति आर्द्रकरसः सप्तवारं भावयेत् ॥ ३४०–३५० ॥

**चूडामणिरसे**—मृतसूतं रससिन्दूरं, शुल्वं ताम्रं, तीक्ष्णं लौहं, अत्र सर्व्वं

तत्सर्वं नाशयत्याशु विष्णुचक्रमिवासुरान् ।
चूडामणिरसो ह्येष शिवेन परिकीर्त्तितः ॥ ३५६ ॥

अथ भानुचूडामणिः—

सुवर्णं रससिन्दूरं प्रवालं वङ्गमेव च ।
लौहं ताम्रं तेजपत्रं यमानीं विश्वभेषजम् ॥ ३५७ ॥
सैन्धवं मरिचं कुष्ठं खदिरं द्विहरिद्रकम् ।
रसाञ्जनं माक्षिकञ्च समभागञ्च कारयेत् ॥ ३५८ ॥
वारिणा वटिका कार्या रक्तिद्वयप्रमाणतः ।
भक्षयेत् प्रातरुत्थाय सर्वज्वरकुलान्तकृत् ॥ ३५९ ॥

अथ बृहच्चूडामणि रसः—

कस्तूरिकाविद्रुमरौष्यलौहं तालं हिरण्यं रससिन्दुरञ्च[1] ।
सुवर्णसिन्दूरलवङ्गमुक्ताः चोचं घनं माक्षिकराजपट्टम् ॥
जातीफलं गोक्षुर जातिकोषं[2] मरीचकर्पूरशिखिग्रिवञ्च ।
प्रगृह्य सर्वं हि समं प्रयत्नात् अथाश्वगन्धाद्विगुणं हि वैद्यैः १६१
वक्ष्यमाणौषधैर्भाव्यं प्रत्येक मुनिसंख्यया ।
निर्गुण्डीफञ्जिकावासारविमूलत्रिकण्टकैः ॥ ३६२ ॥
तद्वीर्यं कथयिष्यामि वातिकं पैत्तिकं ज्वरम् ।
कफोद्भवं द्विदोषोत्थं त्रिदोषजनितं तथा ॥ ६६३ ॥
सन्ततं सततं हन्ति तृतीयकचतुर्थकौ ।
ऐकाहिकं द्व्याहिकञ्च विषमं भूतसम्भवम् ॥ ३६५ ॥

---

समभागम् ॥ ३५१–३५६ ॥

**भानुचूडामणिरसे—** द्विहरिद्रकमिति हरिद्रा दारुहरिद्रा च ३५७–३५९

**बृहच्चूडामणिरसे—** विद्रुमं प्रवालं, लौहं कान्तलौह, घनं मुस्तकं, माक्षिकं स्वर्णमाक्षिकं, राजपट्टं कान्तपाषाणं, शिखिग्रीवं तुत्थकं, सममित्ये-

---

१ ह्रस्वश्छन्दोऽनुरोधात्।

२ जाति कोष–जातिफलशब्दौ ह्रस्वमध्यौ, दीर्घमध्यौ च, 'फलं लाभे ज़ातिकोषं' इति रुद्रः । 'अथ जातीकोश, जातीफले समे अमरः, कोशशब्दोऽपि तालव्यान्तो मूर्द्धन्यान्तश्च ।

नाशयेदचिरादेव वृक्षमिन्द्राशनिर्यथा ।
चूडामणिरसो ह्येष शिवेन परिभाषितः ॥ ३६५ ॥

अथ बृहज्ज्वरचूडामणिरसः—

सुवर्णं स्वर्णसिन्दूरं लौहं तारं मृगाण्डजम् ।
जातीफलं जातिकोषं लवङ्गञ्च त्रिकण्टकम् ॥ ३६६ ॥
कर्पूरं गगनञ्चैव चोचं मुषलतालकम् ।
प्रत्येकं कर्षमानन्तु तुरङ्गञ्च द्विकार्षिकम् ॥ ३६७ ॥
विद्रुमं भस्मसूतञ्च मौक्तिकं माक्षिकं तथा ।
राजपट्टं शिखिग्रीवं सर्वं सञ्चूर्ण्य यत्नतः ।
खल्ले तु चूर्णमादाय भावयेत् परिकीर्त्तितैः ॥ ३६८ ॥
निर्गुण्डीफञ्जिकावासारविमूलत्रिकण्टकैः ।
ज्वरमष्टविधं हन्ति साध्यासाध्यमथापि वा ॥ ३६९ ॥

इति रसेन्द्रसारसङ्ग्रहे ज्वराधिकारः ।

---

## अथ ज्वरातीसार-चिकित्सा ।

### अथ मृतसञ्जीवनी वटी—

मागधी वत्सनाभश्च तयोस्तुल्यञ्च हिङ्गुलम् ।
मृतसञ्जीवनी ख्याता जम्बीररसमर्दिता ॥ १ ॥

---

कभागसमं, अश्वगन्धाया एकभागापेक्षया द्वैगुण्यं । मुनिसङ्ख्ययेति सप्तवारं । फञ्जिका ब्राह्मणयष्टिका । रविमूलमर्कमूलम् ॥ ३६०–३६५ ॥

**बृहज्ज्वरचूडामणिरसे**--मृगाण्डजं कस्तूरी; गगनञ्चाभ्रं, मुषली तालमूली, तुरङ्गं गन्धकं, भस्मसूतं रससिन्दूरं, राजपट्टं कान्तपाषाणं। स्वर्णसिन्दूरादितालान्तं प्रत्येकं कर्षमानं, तथा तुरङ्गादिशिखिग्रीवपर्यन्तं प्रत्येकं द्विकर्षं । एवं सर्व्वमेकीकृत्य निर्गुण्ड्यादिरसैः सप्तवारं भावयेत् ॥३६६–३६९

इति ज्वर-चिकित्सा ।

ज्वरे सत्युपद्रवत्वेनातीसारस्य सम्भवात् ज्वरानन्तरं ज्वरातीसार उच्यते । माधवेन तु तल्लक्षणं पृथङ्नोक्तं ज्वरातीसारयोर्म्मेलकत्वात् । उक्तं हि

---

१केचित् तु घनशब्देनाभ्रं गृह्णन्ति; तेषां मते रसगन्धौ तोलकमानौ, घनादिफलान्तानां प्रत्येकं तोलकत्रयं ग्राह्यमिति ।

मूलकस्य च बीजानां वटिका तुल्यरूपिणी ।
पानीया शीततोयेन ज्वरातीसारनाशिनी ।
विसूच्यां सन्निपाते च ज्वरे चैवातिदुस्तरे ॥ २ ॥

अथ आनन्दभैरवो रसः--

हिङ्गुलञ्च विषं व्योषं टङ्कणं गन्धकं समम् ।
जम्बीररससंयुक्तं मर्दयेत् यामकद्वयम् ॥ ३ ॥
कासश्वासातिसारेषु ग्रहण्यां सान्निपातिके ।
अपस्मारेऽनिले मेहेऽप्यजीर्णे वह्निमान्द्यके ।
गुञ्जामात्रः प्रदातव्यो रस आनन्दभैरवः ॥ ४ ॥

अथ अमृतार्णवो रसः—

हिङ्गुलोत्थो रसो लौहं टङ्कणं गन्धकं शटी ।
धान्यकं बालकं मुस्तं पाठाऽजाजी घुणप्रिया ॥ ५ ॥
प्रत्येकं तोलकं चूर्णं छागीदुग्धेन पेषयत् ।
माषिका वटिका कार्या रसोऽयममृतार्णवः ॥ ६ ॥
वटिकां भक्षयेत् प्रातर्गहनानन्दभाषिताम् ।
धान्यजीरकयूषेण विजयाशणवीजतः ॥ ७ ॥
मधुना च्छागदुग्धेन मण्डेन शीतवारिणा ।
कदलीमोचकरसैः कञ्चटद्रवकेण च ॥ ८ ॥
अतिसारं जयेदुग्रमेकजं द्वन्द्वजं तथा ।
दोषत्रयसमुद्भूतमुपसर्गसमन्वितम् ॥ ९ ॥
शूलघ्नो वह्निजननो ग्रहण्यर्शोविकारनुत् ।

---

सिद्धसारे—"ज्वरातिसारयोरुक्तं निदानं यत् पृथक् पृथक् । तस्माज्ज्वरातीसारस्य तेन नात्रोदितं पुन" रिति। ननु एवं चिकित्सापि भविष्यतीति चेत् नैवं, मिथोवर्द्धनात् । उक्तं हि—"ज्वरातिसारयोरुक्तं भेषजं यत् पृथक् पृथक् । न तन् मिलितयोः कार्य्यमन्योन्यं वर्द्धयेद्यतः" इति। प्रायेण हि ज्वरहरमौषधमनुलोमनं, अतिसारहरञ्च स्तम्भनमिति परस्परविरुद्धत्वात् मिलितयोर्न कार्य्यमित्यर्थः । **मृतसञ्जीवनीवटिकायां**—मागधौ पिप्पली ॥ १-२ ॥

**अमृतार्णवरसे**—अजाजी जीरकं, घुणप्रिया अतिविषा; धान्यजीरक-

अम्लपित्तप्रशमनः कासघ्नो गुल्मनाशनः ॥ १० ॥

अथ सिद्धप्राणेश्वरो रसः—

गन्धेशाभ्रं पृथग्वेद-भागमन्यच्च भागिकम्।
स्वर्जिटङ्कयवक्षाराः पञ्चैव लवणानि च ॥ ११ ॥
वराऽयोपेन्द्रवीजानि द्विजीराग्नियमानिकाः।
सहिङ्गुवीजसारञ्च शतपुष्पा सुचूर्णिता ॥ १२ ॥
सिद्धप्राणेश्वरः सूतः प्राणिनां प्राणदायकः।
माषैकं भक्षयेदस्य नागवल्लीदलैर्युतम् ॥ १३ ॥
उष्णोदकानुपानञ्च दद्यात् तत्र पलत्रयम्।
ज्वरातिसारेऽतिस्रुतौ केवले वा ज्वरेऽपि वा ॥ १४ ॥
ज्वरे त्रिदोषजे घोरे ग्रहण्यादिगदेऽपि च।
वातरोगे तथा शूले शूले च परिणामजे ॥ १५ ॥

अथ अभ्रवटिका—

अथ शुद्धस्य सूतस्य गन्धकस्याभ्रकस्य च।
प्रत्येकं कर्षमानन्तु ग्राह्यं रसगुणैषिणा ॥ १६ ॥
ततः कज्जलिकां कृत्वा व्योषचूर्णं प्रदापयेत्।
केशराजस्य भृङ्गस्य निर्गुण्ड्याश्चित्रकस्य च ॥ १७ ॥
ग्रीष्मसुन्दरकस्याथ जयन्त्याः स्वरसं तथा।
मण्डूकपर्ण्याः स्वरसं तथा शक्राशनस्य च ॥ १८ ॥
श्वेतापराजितायाश्च स्वरसं पर्णसम्भवम्।
दापयेद्रसतुल्यञ्च विधिज्ञः कुशलो भिषक् ॥ १९ ॥
रसतुल्यं प्रदातव्यं चूर्णं मरिचसम्भवम्।
देयं रसार्द्धभागेन चूर्णं टङ्कणसम्भवम् ॥ २० ॥
शुभे शिलामये पात्रे घर्षणीयं प्रयत्नतः।
शुष्कमातपसंयोगाद् वटिकां कारयेद् भिषक् ॥ २१ ॥

---

यूषेणेति यूषयोनित्वात् प्रचुरतराः मुद्गाः प्रदातव्याः ॥ ५–१० ॥

**सिद्धप्राणेश्वररसे**—ईशः पारदः, स्वर्जि स्वर्जिक्षारं, टङ्कं टङ्कणक्षारं वरा त्रिफला, इन्द्रबीजं इन्द्रयवः, बीजसारं विडङ्गम् ॥ ११–१५ ॥

**अभ्रवटिकायां**—व्योषचूर्णमपि कर्षमानम्। केशराजादीनां स्वरसः

कलायपरिमाणान्तु खादेत तान्तु प्रयत्नतः ।
दृष्ट्वा वयश्चाग्निबलं यथाव्याध्यनुपानतः ॥ २२ ॥
हन्ति कासं क्षयं श्वासं वातश्लेष्मभवां रुजम् ।
परं वाजीकरः श्रेष्ठो बलवर्णाग्निवर्द्धकः ॥ २३ ॥
ज्वरे चैवातिसारे च सिद्ध एष प्रयोगराट् ।
नातः परतरः श्रेष्ठो विद्यतेऽभ्ररसायनात् ॥ २४ ॥
भोजने शयने पाने नास्त्यत्र नियमः क्वचित् ।
दधि चावश्यकं[1] भक्ष्यं प्राह नागार्जुनो मुनिः ॥ २५ ॥

अथ कनकसुन्दरो रसः—

हिङ्गुलं मरिचं गन्धं टङ्कणं पिप्पलीं विषम् ।
कनकस्य च बीजानि समांशं विजयाद्रवैः ।
मर्दयेद् याममात्रन्तु चणमात्रा वटी कृता ॥ २६ ॥
भक्षणाद् ग्रहणीं हन्ति रसः कनकसुन्दरः ।
अग्निमान्द्यं ज्वरं तीव्रमतिसारञ्च नाशयेत् ।
दध्यन्नं दापयेत् पथ्यं सदा तक्रौदनं हितम् ॥ २७ ॥

अथ कनकप्रभा वटी—

सुवर्णबीजं मरिचं मरालपादं कणा टङ्कणकं विषञ्च ।
गन्धं जयाऽद्भिर्दिवसं विमर्द्य गुञ्जाप्रमाणां वटिकां विदध्यात् ॥२८॥
ज्वरातिसारग्रहणीं ज्वराग्निमान्द्यं निहन्यात् कनकप्रभेयम् ।
दध्योदनं भोज्यमनुष्णवारि मांसं भजेत्तित्तिरिलावकानाम् ॥२९॥

---

सूतोन्मितो देयः ॥ १६–२५ ॥

**कनकसुन्दररसे**—टङ्कणमित्यत्र अभ्रकमिति केचित् पठन्ति । विजयाद्रवैरिति विजया शक्राशनं तस्य द्रवः क्वाथः ॥ २६–२७ ॥

**कनकप्रभायां**—सुवर्णवीजं कृष्णधुस्तूरवीजम् । मरालपादं धानकुनीति ख्याता । जयाद्भिरिति जयारसैः ॥ २८–२९ ॥

---

१ दधि तु–आवश्यकं चेत्–भक्ष्यम्, अन्यथा ज्वरेऽपि न भक्ष्यम् । च स्त्वर्थः । यत्र२] दधि विहितं तत्र २सलवणजलमथितमेव दधिदेयम्, अतीसारे ग्रहण्यामर्शः प्रभृतिषु च, ज्वरभयेविचारणमिव वैद्यैः, द्रष्टव्या दधिगुणाः, अवस्था च रोगस्य, वीर्यञ्चरसादीनाम् ।

अथ कारुण्यसागररसः—

भस्मसूताद्द्विधा गन्धं तथा द्वित्वं मृताभ्रकम् ।
दिनं सार्षपतैलेन पिष्ट्वा यामं विपाचयेत् ॥ ३० ॥
रसैर्मार्कवमूलोत्थैः पिष्ट्वा यामं विपाचयेत् ।
त्रिक्षारपञ्चलवण-विषव्योषाग्निजीरकैः ॥ ३१ ॥
सविडङ्गैस्तुल्यभागैरयं कारुण्यसागरः ।
माषमात्रं ददीताऽस्य भिषक् सर्वातिसारके ॥ ३२ ॥
सज्वरे विज्वरे वाऽपि सशूले शोणितोद्भवे ।
निरामे शोथयुक्ते वा ग्रहण्यां सान्निपातिके ।
अनुपानं विनाप्येष कार्यसिद्धिं करिष्यति ॥ ३३ ॥

अथ बृहत्कनकसुन्दरो रसः—

शुद्धसूतं समं गन्धं मरिचं टङ्कणं तथा ।
स्वर्णबीजं समं मद्यं भार्गीद्रावैर्दिनार्द्धकम् ॥ ३४ ॥
सूततुल्यं मृतञ्चाभ्रं रसः कनकसुन्दरः ।
अस्य गुञ्जाद्वयं हन्ति पित्तातीसारमुग्रकम् ॥ ३५ ॥

अथ मृतसञ्जीवनो रसः—

रसगन्धौ समौ ग्राह्यौ सूतपादं विषं क्षिपेत् ।
सर्वतुल्यं मृतञ्चाभ्रं मद्यं धुस्तूरजद्रवैः ॥ ३६ ॥
सर्पाक्ष्याश्च द्रवैर्यामं कषायेणाथ भावयेत् ।
धातक्यतिविषा मुस्तं शुण्ठी-जीरक-बालकम् ॥ ३७ ॥
यमानी धान्यकं बिल्वं पाठा पथ्या कणान्विता ।
कुटजस्य त्वचं बीजं कपित्थं दाडिमं बलाम् ॥ ३८ ॥

---

**कारुण्यसागररसे**—गन्धको द्विगुणः । रसभस्मनोऽभावे शुद्धसूतस्य भागैकं । विपाचयेदिति वालुकायन्त्रके मृत्कर्पटे वा विपाचयेत् । मार्कव-मूलं भृङ्गराजमूलम् । समभागानि त्रिक्षारादिविडङ्गान्तानि पञ्चदश द्रव्याणि प्रत्येकंमिलितरसादीनां समानि मिश्रयेदित्यर्थः ॥ ३०–३३ ॥

**बृहत्कनकसुन्दररसे**—स्वर्णबीजं कृष्णधुस्तूरबीजम् ॥ ३४–३५ ॥

**मृतसंजीवनरसे**—रसगन्धौ समौ समभागौ तेन द्वयोर्मिलितयोः कर्षः, विषमर्द्धतोलकं, सर्पाक्षी शालिञ्ची, रासेति केचित् । कषायेणेति वक्ष्यमा-

प्रत्येकं कर्षमात्रं स्यात् कुट्टितं क्वाथयेत् जलैः ।
चतुर्गुणं जलं दत्त्वा यावत् पादावशेषितम् ॥ ३९ ॥
अनेन त्रिदिनं भाव्यं पूर्वोक्तं मर्दितं रसम् ।
रुद्ध्वा तद्वालुकायन्त्रे क्षणं मृद्वग्निना पचेत् ॥ ४० ॥
मृतसञ्जीवनो नाम चास्य गुञ्जाचतुष्टयम् ।
दातव्यमनुपानेन चासाध्यमपि साधयेत् ॥ ४१ ॥
षट्प्रकारमतीसारं साध्यासाध्यं जयेत् ध्रुवम् ।
नागरातिविषा मुस्तं देवदारु कणा वचा ॥ ४२ ॥
यमानी बालकं धान्यं कुटजत्वक् हरीतकी ।
धातकीन्द्रयवौ बिल्वं पाठा मोचरसं समम् ।
चूर्णितं मधुना लेह्यमनुपानं सुखावहम् ॥ ४३ ॥

अथ प्राणेश्वरो रसः—

रसगन्धकमभ्रञ्च टङ्कणं शतपुष्पकम् ।
यमानी जीरकाख्यञ्च प्रत्येकं कर्षयुग्मकम् ॥ ४४ ॥
कर्षमेकं यवक्षारं हिङ्गुपटुक-पञ्चकम् ।
विडङ्गेन्द्रयवं सर्ज-रसकञ्चाग्निसंज्ञितम् ।
घृष्ट्वा च वटिका कार्या नाम्ना प्राणेश्वरो रसः ॥ ४५ ॥

ज्वरातीसारलक्षणम्—

पित्तज्वरे पित्तभवोऽतिसारस्तथातिसारे यदि वा ज्वरः स्यात् ।
दोषस्य दूष्यस्य समानभावात् ज्वरातिसारः कथितो भिषग्भिः ॥४६॥

इति ज्वरातीसार चिकित्सा ।

---

णधातक्यादिजलेन । धातक्यादिबिलान्तानि सप्तदश द्रव्याणि प्रत्येकं कर्षमात्रं गृहीत्वा क्वाथयेत्, तेन क्वाथेन त्रिदिनं विमर्द्य तत् हण्डिकामध्ये स्थापयेत्, ततः स्वल्पशरावेणाच्छाद्य सन्धिं रुद्ध्वा च बालुकाभिः हण्डिकामापूर्य्य क्षणमिति दण्डचतुष्टयं पचेदित्यर्थः ॥ ३६–४३ ॥

प्राणेश्वररसे—पटुपञ्चकं पञ्चलवणं, सर्जरसः धूनकः, अग्निसंज्ञितश्चित्रकः ॥ ४४–४५ ॥

इति ज्वरातीसार-चिकित्सा ।

# अथ अतीसार-चिकित्सा ।

अथ अतीसारवारणो रसः—

दरद कृतकर्पूरं मुस्तेन्द्रयवसंयुतम् ।
सर्वातीसारशमनं खाखसीक्षीरभावितम् ॥ १ ॥

अथ पूर्णचन्द्रोदयो रसः—

शुद्धञ्च तालकं लौहं गगनञ्च पलं पलम् ।
कर्पूरं पारदं गन्धं प्रत्येकं वटकोन्मितम् ॥ २ ॥
जातीकोषमुरापत्रं शटीतालीशकेशरम् ।
व्योषं चोचं कणामूलं लवङ्गं पिचुसम्मितम् ॥ ३ ॥
भक्षयेत् प्रातरुत्थाय गुरुदेवाद्विजार्चकः ।
नानारूपमतीसारं ग्रहणीं सर्वरूपिणीम् ॥ ४ ॥
अम्लपित्तं तथा शूलं शूलञ्च परिणामजम् ।
हन्याद्रसायनश्चायं वाजीकरण उत्तमः ॥ ५ ॥

अथ कणाद्यं लौहम्—

कणानागरपाठाभिस्त्रिवर्गत्रितयेन च ।
बिल्वचन्दनह्रीबेरैः सर्वातीसारजिद्भवेत् ॥ ६ ॥
सर्वोपद्रवसंयुक्तामपि हन्ति प्रवाहिकाम् ।
नानेन सदृशं लौहं विद्यते ग्रहणीहरम् ॥ ७ ॥

अथ बृहद्गगनसुन्दरो रसः—

पारदं गन्धकञ्चाभ्रं लौहञ्चापि वराटकम् ।
रूप्यं चातिविषं कर्षं समभागं प्रकल्पयेत् ॥ ८ ॥
धान्यशुण्ठीकृतक्काथैर्भावयेच्च पृथक् पृथक् ।
गुञ्जाप्रमाणां वटिकां कारयेत् कुशलो भिषक् ॥ ९ ॥

---

ज्वरोपद्रवस्यातीसारस्य चिकित्सामभिधाय सम्प्रति स्वतन्त्रस्यातीसारस्य चिकित्सामाह दरदमित्यादि—कृतकर्पूरं पक्वकर्पूरम् । खाखसीक्षीरम् अहिफेनम् ॥ १ ॥

**पूर्णचन्द्रोदयरसे**—वटकोन्मितमिति माषकाष्टकपरिमितं । पत्रं तेजपत्रं, पिचुसम्मितं कर्षमानम ॥ ४–२ ॥

**कणाद्यलौहे**—त्रिवर्गत्रितयेन चेति त्रिकटु-त्रिफला-त्रिमदैः ॥ ६-७ ॥

भक्षयेत् प्रातरुत्थाय गुरुदेवद्विजार्चकः ।
दग्धबिल्वं गुडेनैव कुर्य्यात् तदनुपानकम् ॥ १० ॥
अजादुग्धेन वा पेयं जम्बूत्वक्साधितं रसम् ।
अतीसारे ज्वरे घोरे ग्रहण्यामरुचौ तथा ॥ ११ ॥
सामे सशूले रक्ते च पिच्छास्रावे भ्रमे तथा ।
शोथे रक्तातिसारे च सङ्ग्रहग्रहणीषु च ॥ १२ ॥

लोकनाथो रसः—

भस्मसूतस्य भागैकं चतुरः शुद्धगन्धकात् ।
क्षिप्त्वा वराटिकागर्भे टङ्कणेन निरुध्य च ॥ १३ ॥
भाण्डे रुद्ध्वा पुटे पाच्यं स्वाङ्गशीतं समुद्धरेत् ।
लोकनाथरसो नाम क्षौद्रैर्गुञ्जाचतुष्टयम् ॥ १४ ॥
नागरातिविषामुस्तं देवदारुवचान्वितम् ।
कषायमनुपानन्तु सर्वातीसारनाशनः ॥ १५ ॥

चिन्तामणिरसः—

शुद्धसूतं मृतं ताम्रं गन्धकं प्रतिकार्षिकम् ।
चूर्णयद्विषकर्षार्द्धं विषार्द्धं तिन्तिडीफलम् ॥ १६ ॥
मर्दयेत् खल्लमध्ये तु चाम्लेन गोलकीकृतम् ।
गर्त्तं षडङ्गुलं कुर्य्यात् सर्वतो वर्त्तुलं शुभम् ॥ १७ ॥
नागवल्ल्याः क्षिपेत् पत्रमादौ पात्रे च गोलकम् ।
आच्छाद्य तच्च पात्रेण रुद्ध्वा गजपुटे पचेत् ॥ १८ ॥
साङ्गशीतं समुद्धृत्य सपत्रञ्च विशेषतः ।
कर्षार्द्धं मरिचं दत्त्वा कर्षार्द्धं तिन्तिडीफलम् ॥ १९ ॥
गुञ्जामितां वटीं कुर्य्यात् चिन्तामणिरसो महान् ।
अतिसारे त्रिदोषोत्थे सङ्ग्रहग्रहणीगदे ।
अनुपानं विधातव्यं यथादोषानुसारतः ॥ २० ॥

अहिफेनवटिका—

अहिफेनं सखर्जूरं घृष्ट्वा गुञ्जैकमात्रकम् ।

---

**चिन्तामणिरसे**—प्रतिकार्षिकमिति प्रत्येकं कर्षपरिमितं । तिन्तिडी-फलं पक्वतिन्तिडीफलम् । अम्लेन काञ्जिकेन ॥ १६–२० ॥

रक्तस्रावमतीसारमतिवृद्धं विनाशयेत् ॥ २१ ॥

महागन्धकं सर्वाङ्गसुन्दरञ्च—

रसगन्धकयोः कर्षं ग्राह्यमेकं सुशोधितम् ।
ततः कज्जलिकां कृत्वा मृदुपाकेन साधयेत् ॥ २२ ॥
जातीफलं तथा कोषं लवङ्गारिष्टपत्रके ।
सिन्धुवारदलञ्चैव एलाबीजं तथैव च ॥ २३ ॥
एषाञ्च कर्षमात्रेण तोयेनाथ विमर्दयेत् ।
मुक्तागृहे पुनः स्थाप्यं पुटपाकेन साधयेत् ॥ २४ ॥
घनपङ्कं बहिर्लिप्त्वा पुटमध्ये निधापयेत् ।
गुञ्जाषट्कप्रमाणेन प्रत्यहं भक्षयेन्नरः ॥ २५ ॥
एतत् प्रोक्तं कुमाराणां रक्षणाय महौषधम् ।
ज्वरघ्नं दीपनञ्चैव बलवर्णप्रसाधनम् ॥ २६ ॥
दुर्वारं ग्रहणीरोगं जयत्येव प्रवाहिकाम् ।
सूतिकाञ्च जयेदेतद्रक्तार्शो रक्तसम्भवम् ॥ २७ ॥
पिशाचा दानवा दैत्या बालानां विघ्नकारकाः ।
यत्रौषधवरस्तिष्ठेत् तत्र सीमां न यान्ति ते ॥ २८ ॥
बालानां गदयुक्तानां स्त्रीणाञ्चैव विशेषतः ।
महागन्धकमेतद्धि सर्वव्याधिनिषूदनम् ।
विना पाकेन सर्वाङ्गसुन्दरोऽयं प्रकीर्त्तितः ॥ २९ ॥
ग्रहण्यां ये रसाः प्रोक्तास्तेऽतीसारे प्रकीर्त्तिताः ॥ ३० ॥

इति रसेन्द्रसारसंग्रहे द्वितीयाध्यायेऽतीसारचिकित्सा ।

---

अहिफनवटिकायां—खर्ज्जूरं पिण्डखर्ज्जूरम् ॥ २१ ॥

महागन्धके—रसगन्धकयोः प्रत्येकं कर्षः, जातीफलादीनामपि प्रत्येकं कर्षः । आदौ कज्जली वक्ष्यमाणरसपर्पटीवत् पचेत्, ततः सर्व्वमेकीकृत्य जलेन पिष्ट्वा एकस्मिन् मुक्तागृहे औषधं संस्थाप्य अपरेणाच्छाद्य घनपङ्केनालिप्य करीषाग्निमध्ये प्रक्षिपेत् यदा बहिरारक्तता भवति तदैवाकृष्य ग्राह्यः ॥ २२-३० ॥

इत्यतीसार-चिकित्सा ।

## अथ ग्रहणीरोग-चिकित्सा ।

जातीफलादिग्रहणीकपाटो रसः—

जातीफलं टङ्कणमभ्रकञ्च, धुस्तूरबीजं समभागचूर्णम् ।
भागद्वयं स्यादहिफेनकस्य, गन्धालिकापत्ररसेन मर्द्यम ॥ १ ॥
चणप्रमाणा वटिका विधेया, यत्नाद्विदध्याद गहणीगदेषु ।
सामेषु रक्तेषु सशूलकेषु, पक्केष्वपक्केषु गुदामयेषु ॥ २ ॥
रोगेषु दद्यादनुपानभेदैः, मधुप्रयुक्तां ग्रहणीगदेषु ।
पथ्यं सदध्योदनमत्र देयं, रसोत्तमोऽयं 'ग्रहणीकपाटः' ॥३॥

अपरग्रहणीकपाटो रसः—

टङ्कणक्षारगन्धाश्म-रस जातीफलं तथा ।
बिल्वं खादिरसारञ्च जीरकञ्च मधूलिका ॥ ४ ॥
कपिहस्तकबीजञ्च तथा चोरकपुष्पकम् ।
एषां शाणं समादाय श्लक्ष्णचूर्णञ्च कारयेत् ॥ ५ ॥
बिल्वपत्रककार्पास-फलं शालिञ्च दुग्धिकाम् ।
शालिञ्चमूलं कुटजं तथा कञ्चटपत्रकम् ॥ ६ ॥
सर्वेषां स्वरसेनैव वटिकां कारयेद्भिषक् ।
रक्तिकैकप्रमाणेन खादयेत् दिवसत्रयम् ॥ ७ ॥
दधिमस्तु ततः पेयं पलमात्रप्रमाणतः ।
अपि योगशताक्रान्तां ग्रहणीमुद्धतां जयेत् ॥ ८ ॥
आमशूलं ज्वरं कासं श्वासञ्चैव प्रवाहिकाम् ।
रक्तस्रावकरं द्रव्यं कार्यं नैवात्र युक्तितः ॥ ९ ॥
कृष्णवार्त्ताकुमत्स्यञ्च दधि तक्रञ्च शस्यते ।
ज्ञात्वा वायोः कृतिं तत्र तैलं वारि प्रदापयेत् ॥ १० ॥

---

ग्रहण्यतीसारयोः परस्परं कार्य्यकारणभावसम्बन्धादनन्तरं ग्रहणीचिकित्सितमुच्यते । तत्र **ग्रहणीकपाटरसे**—समभागचूर्णमिति प्रत्येकं समभागं गन्धालिका प्रसारणी । गुदामय इत्यर्शोरोगे ॥ १-३ ॥

**अपरग्रहणीकपाटरसे**—बिल्वं बिल्वशलाटु । मधूलिका मूर्व्वा, कपिहस्तकबीजं शूकशिम्बीबीजम् । दुग्धिका क्षीरिका ; एषां बिल्वपत्रादीनां स्वरसः सप्ताहं भावयेत् ॥ ४-१० ॥

जातीफलाद्या वटिका—

अभ्रस्य सूतस्य च गन्धकस्य प्रत्येकशो माषचतुष्टयञ्च।
विधाय शुद्धोपलपात्रमध्ये सुकज्जलीं वैद्यवरः प्रयत्नात् ॥११॥
जातीफलं शाल्मलिवेष्टमुस्तं सटङ्कणं सातिविषं सजीरम्।
प्रत्येकमेषां मरिचस्य शाण-प्रमाणमेकं विषमाषकञ्च ॥ १२ ॥
विचूर्ण्य सर्वाण्यवलोड्य पश्चात् विभावयेत् पत्ररसैरमीषाम्।
इन्द्राणिकेन्द्राशनकश्च जम्बू जयन्तिका दाडिम-केशराजौ।
अविद्धकर्णाऽपि च भृङ्गराजौ विभाव्य सम्यक् वटिका विधेया॥१३॥
कोलास्थिमानाऽथ बहुप्रकारं सामं निहन्यादनिलान् गदांश्च।
कुर्याद्विशेषादनलप्रवृद्धिं कासञ्च पञ्चात्मकमम्लपित्तम् ॥ १४ ॥
इयं निहन्याद् ग्रहणीमसाध्यां मर्त्यस्य जीर्णग्रहणीं प्रवृद्धाम्।
असारकत्वं त्वतिसारमुग्रं श्वासं तथा पाण्डुमरोचकञ्च ॥ १५ ॥
चिरोद्भवां संग्रहकोष्ठदुष्टिं जयेद्भृशं योगशतैरसाध्याम्।
अनेकसम्भावितमर्त्यलोका नानाविधव्याधि-पयोधि-नौका ॥१६॥

पूर्णकलावटी—

रसं गन्धं घनं[1] लौहं धातकीपुष्पबिल्वकम्।
विषं कुटजबीजञ्च पाठा जीरकधान्यकम् ॥ १७ ॥
रसाञ्जनं टङ्कणञ्च शिलाजतु फलं तथा।
अभ्रांशञ्च फलं ग्राह्यं प्रत्येकं तोलकत्रयम् ॥ १८ ॥
भेकपर्णी पञ्चमूली बला कञ्चट-दाडिमम्।
शृङ्गाटं केशरं जम्बूः, दधिमस्तु जयन्तिका ॥ १९ ॥

---

**जातीफलादिवटिकायाम्**—उपलमध्ये पाषाणखल्ले, शाल्मलीवेष्टकं मोचरसं छन्दोऽनुरोधाद् ह्रस्वः। इन्द्राणिका निर्गुण्डी, अविद्धकर्णा अम्बष्ठकी, असारकत्वं अल्पसारकत्वं तच्च वातातीसारे भवति ॥ ११–१६ ॥

**पूर्णकलावटिकायां**—घनं मुस्तकम्। एषामभ्रान्तानां प्रत्येकं कर्षमानम्। फलं त्रिफलं तच्च प्रत्येकं तोलकत्रयामिति। पञ्चमूली स्वल्पा

---

१ केचित् तु घनशब्देनाऽभ्रं गृह्णन्ति; तेषां मते रसगन्धौ तोलकमानौ, घनादिफलान्तानां प्रत्येकं ग्राह्यमिति।

केशराजो भृङ्गराजः प्रत्येकं तोलकद्वयम् ।
द्विमाषा वटिका कार्य्या तक्रेण परिषेविता ॥ २० ॥
इयं 'पूर्णकला' नाम ग्रहणीगदनाशिनी ।
शूलघ्नी दाहशमनी वह्निदा ज्वरनाशिनी ।
भ्रमच्छर्दिच्छेदकरा संग्रहग्रहणीं जयेत् ॥ २१ ॥

वज्रकपाटो रसः—

पारदं गन्धकञ्चैव अहिफेनं समोचकम् ।
त्रिकटु त्रैफलञ्चैव सममेकत्र कारयेत् ॥ २२ ॥
भङ्गभृङ्गद्रवैश्चैतद् भावयेच्च पुनः पुनः ।
रक्तित्रयं ततश्चास्य मधुना सह भक्षयेत् ।
असाध्यां ग्रहणीं हन्ति रसो 'वज्रकपाटकः' ॥ २३ ॥

जातीफलरसः—

पारदाभ्रकसिन्दूरं गन्धं जातीफलं समम् ।
कुटजस्य फलञ्चैव धूर्त्तबीजानि टङ्कणम् ॥ २४ ॥
व्योषं मुस्ताऽभया चैव चूतबीजं तथैव च ।
बिल्वकं सर्जबीजञ्च दाडिमीफलवल्कलम् ॥ २५ ॥
एतानि समभागानि निक्षिपेत् खल्लमध्यतः ।
विजयास्वरसेनैव मर्दयेत् श्लक्ष्णचूर्णितम् ॥ २६ ॥
गुञ्जाफलप्रमाणान्तु वटिकां कारयेद्भिषक् ।
एकां कुटजमूलत्वक्-कषायेण प्रयोजयेत् ॥ २७ ॥
आमातिसारं हरते कुरुते वह्निदीपनम् ।
मधुना बिल्वशुण्ठेन रक्तग्रहणिकां जयेत् ॥ २८ ॥
शुण्ठीधान्यकयोगेन चातिसारं निहन्त्यसौ ।
'जातीफलरसो' ह्येष ग्रहणीगदनाशनः ॥ २९ ॥

---

पञ्चमूली ॥ १७–२१ ॥

वज्रकपाटरसे—मोचकं शाल्मलीवेष्टकं; सममिति समभागं; भङ्गं विजया; भावयेच्च पुनः पुनरिति सप्तवारम् ॥ २२–२३ ॥

जातीफलरसे–सिन्दूरं रससिन्दूरं; चूतफलबीजमाम्रास्थिमज्जा २४–२९.

### ग्रहणीगजेन्द्रो रसः—

रसगन्धकलौहानि शङ्खटङ्कणरामठम् ।
शटीतालीशमुस्तानि धान्यजीरकसैन्धवम् ॥ ३० ॥
धातक्यतिविषा शुण्ठी गृहधूमो हरीतकी ।
भल्लातकं तेजपत्रं जातीफललवङ्गकम् ॥ ३१ ॥
त्वगेला बालकं बिल्वं मेथी शक्राशनं समम् ।
छागीदुग्धेन वटिका रसवैद्येन कारिता ॥ ३२ ॥
गहनानन्दनाथेन भाषितेयं रसायने ।
वटी गजेन्द्रसंज्ञेयं श्रीमता लोकरक्षणे ॥ ३३ ॥
ग्रहणीं विविधां हन्ति ज्वरातीसारनाशिनी ।
शूलगुल्माऽम्लपित्तानि कामलाञ्च हलीमकम् ॥ ३४ ॥
बलवर्णाग्निजननी सेविता च चिरायुषी ।
कण्डूं कुष्ठं विसर्पञ्च गुदभ्रंशं क्रिमिं जयेत् ॥ ३५ ॥
माषद्वयां वटीं खादेच्छागीदुग्धानुपानतः ।
वयोऽग्निबलमावीक्ष्य युक्त्या वा त्रुटिवर्द्धनम् ॥ ३६ ॥

### पीयूषवल्लीरसः—

सूतमभ्रं गन्धकञ्च तारं लौहं सटङ्कणम् ।
रसाञ्जनं माक्षिकञ्च शाणमेकं पृथक् पृथक् ॥ ३७ ॥
लवङ्गं चन्दनं मुस्तं पाठा जीरकधान्यकम् ।
समङ्गाऽतिविषा लोध्रं कुटजेन्द्रयवं त्वचम् ॥ ३८ ॥
जातीफलं विश्व-बिल्वं कनकं दाडिमीच्छदम् ।
समङ्गा धातकी कुष्ठं प्रत्येकं रससम्मितम् ॥ ३९ ॥
भावयेत् सर्वमेकत्र केशराजरसैः पुनः ।
चणकाभा वटी कार्य्या छागीदुग्धेन पेषिता ॥ ४० ॥
अनुपानं प्रदातव्यं दग्धबिल्वं समं गुडैः ।

---

**ग्रहणीगजेन्द्रवटिकायां**—शक्राशनं विजया, तस्या बीजं ग्राह्यम् ॥ ३०–३६ ॥

**पीयूषवल्लीरसे**—तारं रौप्यं, माक्षिकं स्वर्णमाक्षिकं, समङ्गा वराहक्रान्ता, बिल्वं बिल्वशलाटु । आदौ केशराजरसे सप्तधा विभाव्य पश्चात्

हन्ति सर्वानतीसारान् ग्रहणीं चिरजामपि ॥ ४१ ॥
आमसम्पाचनो सम्यग् वह्निवृद्धिकरस्तथा ।
पीयूषवल्लीनामायं ग्रहणीरोगनाशनः ॥ ४२ ॥

ग्रहणीशार्दूलरसः—

रसगन्धकयोश्चापि कर्षमेकं सुशोधितम् ।
द्वयोः कज्जलिकां कृत्वा हाटकं षोडशांशतः ॥ ४३ ॥
लवङ्गं निम्बपत्रञ्च जातीकोषफले तथा ।
एतेषां कर्षचूर्णेन सूक्ष्मैलां सह मेलयेत् ॥ ४४ ॥
मुक्तागृहे च संस्थाप्य पुटपाकेन साधयेत् ।
गुञ्जापञ्चप्रमाणेन प्रत्यहं भक्षयेत् नरः ॥ ४५ ॥
सूतिकां ग्रहणीरोगं हरत्येष सुनिश्चितम् ।
अर्शोघ्नो दीपनश्चैव बलपुष्टिप्रसाधनः ॥ ४६ ॥
कासश्वासातिसारघ्नो बलवीर्य्यकरः परः ।
दुर्वारं ग्रहणीरोगमामशूलञ्च नाशयेत् ।
संसारलोकरक्षार्थं पुरा रुद्रेण भाषितः ॥ ४७ ॥

श्रीवैद्यनाथवटी—

शाणं रसस्य संगृह्य काञ्जिकेन तु शोधयेत् ।
चित्रकस्य रसेनापि त्रिफलायाश्च बुद्धिमान् ॥ ४८ ॥
रसार्द्धं गन्धकं शुद्धं भृङ्गराजरसेन वै ।
द्वाभ्यां संमूर्च्छनं कृत्वा स्वरसैः शाणसम्मितैः ॥ ४९ ॥

---

छागीदुग्धेन निष्पिष्य वटिका कार्य्या ॥ ३७–४२ ॥

**ग्रहणीशार्दूलरसे**—मिलितयोः रसगन्धकयोः कर्षमेकं ग्राह्यम् । हाटकं षोडशांशत इति कर्षमानापेक्षया स्वर्णभस्म षोडशांशम । लवङ्गादीनां प्रत्येकं कर्षमानम् । एतत् सर्व्वमेकीकृत्य शुक्तिसम्पुटे कृत्वा पुटपाकवत् पचेदित्यर्थः ॥ ४३–४७ ॥

रसपर्पटीमाह **याम्लेत्यादि**—तत्रेति तत्र क्षुधावत्यां या विधा यो रसगन्धकशुद्धिप्रकारो वक्तव्यस्तेन शुद्धावित्यर्थः । शुद्धपारद कर्ष १ गन्धक कर्ष १ एतद्द्वयं खल्ले तावद् घर्षणीयं यावत् कज्जलाभं भवति । ततः लौहदर्व्विकायामेतच्चूर्णं दत्त्वा बदराङ्गारोपरि विन्यस्य लौहदण्डेन सञ्चाल्य

खल्लयेच्च शिलाखण्डे क्रमशो वक्ष्यमाणकैः ।
निर्गुण्डीमधुकश्वेता कुठेरग्रीष्मसुन्दरैः ॥ ५० ॥
भृङ्गाब्दकेशराजैश्च जयेन्द्राशनकोत्कटैः ।
सर्षपाभां वटीं कृत्वा दद्यात् तां ग्रहणीगदे ॥ ५१ ॥
सामवातेऽग्निमान्द्ये च ज्वरे प्लीहोदरेषु च ।
वातश्लेष्मविकारेषु तथा श्लेष्मगदेषु च ।
अम्लतक्रादिसेवाञ्च कुर्वीत स्वेच्छया बहु ॥ ५२ ॥
श्रीमता वैद्यनाथेन लोकानुग्रहकारिणा ।
स्वप्नान्ते ब्राह्मणस्येयं भाषिता लिखितेन तु ॥ ५३ ॥

रसपर्पटिका—

याऽम्लपित्ते विधातव्या गुडिका च क्षुधावती ।
तत्र प्रोक्तविधा शुद्धौ समानौ रसगन्धकौ ॥ ५४ ॥
सम्मर्द्य कज्जलाभौ तु कुर्य्यात् पात्रे दृढाश्रये ।
ततो बादरवह्निस्थ-लौहपात्रे द्रवीकृतम् ॥ ५५ ॥
गोमयोपरि विन्यस्त-कदलीपत्रपातनात् ।
कुर्यात् पर्पटिकाकारमस्य रक्तिद्वयं क्रमात् ॥ ५६ ॥
रक्तिद्वादशकं यावत् प्रयोगः प्रहरार्द्धतः ।
तदूर्द्ध्वं बहुपूगस्य भक्षणं दिवसे पुनः ॥ ५७ ॥
तृतीय एव मांसाज्य-दुग्धाद्यत्र विधीयते ।
वर्ज्यं विदाहि स्त्री रम्भा-मूलं तैलञ्च सार्षपम् ॥ ५८ ॥
कृष्णमत्स्याम्बुजखगांस्त्यक्त्वोन्निद्रः पयः पिबेत् ।
ग्रहणीक्षयकुष्ठार्शः-शोथाजीर्णविनाशिनी ॥ ५९ ॥
'रसपर्पटिका' ख्याता निबद्धा चक्रपाणिना ॥ ६० ॥

---

यदा द्रवीभूतं भवति तदा आर्द्रगोमयपिण्डोपरिस्थापितकोमल-कदलीपत्रे दालनीयं अपरकदलीपत्रान्तरेण सम्पीड्य पर्पटिकाकृतिः कार्य्या । रक्तिद्वयं क्रमादिति प्रथमं गुञ्जायुगलं प्रतिदिनमेकैकवृद्धितो भक्ष्यमिति क्रमादित्यर्थः ॥ ४-६० ॥

विजयपर्पटी—

हाटकं रजतं ताम्रं यद्यत्र परिदीयते।
विजयाख्या तु सा ज्ञेया सर्वरोगनिषूदनी ॥ ६१ ॥

स्वर्णपर्पटी—

रसोत्तमं पलं शुद्धं हेम तोलक-संयुतम्।
शिलायां मर्दयेत् तावत् यावदेकत्वमागतम् ॥ ६२ ॥
गन्धकस्य पलञ्चैकमयःपात्रे ततो दृढे।
मर्दयेत् दृढपाणिभ्यां यावत् कज्जलतां व्रजेत् ॥ ६३ ॥
ततः पाकविधानज्ञः पर्पटीं कारयेत् सुधीः।
रक्तिकादिक्रमेणैव योजयेदनुपानतः।
ग्रहणीं विविधां हन्ति वृष्या सर्वज्वरापहा ॥ ६४ ॥

अथ पञ्चामृतपर्पटी—

अष्टौ गन्धकमाषका रसदलं लौहं तदर्द्धं शुभम्।
लौहार्द्धञ्च वराभ्रकं सुविमलं ताम्रं तथाऽभ्रार्द्धिकम्।
पात्रे लौहमये च मर्दनविधौ चूर्णीकृतञ्चैकतो
दर्व्यां बादरवह्निनाऽतिमृदुना पाकं विदित्वा दले ॥६५।

---

**विजयपर्पटीमाह हाटकमित्यादि**—यद्यदि रसपर्पटिकायां सूततुल्यं स्वर्णं रजतं ताम्रञ्च दीयते, तर्हि सा विजयाख्या ज्ञेया ॥ ६१ ॥

**स्वर्णपर्पटिकायां**—रसोत्तमः हिङ्गुलोत्थपारदः। पर्पटीं कारयेदिति रसपर्पटीविधिवत् पचेदित्यर्थः ॥ ६२–६४ ॥

**पञ्चामृतपर्पटिकायां**—अष्टौ गन्धकमाषका रसदलमिति भट्टादिसम्मतः पाठः। पश्चात्यास्तु माषका इत्यत्र तोलका इति पठन्ति। अन्ये तु रसदलमित्यत्र रसपलमिति पठन्ति। ये तु रसपलमिच्छन्तो गन्धकस्याष्टमा-

---

१ यद्यप्यत्र पर्पटीपाकलक्षणं नोक्तं तथापि तन्त्रान्तरमनुसर्त्तव्यं यथा—"पाकोऽस्या स्त्रिविधः प्रोक्ता मृदुर्मध्यः खरस्तथा। आद्ययोर्दृश्यते सूतः खरपाके न दृश्यते। मृदौ न सम्यग् भङ्गः स्यात् मध्ये भङ्गश्च रौप्यवत्। खरो लघुर्भवेद् भङ्गे रूक्षः श्लक्ष्णोऽरुणच्छविः। मृदुमध्यौ तथा खाद्यौ खरस्त्याज्यो विषोपमः॥" इति सुखबोधसंग्रहः।

रम्भाया लघु ढालयेत् पटुरियं पञ्चामृता पर्पटी
ख्याता क्षौद्रघृतान्विता प्रतिदिनं गुञ्जाद्वयं वृद्धितः।
लौहे मर्दनयोगतः सुविमलं भक्ष्यक्रिया लौहवत्
गुञ्जाऽष्टावथवा त्रिकं त्रिगुणितं सप्ताहमेवं भजेत् ॥ ६६ ॥
नानावर्णग्रहण्यामरुचिसमुदये दुष्टदुर्नामकादौ
छर्द्यां दीर्घातिसारे ज्वरभवकसिते रक्तपित्ते क्षयेऽपि
वृष्याणां वृष्यराज्ञी वलिपलितहरा नेत्ररोगैकहन्त्री
तत्स्थं दीप्तस्थिराग्निं पुनरपि नवकं रोगिदेहं करोति ॥ ६७ ॥
पाकोऽस्याः विविधः प्रोक्तो मृदुर्मध्यः खरस्तथा।
आद्ययोर्दृश्यते सूतः खरपाके न दृश्यते ॥ ६८ ॥
मृदौ न सम्यग्भङ्गः स्यात् मध्ये भङ्गश्च रौप्यवत्।
खरे लघुर्भवेद्भङ्गो रूक्षः श्लक्ष्णोऽरुणच्छविः।
मृदुमध्यौ तथा खाद्यौ खरस्त्याज्यो विपोरमः ॥ ६९ ॥

अग्निकुमारो रसः—

शुद्धसूतं समं गन्धं त्रिकटु पटुपञ्चकम्।
दशकं तुल्यतुल्यञ्च विजया सर्वसम्मिता।
भावयेच्चित्रभृङ्गोत्थैस्त्रिधा च विजयाद्रवैः ॥ ७० ॥
दीप्ताग्निना तु यामैकं वालुकायन्त्रके पचेत्।
सञ्चूर्ण्य चार्द्रकद्रावैर्भावयित्वा च भक्षयेत् ॥ ७१ ॥
मधुना शाणमानन्तु रसो ह्यग्निकुमारकः।
दीप्ताग्निकारकः साम-ग्रहणीदोषनाशनः ॥ ७२ ॥

वडवामुखोरसः—

शुद्धसूतं समं गन्धं मृतताम्राभ्रटङ्कणम्।
सामुद्रञ्च यवक्षारं सर्जिसैन्धवनागरम् ॥ ७३ ॥

---

पकत्वमाहुस्तन्मते पारदबाहुल्यात् पर्पट्येव न स्यात्। तेन गन्धकस्याष्टमाषका रसस्य दलमर्द्धभागत्वमित्यर्थः ॥ ६१–६७ ॥

**अग्निकुमाररसे**—पटुपञ्चकं पञ्चलवणम् ॥ ७०—७२ ॥

**बडवामुखरसे**—सामुद्रं करकचलवणं स्वर्जि स्वर्जिकाक्षारं। पलाश-

अपामार्गस्य च क्षारं पलाशवरुणस्य च।
प्रत्येकं सूततुल्यं स्यादम्लयोगेन मर्द्दयेत् ॥ ७४ ॥
हस्तिशुण्डीद्रवैश्चाग्नौ मर्द्दयित्वा पुटेल्लघु ।
माषमात्रः प्रदातव्यो रसोऽयं बडवामुखः ।
ग्रहणीं विविधां हन्ति संग्रहग्रहणीं ज्वरम् ॥ ७५ ॥

ग्रहणीकपाटो रसः—

रसगन्धकयोश्चापि जातीफललवङ्गयो।
प्रत्येकं शाणमानञ्च श्लक्ष्णचूर्णीकृतं शुभम् ॥७६॥
सूर्य्यावर्त्तरसेनैव बिल्वपत्ररसेन च।
शृङ्गाटकसमुद्भूत-स्वरसेन च मर्द्दयेत् ॥ ७७ ॥
चण्डातपेन संशोष्य वाटिकां कारयेद्भिषक् ।
बिल्वपत्ररसेनैव दापयेद्रक्तिकाद्वयम् ॥ ७८ ॥
दध्ना च भोजनीयोऽसौ ग्रहणीरोगनाशनः।
पाण्डुरोगमतीसारं शोथं हन्ति तथा ज्वरम्।
अयञ्च ग्रहणीरोगे कपाटो रस उत्तमः ॥ ७९ ॥

संग्रहणीकपाटो रसः—

मुक्ता सुवर्णं रसगन्धटङ्कं, घनः कपर्दोऽमृततुल्यभागः।
सर्वैः समं शङ्खकचूर्णमत्र भाव्यश्च खल्लेऽतिविषाद्रवेण ॥
गोलञ्च कृत्वा मृदुकर्पटस्थं सम्पाच्य भाण्डे दिवसार्द्धकञ्च।
सर्वाङ्गशीतो रस एष भाव्यो धुस्तूरवह्न्योर्मुषलीद्रवैश्च ॥ ८१ ॥
लौहस्य पात्रे परिभावितश्च सिद्धो भवेत् संग्रहणीकपाटः।
संसाधितः सद्भिषजा प्रयत्नात् योगस्थितेनार्य्यसमर्चितेन ॥८२॥
वातोत्तरायां मरिचाज्ययुक्तैः पित्तोत्तरायां मधुपिप्पलीभिः।
कफोत्तरायां विजयारसेन कटुत्रयेणाज्ययुतो ग्रहण्याम् ॥ ८३ ॥
क्षये ज्वरे चार्शसि षट्प्रकारे सामातिसारेऽरुचिपानसे च।
मेहे च कृच्छ्रे गतधातुवृद्धौ गुञ्जाद्वयञ्चापि महामयघ्नः ॥ ८४ ॥

---

वरुणस्य चेति पलाशस्य वरुणस्य च क्षारं। अम्लेनेति काञ्जिकेन ॥७३–७५॥

**सङ्ग्रहणीकपाटरसे**—घनमभ्रं, अमृतं विषम् ॥ ८१—८४ ॥

**ग्रहणीकपाटरसे**—गिरिजावीजं गन्धकं, भववीजं पारदः। रक्तादा-

अन्यःग्रहणीकपाटो रसः—

गिरिजा-भव-बीजकज्जलीं परिमृद्यार्द्ररसेन शोषिता।
कुटजस्य तु भस्मना पुनर्द्विगुणेनाथ विमृद्य मिश्रिता॥ ८५॥
मर्द्दयित्वा प्रदातव्यमस्य गुञ्जाचतुष्टयम्।
अजाक्षीरेण दातव्यं क्वाथेन कुटजस्य वा॥ ८६॥
यूषं देयं मसूरस्य वारिभक्तञ्च शीतलम्।
दध्ना सह पुनर्देयं रक्तादौ रक्तिकाद्वयम्॥ ८७॥
वर्द्धयेद्दशपर्य्यन्तं ह्रासयेत् क्रमशस्तथा।
निहन्ति ग्रहणीं सर्वां विशेषात् कुक्षिमार्दवम्॥ ८८॥

विजयावटिका—

हाटकं रजतं ताम्रं यद्यत्र परिदीयते।
विजयाख्या तु सा ज्ञेया सर्वरोगनिषूदनी॥ ८९॥

ग्रहणीकपर्दपोट्टली—

कपर्दतुल्यं रसकन्तु गन्धं लौहं मृतं टङ्कणकञ्च तुल्यम्।
जयारसेनैकदिनं विमर्द्य चूर्णेन संवेष्ट्य पुटेच्च भाण्डे।
ददीत तत् 'पोट्टलिका'ऽभिधानं वात-प्रधानग्रहणीनिवृत्त्यै॥ ९०॥

हंसपोट्टली—

दग्धान् कपर्दकान् पिष्ट्वा त्र्यूषणं टङ्कणं विषम्।
गन्धकं शुद्धसूतञ्च तुल्यं जम्बीरजैर्द्रवैः॥ ९१॥
मर्दयेत् भक्षयेन्माषं संलिह्यान्मरिचार्द्रकम्।
निहन्ति ग्रहणीरोगं पथ्यं तक्रौदनं हितम्॥ ९२॥

अन्य ग्रहणीकपाटः—

तुल्यं कान्तं रसं तालं माक्षिकं टङ्कणं तथा।
सपादनिष्कं प्रत्येकं पञ्चनिष्कं वराटकम्।
द्विनिष्कं गन्धकं सर्वं पिष्ट्वा जम्बीरजैर्द्रवैः॥ ९३॥

---

विति रक्तातिसारादौ॥ ८५—८९॥

**ग्रहणीकपर्दपोट्टलिकायां**—कपर्दतुल्यमिति वराटभागतुल्यं। हंसपोट्टलिकामपि ग्रहणीकपर्दपोठलीवत् पचेत्॥ ९०—९२॥

**ग्रहणीकपाटे**—कान्तं कान्तलौहं। अर्द्धभागकरीषेणेति करीषेणार्द्धभा-

अर्द्धभागकरीषेण पुटितं भस्म शोभनम् ।
प्रदद्यात् ग्रहणीगुल्म-क्षयकुष्ठप्रमेहके ॥ ९४ ॥

महाग्रहणीकपाटो रसः—

रसाभ्रगन्धान् क्रमवृद्धियुक्तान् जङ्गारसेन त्रिदिनं विमर्द्य ।
जयन्तिका-भृङ्गकलम्बिनीरैः दिनं यवक्षारसटङ्गणञ्च ॥ ९५ ॥
क्षिप्त्वा तु गन्धस्य च तुल्यभागं वातारितैलेन युतं पुटित्वा ।
गुडूचिका-शाल्मलिकारसेन जयारसेनापि विमर्द्य शाणम् ॥९६॥
मरीचसार्द्धं मधुना समेतं ददीत पथ्यं दधिभक्तकञ्च ।
शिवेन प्रोक्तो जगतां हिताय महारसोऽयं ग्रहणीकपाटः ॥ ९७ ॥

ग्रहणीवज्रकपाटो रसः—

सूतं गन्धं यवक्षारं जयन्त्युग्राऽभ्रटङ्गणम् ।
जयन्तीभृङ्गजम्बीर-द्रवैः पिष्ट्वा दिनत्रयम् ॥ ९८ ॥
यामार्द्धं गोलकं स्वेद्यं मन्देन पावकेन च ।
शीते जयारससमैः शाल्मलीविजयाद्रवैः ॥ ९९ ॥
भावयेत् सप्तधा वज्र-कपाटः स्यात् रसोत्तमः ।
माषद्वयं त्रयं वाऽस्य मधुना ग्रहणीं जयेत् ॥ १०० ॥

प्रकारान्तरो ग्रहणीवज्रकपाटः—

तारमौक्तिकहेमानि सारश्चैकैकभागिकः ।
द्विभागो गन्धकः सूतस्त्रिभागो मर्दयेदिमान् ॥ १०१ ॥
कपित्थस्वरसैर्गाढं मृगशृङ्गे ततः क्षिपेत् ।
पुटेत् मध्यपुटेनैव तत उद्धृत्य मर्दयेत् ॥ १०२ ॥
बलारसैः सप्तधैवमपामार्गरसैस्त्रिधा ।
लोध्रप्रातिविषामुस्ता-धातकीन्द्रयवामृताः ॥ १०३ ॥
प्रत्येकमेतत्स्वरसैर्भावना स्यात् त्रिधा त्रिधा ।
माषमात्रो रसो देयो मधुना मरिचैस्तथा ॥ १०४ ॥

---

गपूरिते गर्त्ते इत्यर्थः ॥ ९३—९४ ॥

**ग्रहणीकपाटे**—जङ्घारसेन काकजङ्घारसेन । वातारितैलेन एरण्डतैलेन ॥ ९५—९७ ॥

**ग्रहणीवज्रकपाटे**—सारो लौहं, तारादिसर्व्वं कपित्थकस्वरसैः सम्मर्द्य

हन्यात् सर्वानतीसारान् ग्रहणीं सर्वजामपि।
कपाटो ग्रहणीरोगे रसोऽयं वन्हिदीपनः ॥ १०५ ॥

पानीयभक्तवटी—

कृष्णाभ्रलौहमलशुद्धविडङ्गचूर्णं प्रत्येकमेव पलिकं विधिवद्विधाय।
चव्यं कटुत्रयफलत्रयकेशराजदन्तीपयोदचपलानल खण्डकर्णाः ॥१०६॥

माणौलकन्दबृहतीत्रिवृताः ससूर्या
वर्त्ताः पुनर्नविकया सहितास्त्वमीषाम्।
मूलं प्रति प्रति विशोधितमक्षमेकं
चूर्णं तदर्द्धरसगन्धकमेकसंस्थम् ॥ १०७ ॥
कृत्वाऽऽर्द्रकीयरससंवलितञ्च भूयः
संपिष्य तस्य वटिका विधिवत् विधेया।
हन्त्यम्लपित्तमरुचिं ग्रहणीमसाध्यां
दुर्नाम-कामल-भगन्दर-शोथ-गुल्मान् ॥ १०८ ॥
शूलञ्च पाकजनितं सतताग्निमान्द्यं
सद्यः करोत्युपचितं चिरनष्टवन्हेः।
कुष्ठं निहन्ति पलितञ्च वलीं प्रवृद्धां
श्वासञ्च कासमपि पाण्डुगदं निहन्ति ॥ १०९ ॥
वार्यन्नमांस-दधिकाञ्जिकतक्रमत्स्य-
वृक्षाम्लतैलपरिपक्वभुजो यथेष्टम्।
शृङ्गाटबिल्वगुड-कञ्चट-नारिकेल-
दुग्धानि सर्वविदलानि विवर्जयेत् तु ॥ ११० ॥

शम्बूकादिवटी—

दग्धशम्बूकासिन्धूत्थं तुल्यं क्षौद्रेण मर्दयेत्।

---

मृगश्रृङ्गान्तरे कृत्वा मध्यविधपुटेनैव पचेत्। ततः बलारसादिभिर्भावयेत् ॥ १०१—१०५ ॥

**पानीयभक्तवटिकामाह कृष्णाभ्रेत्यादि**—शुद्धविडङ्गमिति तुषवर्जितविडङ्गं, चपला पिप्पली, अनलश्चित्रक, घण्टकर्णा खारकोन इति ख्यातः। तदर्द्धं रसगन्धकमिति मिलितरसगन्धकं कर्षार्द्धं, अन्ये तु प्रत्येकं कर्षार्द्धमाहुः। वृक्षाम्लं महार्द्रकम् ॥ १०६—११० ॥

निष्कैकेण निहन्त्याशु वात संग्रहणीगदम् ॥ १११ ॥

हिरण्यगर्भपोट्टली रसः—

एकांशो रसराजस्य ग्राह्यो द्वौ हाटकस्य च ।
मुक्ताफलस्य चत्वारो भागाः षड् दीर्घनिस्वनात् ॥ ११२ ॥
त्र्यंशं बलेर्वराख्याश्च टङ्कणो रसपादिकः ।
पक्वनिम्बुकतोयेन सर्वमेकत्र मर्दयेत् ॥ ११३ ॥
मूषामध्ये न्यसेत् कल्कं तस्य वक्त्रं निरोधयेत् ।
गर्त्तेऽरत्निप्रमाणे तु पुटेत् त्रिंशद्वनोपलैः ॥ ११४ ॥
स्वाङ्गशीतलतां ज्ञात्वा रसं मूषोदरात् नयेत् ।
ततः खल्लोदरे मर्द्यः सुधारूपं समुद्धरेत् ॥ ११५ ॥
एतस्यामृतरूपस्य दद्यात् गुञ्जाचतुष्टयम् ।
घृतमाध्वीकसंयुक्तमेकोनात्रिंशदूषणैः ॥ ११६ ॥
मन्दाग्नौ रोगसङ्घे च ग्रहण्यां विषमज्वरे ।
गुदाङ्कुरे महाशूले पीनसे श्वासकासयोः ॥ ११७ ॥
अतीसारे ग्रहण्याञ्च श्वयथौ पाण्डुके गदे ।
सर्वेषु कुष्ठरोगेषु यकृत्प्लीहोदरेषु च ॥ ११८ ॥
वातपित्तकफोत्थेषु द्वन्द्वजेषु त्रिजेषु च ।
दद्यात् सर्वेषु रोगेषु श्रेष्ठमेतत् रसायनम् ॥ ११९ ॥

रसाभ्रवटी—

शुद्धसूतस्य कर्षैकं कर्षैकं गन्धकस्य च ।
द्वयोः कज्जलिकातुल्यं व्योमचूर्णं प्रदापयेत् ॥ १२० ॥
केशराजस्य भृङ्गस्य निर्गुण्ड्याश्चित्रकस्य च ।
ग्रीष्मसुन्दरमण्डूकी-जयन्तीन्द्राशनस्य च ॥ १२१ ॥
श्वेतापराजितायाश्च स्वरसं पर्णसम्भवम् ।
रसतुल्यं प्रदातव्यं चूर्णञ्च मरिचोद्भवम् ॥ १२२ ॥
देयं रसार्द्धभागेन चूर्णं टङ्कणसम्भवम् ।
सम्मर्द्य वटिकां कुर्यात् कलायसदृशीं बुधः ॥ १२३ ॥

---

हिरण्यगर्भपोट्टलिकायां–दीर्घनिःस्वनं कांस्यं, वलेर्गन्धकस्य ११२–११९

हन्ति कासं क्षयं श्वासं वातश्लेष्मभवां रुजम्।
ज्वरे चैवातिसारे च सिद्ध एष प्रयोगराट् ॥ १२४ ॥
चातुर्थके ज्वरे श्रेष्ठो ग्रहण्यातङ्कनाशनः।
दधि चावश्यकं देयं प्राह नागार्जुनो मुनिः ॥ १२५ ॥

अन्योऽग्निकुमारः—

रसं गन्धं विषं व्योषं टङ्कणं लौहभस्मकम्।
अजमोदाऽहिफेनञ्च सर्वतुल्यं मृताभ्रकम् ॥ १२६ ॥
चित्रकस्य कषायेण मर्दयेद् याममात्रकम्।
मरिचाभां वटीं खादेदजीर्णं ग्रहणीं तथा।
नाशयेन्नात्र सन्देहो गुह्यमेतच्चिकित्सितम् ॥ १२७ ॥

नृपतिवल्लभो रसः--

जातीफललवङ्गाब्द-त्वगेलाटङ्करामठम्।
जीरकं तेजपत्रञ्च यमानीविश्वसैन्धवाः ॥ १२८ ॥
लौहमभ्रं रसो गन्धस्ताम्रं प्रत्येकशः पलम्।
मरिचं द्विपलं दत्त्वा छागीक्षीरेण पेषयेत् ॥ १२९ ॥
धात्रीरसेन वा पेष्यं वटिकाः कुरु यत्नतः।
श्रीमद्गहननाथेन विचिन्त्य परिनिर्मितः ॥ १३० ॥
सूर्यवत् तेजसा चायं रसो 'नृपतिवल्लभः'।
अष्टादशवटीः खादेत् पवित्रः सूर्यदर्शकः ॥ १३१ ॥
हन्ति मन्दानलं सर्वमामदोषं विसूचिकाम्।
प्लीहगुल्मोदराष्ठीला-यकृत्पाण्डुत्वकामलाम् ॥ १३२ ॥
सर्वानेव गदान् हन्ति चण्डांशुरिव पापहा।
बलवर्णकरो हृद्य आयुष्यो वीर्यवर्द्धनः ॥ १३३ ॥
परं वाजीकरः श्रेष्ठः पटुदो मन्त्रसिद्धिदः।
अरोगी दीर्घजीवी स्याद्रोगी रोगाद्विमुच्यते ॥ १३४ ॥
रसस्यास्य प्रसादेन बुद्धिमान् जायते नरः।
बदरास्थिप्रमाणेन वटिकां कारयेत् भिषक् ॥ १३५ ॥

---

रसाभ्रवटिकायां—व्योमचूर्णं कृष्णाभ्रचूर्णम् ॥ १२०—१२५ ॥
नृपतिवल्लभे—अब्दो मुस्तकम् खादेत्—क्रमशः ॥ १२८—१३५ ॥

राजवल्लभो रसः--

जातीफललवङ्गाब्द त्वगेलाटङ्करामठम् ।
जीरकं तेजपत्रञ्च यमानी विश्वसैन्धवम् ॥ १३६ ॥
लौहमभ्रं सताम्रञ्च रसगन्धकमेव च ।
मरिचं त्रिवृता रूप्यं प्रत्येकं द्विपलोन्मितम् ॥ १३७ ॥
धात्रीरसे वटीं कुर्यात् द्विगुञ्जाफलमानतः ।
हन्ति शूलं तथा गुल्ममामवातं सुदारुणम् ॥ १३८ ॥
हृच्छूलं पार्श्वशूलञ्च चक्षुःशूलं हलीमकम् ।
शिरःशूलं कटीशूलमानाहञ्चाष्टशूलकम् ॥ १३९ ॥
क्रिमिकुष्ठानि दद्रूणि वातरक्तं भगन्दरम् ।
उपदंशमतीसारं ग्रहण्यर्शःप्रवाहिकाम् ।
राजवल्लभनामाऽयं महेशेन प्रकाशितः ॥ १४० ॥

बृहन्नृपवल्लभः--

रसगन्धकलौहाभ्रं नागं चित्रं त्रिवृत् समम् ।
टङ्कं जातीफलं हिङ्गु त्वगेलाब्दलवङ्गकम् ॥ १४१ ॥
तेजपत्रमजाजी च यमानी विश्वसैन्धवम् ।
प्रत्येकं तोलकं चूर्णं मरीचतारयोस्तथा ॥ १४२ ॥
निरुत्थकं मृतं हेम तथा द्वादशरक्तिकम् ।
आर्द्रकस्य रसेनैव धात्र्याश्च स्वरसेन च ॥ १४३ ॥
भावयित्वा प्रदातव्यो माषद्वयप्रमाणतः ।
भक्षयेत् प्रातरुत्थाय पथ्यं भक्षेत् यथेप्सितम् ॥ १४४ ॥
अग्निमान्द्यमजीर्णञ्च दुर्नामग्रहणीं जयेत् ।
आमाजीर्णप्रशमनः सर्वरोगनिषूदनः ।
नाशयेदौदरान् रोगान् विष्णुचक्रमिवासुरान् ॥ १४५ ॥

महाराजनृपतिवल्लभो रसः—

कर्षत्रयं मृतं कान्तं मृताभ्रं मृतताम्रकम् ।
मृतं तारं माक्षिकञ्च कर्षं कर्षं प्रदापयेत् ॥ १४६ ॥

---

महाराजनृपवल्लभे—कान्तं कान्तलौहं, शृङ्गी कर्कटशृङ्गी, वरिरं

मृतं स्वर्णं मृतं तारं टङ्कणं शृङ्गमेव च ।
वशिरं दन्तिमूलञ्च मरिचं तेजपत्रकम् ॥ १४७ ॥
यमानीं बालकं मुस्तं शुण्ठकञ्च सधान्यकम् ।
सिन्धूद्भवं सकर्पूरं विडङ्गं चित्रकं विषम् ॥ १४८ ॥
पारदं गन्धकञ्चैव तोलमानं प्रदापयेत् ।
तोलद्वयं त्रिवृच्चूर्णं लवङ्गं तच्चतुर्गुणम् ॥ १४९ ॥
जातीकोषफलञ्चैव तत्समं स्याद्वराङ्गकम ।
सर्वेषामर्द्धभागन्तु विजकं तत्र मिश्रयेत् ॥ १५० ॥
सर्वमेकीकृतं यद्‌यत् त्रुटिचूर्णञ्च तत्समम् ।
भावना च प्रदातव्य छागीदुग्धेन सप्तधा ॥ १५१ ॥
मातुलुङ्गरसैः पश्चात् भावयेत् सप्तवारकम् ।
छायाशुष्कां वटीं कृत्वा भक्षयेद्दशरक्तिकाम् ॥ १५२ ॥
मन्दानलं संग्रहणीं प्रवृद्धां,मामानुबन्धां क्रिमिपाण्डुरोगम् ।
छर्द्यम्लपित्तं हृदयामयञ्च गुल्मोदरानाहभगन्दरञ्च ॥ १५३ ॥
अर्शांसि वै पित्तकृतानशेषान् सामं सशूलाष्टकमेव हन्ति ।
साजीर्णविष्टम्भविसर्पदाहं विलम्बिकाञ्चाप्यलसं प्रमेहम् ॥१५४॥
कुष्ठान्यशेषाणि च कासशोषं हन्यात् सशोथं ज्वरमूत्रकृच्छ्रम् ।
मतान्तरे सर्वसुभद्रनामा महेश्वरेणैव विभाषितोऽयम् ॥१५५॥

अन्यो महाराजनृपतिवल्लभो रसः—

माक्षिकं लौहमभ्रञ्च वङ्गं रजतहाटकम् ।
ग्रन्थिः यमानिका चोचं ताम्रं नागरटङ्कणम् ॥ १५६ ॥
सैन्धवं बालकं मुस्तं धन्याकं गन्धकं रसम् ।
शृङ्गी कर्पूरकञ्चैव प्रत्येकं माषकोन्मितम् ॥ १५७ ॥
माषद्वयं रामठं स्यात् मरिचानां चतुष्टयम् ।
जातीकोषं लवङ्गञ्च पत्रञ्च तोलकोन्मितम् ॥ १५८ ॥
नाभिशङ्खं विडङ्गञ्च शाणं माषद्वयं विषम् ।

---

गजपिप्पली, तोलमानमिति प्रत्येकं तोलकमानं, त्रुटिचूर्णन्तु तत्सममिति मिलितसर्व्वचूर्णसमं सूक्ष्मैलाचूर्णमित्यर्थः ॥ १४६—१५१ ॥

इति ग्रहणीरोग-चिकित्सा ।

कर्षषट्कं सत्रिमाषं सूक्ष्मैलानां ततः क्षिपेत् ॥ १५९ ॥
विडं कर्षद्वयं सर्वं छागीक्षीरेण पेषयेत् ।
चतुर्गुञ्जामितं खादेत् सानाहग्रहणीं जयेत् ॥ १६० ॥
शम्भुना निर्मितो ह्येष पूर्ववत् गुणकारकः ।
नाम्ना महाराजपूर्वो नृपवल्लभ उच्यते ॥ १६१ ॥
[ इति ग्रहणीरोग-चिकित्सा ]

---

## अथाऽर्शः-चिकित्सा ।

### चक्रेश्वरो रसः—

चतुर्भागं शुद्धसूतं पञ्च टङ्कणमभ्रकम् ।
त्रिदिनं भावयेद् घर्मे द्रवैः श्वेतपुनर्नवैः ॥ १ ॥
द्विगुञ्जं भक्षयेन्नित्यं वातदुर्नामशान्तये ।
सिद्धश्चक्रेश्वरो नाम रसश्चाऽऽर्शःकुलान्तकः ॥ २ ॥

### तीक्ष्णमुखो रसः—

मृतसूतार्कहेमाभ्रं तीक्ष्णं मुण्डञ्च गन्धकम् ।
मण्डूरञ्च समं ताप्यं मर्द्यं कन्याद्रवैर्दिनम् ॥ ३ ॥
अन्धमूषागतं सर्वं ततः पाच्यं दृढाग्निना ।
चूर्णितं सितया माषं खादेत् तच्चार्शसां हितम् ।
रसस्तीक्ष्णमुखो नाम चाऽऽसाध्यमपि साधयेत् ॥ ४ ॥

### अर्शःकुठारो रसः—

शुद्धसूतं द्विधा गन्धं मृतलौहञ्च ताम्रकम् ।
प्रत्येकं द्विपलं दन्ती त्र्यूषणं शूरणं तथा ॥ ५ ॥
शुभा टङ्कयवक्षार-सैन्धवं पलपञ्चकम ।
पलाष्टकं स्नुहीक्षारं द्वात्रिंशच्च गवां जलैः ॥ ६ ॥
आपिण्डितं पचेदग्नौ खादेत् माषद्वयं ततः ।
रसश्चार्शःकुठारोऽयं सर्वरोगकुलान्तकः ॥ ७ ॥

---

पूर्वोक्तसङ्गत्यैव ग्रहण्यनन्तरमर्शश्चिकित्सितमुच्यते तत्र प्रथमं **चक्रेश्वररसमाह शुद्धसूतेति** सूतश्चात्र सूतभस्म अथवा समानो गन्धको देयः१–२ **तीक्ष्णमुखरसे**-तीक्ष्णं मुण्डञ्चेति तीक्ष्णलौहं मुण्डलौहञ्च, ताप्यं स्वर्णमाक्षिकम् ॥ ३–४ ॥ **अर्शः कुठाररसे**-शुभा वंशलोचना ॥ ५–७ ॥

चक्राख्यो रसः--

मृतसूताभ्रवैक्रान्तं ताम्रं कांस्यं समं समम्।
सर्वतुल्येन गन्धेन दिनं भल्लातजैर्द्रवैः॥ ८॥
मर्दयेत् यत्नतः पश्चात् वटीं कुर्यात् द्विगुञ्जिकाम्।
भक्षणाद् गुदजान् हन्ति द्वन्द्वजान् सर्वजानपि॥ ९॥

नित्योदितो रसः—

मृतसूताभ्रलौहार्क-विषं गन्धं समं समम्।
सर्वतुल्यन्तु भल्लात-फलमेकत्र चूर्णयेत्॥ १०॥
द्रवैः शूरणकन्दोत्थैः खल्ले मर्द्यं दिनत्रयम्।
लिहेदाज्यैर्माषमात्रं रसश्चार्शांसि नाशयेत्।
नित्योदितो रसो नाम गुदोद्भवकुलान्तकः॥ ११॥

चन्द्रप्रभागुडिका—

क्रिमिरिपुदहनव्योष-त्रिफलासुरदारुचव्यभूनिम्बाः।
मागधीमूलं मुस्तं सशटी वचा धातुमाक्षिकञ्चैव।
लवणक्षारनिशायुग-कुस्तुम्बुरुगजकणाऽतिविषाः॥ १२॥
कर्षांशकान्येव समानि कुर्यात् पलाष्टकं चाश्मजतोर्विदध्यात्।
निष्पत्रशुद्धस्य पुरस्य धीमान् पलद्वयं लौहरजस्तथैव॥ १३॥
सिताचतुष्कं पलमत्र वांशया निकुम्भकुम्भीत्रिसुगन्धियुक्तम्।
चन्द्रप्रभेयं गुडिका विधेया, अर्शांसि निर्णाशयते षडेव॥ १४॥
भगन्दरं कामलपाण्डुरोगं विनष्टवह्नेः कुरुते च दीप्तिम्।

---

**चक्राख्यरसे**-वैक्रान्तं दग्धहीरकं तत्र भल्लातकं भागैकं ग्राह्यम्॥८-९॥

**नित्योदितरसमाह मृतसूतेत्यादि**-मृतसूतस्थाने शुद्धसूतेति केचित् पठन्ति। सूतादिगन्धान्तानि षड्द्रव्याणि समभागानि। भल्लातं भल्लातफलं तच्च सर्वतुल्यं ज्ञेयम्। अभावे रक्तचन्दनं। तन्त्रान्तरेऽस्य गुदजान्तकसंज्ञा ज्ञातव्या॥ १०-११॥

**चन्द्रप्रभागुडिकायां**-क्रिमिरिपुःविडङ्गं, दहनश्चित्रकः, सुरदारु देवदारु, भूनिम्बं 'चिरैता' इति ख्याता, मागधीमूलं, पिप्पलीमूलं, निशायुगं हरिद्राद्वयं, अश्मजतु शिलाजतु। निष्पत्रशुद्धस्य पुरस्येति विशुद्धगुग्गुलोः,

हन्त्यामयान् पित्तकफानिलोत्थान् नाडीगते मर्मगते व्रणे च ॥१५॥
ग्रन्थ्यर्बुदे विद्रधिराजयक्ष्ममेहे भगाख्ये प्रदरे च योज्या ।
शुक्रक्षये चाश्मरिमूत्रकृच्छ्रे मूत्रप्रवाहेऽप्युदरामये च ॥ १६ ॥
तक्रानुपानं त्वथ मस्तुपानमाजो रसो जाङ्गलजो रसो वा ।
पयोऽथवा शीतजलानुपानं बलेन नागस्तुरगो जवेन ॥ १७ ॥
दृष्ट्या सुपर्णः श्रवणे वराहः कान्त्या रतीशो धिषणश्च बुद्ध्या ।
न पानभोज्ये परिहार्य्यमस्ति न शीतवातातपमैथुनेषु ।
शम्भुं समभ्यर्च्य कृतप्रणामैः प्राप्ता गुडी चन्द्रमसः प्रसादात् ॥१८॥
शुक्रदोषान् निहन्त्याशु प्रमेहानपि दारुणान् ।
वलीपलितनिर्मुक्तो वृद्धोऽपि तरुणायते ॥ १९ ॥

माणाद्यं लौहम्—

माण-शूरण-भल्लात-त्रिवृद्दन्तीसमन्वितम् ।
त्रिक-त्रय-समायुक्तं लौहं दुर्नामनाशनम् ॥ २० ॥

चञ्चत्कुठारो रसः—

रसगन्धकलौहानां प्रत्येकं भागयुग्मकम् ।
त्रिकटुदान्तकुष्ठकं षड्भागं लाङ्गलस्य च ॥ २१ ॥
क्षारसैन्धवटङ्काणां प्रत्येकं भागपञ्चकम् ।
गोमूत्रस्य च द्वात्रिंशत् स्नुहीक्षीरं तथैव च ।
यावच्च पिण्डितं सर्वं तावन्मृद्वग्निना पचेत् ॥ २२ ॥
माषद्वयं ततः खादेत् दिवास्वप्नादि वर्जयेत् ।
रसश्चञ्चत्कुठारोऽयमर्शसां कुलनाशनः ॥ २३ ॥

शिलागन्धकवटकः—

शिलागन्धकयोश्चूर्णं पृथग्भृङ्गरसाप्लुतम् ।

---

वांश्या वंशलोचना, निकुम्भी दन्ती, कुम्भी त्रिवृत् । "वृद्धवैद्योपदेशेन पलार्द्धं रसगन्धकं । केवलं मूर्च्छितं वापि पलं वा दापयेद्रसं ॥ अभ्रकञ्च क्षिपेत् कश्चित् पलमानं भिषग्वरः । संमर्द्य मधुसर्पिर्भ्यामादौ रक्तिचतुष्टयं ॥ भक्ष्यं वृद्ध्या यथायुक्ति यावन्माषचतुष्टयं । त्रिवृद्दन्तीत्रिजातानां कर्षमानं पृथक् पृथक् ॥" केचित्तु इदं श्लोकत्रयं पठन्ति ॥१२–१९॥

**माणाद्यलौहे**—लौहं सर्व्वचूर्णसमम् ॥ २० ॥

सप्ताहं भावयेत् सर्पिर्मधुभ्याञ्च विमर्दयेत् ॥ २४ ॥
अर्शसश्चानुलोम्यार्थं हताग्निबलवर्द्धनम् ।
रक्तिकाद्वितयं खादेत कुष्ठादिरहितो नरः ॥ २५ ॥

जातीफलादिवटी—

जातीफलं लवङ्गञ्च पिप्पलीं सैन्धवं तथा ।
शुण्ठीं धुस्तूरबीजञ्च दरदं टङ्कणं तथा ॥ २६ ॥
समं सर्वं विचूर्ण्याऽथ जम्भनीरेण मर्दयेत् ।
वटी जातीफलाद्येयमर्शोऽग्निमान्द्यनाशिनी ॥ २७ ॥

पञ्चाननवटी—

मृतसूताभ्रलौहानि मृतार्कगन्धकैः सह ।
सर्वाणि समभागानि भल्लातं सर्वतुल्यकम् ॥ २८ ॥
वन्यशूरणकन्दोत्थैर्द्रवैः पलप्रमाणतः ।
मर्दयेत् दिनमेकञ्च माषमात्रं पिबेद् घृतैः ॥ २९ ॥
भक्षणात् हन्ति सर्वाणि चार्शांसि च न संशयः ।
असाध्येष्वपि कर्त्तव्या चिकित्सा शङ्करोदिता ।
कुष्ठरोगं निहन्त्याशु मृत्युरोगविनाशिनी ॥ ३० ॥

अष्टाङ्गो रसः—

गन्धं रसेन्द्रं मृतलौहकिट्टं फलत्रयं त्र्यूषणवह्निभृङ्गम् ।
कृत्वा समं शाल्मलिका-गुडूची-रसेन यामत्रितयं विमर्द्य ॥ ३१ ॥
निष्कप्रमाणं गदितानुपानैः सर्वाणि चार्शांसि हरेद्रसस्य ।
लोकोपकृत्यै करुणामयेन रसोऽयमुक्तस्त्रिपुरान्तकेन ॥ ३२ ॥

[ इति अर्शोऽधिकारः ]

## अथाऽजीर्ण-चिकित्सा ।

महोदधिवटी—

एकैकं विषसूतञ्च जातीटङ्कं द्विकं द्विकम् ।

---

शिलागन्धकवटके—शिला मनःशिला ॥ २४-२५ ॥
अष्टाङ्गरसे—लौहकिट्टं मण्डूरं, फलत्रयं त्रिफला ॥ ३१-३२ ॥

इत्यर्शश्चिकित्सा ।

अर्शःकार्य्यत्वात् तदनन्तरमाग्निमान्द्यादिचिकित्सामाह एकैकमित्या-

कृष्णात्रिकं विश्वषट्कं द्विकं गन्धं कपर्दकम् ॥ १ ॥
देवपुष्पं बाणमितं सर्वं संमर्द्य यत्नतः ।
नाम्ना महोदधिवटी नष्टमग्निं प्रदीपयेत् ॥ २ ॥

अग्नितुण्डीरसः—

शुद्धसूतं विषं गन्धमजमोदा फलत्रिकम् ।
सर्जिक्षारं यवक्षारं वह्निसैन्धवजीरकम् ॥ ३ ॥
सौवर्चलं विडङ्गानि सामुद्रं त्र्यूषणं तथा ।
विषंमुष्टिसमं सर्वं जम्बीराम्लेन मर्दयेत् ।
मरिचाभां वटीं खादेत् वह्निमान्द्यप्रशान्तये ॥ ४ ॥

वडवानलो रसः—

शुद्धसूतस्य कर्षैकं गन्धकं तत्समं मतम् ।
पिप्पलीं पञ्चलवणं मरिचञ्च फलत्रयम् ॥ ५ ॥
क्षारत्रयं समं सर्वं चूर्णं कृत्वा प्रयत्नतः ।
निर्गुण्ड्याश्च द्रवेणैव भावयेद्दिनमेकतः ।
वडवानलनामाऽयं मन्दाग्निञ्च विनाशयेत् ॥ ६ ॥

हुताशनो रसः—

गन्धेशटङ्कणककं विषमत्र त्रिभागिकम् ।
अष्टभागन्तु मरिचं जम्भाम्भोमर्दितं दिनम् ॥ ७ ॥
तद्वटीं मुद्गमानेन कृत्वाऽऽर्द्रेण प्रयोजयेत् ।
शूलारोचकगुल्मेषु विसूच्यां वह्निमान्द्यके ।
अजीर्णे सन्निपातादौ शैत्ये जाड्ये शिरोगदे ॥ ८ ॥

बृहत्—हुताशनो रसः—

एकद्विकद्वादशभागयुक्तं योज्यं विष टङ्कणमूषणञ्च ।
हुताशनो नाम हुताशनस्य करोति वृद्धिं कफजित् नाराणाम्॥९॥

---

दि-जाती जातीफलं । देवपुष्पं लवङ्गं वाणमितमिति पञ्चभागमित्यर्थः ॥१-२॥
अग्नितुण्डीरसे-वह्निः श्चित्रकः, अजमोदा यमानी ॥ ३-४॥
वडवानलरसे-क्षारत्रयं यवक्षार-स्वर्जिकाक्षार-टङ्कणक्षारम् ॥ ५-६ ॥
हुताशनरसे-ईशः पारदः ॥ ७-८ ॥

अमृतकल्पवटी—

शुद्धौ पारदगन्धौ च समानौ कज्जलीकृतौ ।
तयोरर्द्धं विषं शुद्धं तत्समं टङ्कणं भवेत् ॥ १० ॥
भृङ्गराजद्रवैर्भाव्यं त्रिदिनं यत्नतः पुनः ।
मुद्गप्रमाणा वटिका कर्त्तव्या भिषजां वरैः ॥ ११ ॥
वटीद्वयं हरेत् शूलमग्निमान्द्यं सुदारुणम् ।
अजीर्णं जरयत्याशु धातुपुष्टिं करोति च ॥ १२ ॥
नानाव्याधिहरा चेयं वटी गुरुवचो यथा ।
अनुपानविशेषेण सम्यक् गुणकरी भवेत् ॥ १३ ॥

अग्निकुमारो रसः—

रसेन्द्रगन्धौ सह टङ्कणेन समं विषं योज्यमिह त्रिभागम् ।
कपर्दशङ्खाविह नेत्रभागौ मरीचमत्राष्टगुणं प्रदेयम् ॥ १४ ॥
सुपक्वजम्बीररसेन घृष्टः सिद्धो भवेदग्निकुमार एषः ।
विसूचिकाऽजीर्णसमीरणार्त्ते दद्याद् द्विवल्लं ग्रहणीगदे च ॥१५॥

बृहदग्निकुमारो रसः—

शुद्धसूतं द्विधा गन्धं गन्धतुल्यञ्च टङ्कणम् ।
फलत्रयं यवक्षारं व्योषं पञ्च पटूनि च ॥ १६ ॥
द्वादशैतानि सर्वाणि रसतुल्यानि दापयेत् ।
सम्मर्द्य सप्तधा सर्वं भावयेदार्द्रकद्रवैः ॥ १७ ॥
संशोष्य चूर्णयित्वा तु भक्षयेदार्द्रकाम्बुना ।
शाणमात्रं वयो वीक्ष्य नानाऽजीर्णप्रशान्तये ॥ १८ ॥
रसश्चाग्निकुमारोऽयं महेशेन प्रकाशितः ।
महाग्निकारकश्चैव कालभास्करतेजसः ॥ १९ ॥
अग्निमान्द्यभवान् रोगान् शोथं पाण्ड्वामयं जयेत् ।
दुर्नामग्रहणी साम-रोगान् हन्ति न संशयः ।

---

अमृतकल्पवटिकायां—तत्समिति विषसमम् ॥ १०–१३ ॥

अग्निकुमाररसे—भागत्रयमित्येकभागापेक्षया, एवं सर्व्वत्र । कपर्दशङ्खं दग्ध्वा जम्बीररसे प्रक्षिप्य शोधयन्ति वृद्धाः ॥ १४–१५ ॥

बृहदग्निकुमाररसे—रसापेक्षया द्विगुणं गन्धं टङ्कणञ्च, पटूनि लवणानि,

यथेष्टाहारचेष्टस्य नास्त्यत्र नियमः क्वचित् ॥ २० ॥

अपरो बृहदग्निकुमारो रसः—

व्योषं जातीफले द्वे च लवङ्गञ्च वराङ्गकम् ।
पत्रं शृङ्गी कणा टङ्गं यमानी जीरकद्वयम् ॥ २१ ॥
सैन्धवञ्च बिडं हिङ्गु रसं गन्धञ्च रौप्यकम् ।
लौहमभ्रं समं सर्वं जम्बीररसमर्दितम् ॥ २२ ॥
अजीर्णशान्तये खादेच्चतुर्गुञ्जां वटीं नरः ।
अत्यग्निकारकश्चायं रसश्चाग्निकुमारकः ॥ २३ ॥
संग्रहग्रहणीञ्चैव वातपित्तकफोद्भवाम् ।
नाशयेदामदोषञ्च त्रिदोषजनितञ्च यत् ।
शूलदोषं विसूचीञ्च भास्करस्तिमिरं यथा ॥ २४ ॥

बृहन्महोदधि वटी—

लवङ्गं चित्रकं शुण्ठी जयपालः समं समम् ।
टङ्गणञ्च प्रदातव्यं वृद्धदारस्य कार्षिकम् ॥ २५ ॥
चतुर्दश भावनाश्च दन्तीद्रावैः प्रदापयेत् ।
लिम्पाकेन त्रिधा देया वृद्धदारेण पञ्चधा ॥ २६ ॥
रसं गन्धञ्च गरलं मेलयित्वा विभावयेत् ।
आर्द्रकस्य रसेनैव चित्रकस्य रसेन वा ॥ २७ ॥
मुद्गप्रमाणां वटिकां कृत्वा खादेत् दिने दिने ।
क्षुत्प्रबोधकरी चेयं जीर्णज्वरविनाशिनी ॥ २८ ॥

रामबाणरसः—

पारदामृतलवङ्गगन्धकं भागयुग्ममरिचेन मिश्रितम् ।
जातिकाफलमथार्द्धभागिकं तिन्तिडीफलरसेन मर्दितम् ॥ २९ ॥

---

द्वादशैतानीति, फलत्रयादिपञ्चपट्वन्तानि द्रव्याणि रसतुल्यानि ॥१६-२०॥

**अपरबृहदग्निकुमाररसे**-जातीफले इति जातीफलजातीकोषे, वराङ्गं गुडत्वक् ॥ १-२४ ॥

**बृहन्महोदधिवटिकायां**-लवङ्गादि सर्वं कर्षपरिमितं गृहीत्वा दन्त्यादिद्रवैर्भावयेत् । रसगन्धविषमेकीकृत्य आर्द्रकादिरसैर्भावयेत् ॥२५-२८॥

**रामबाणरसे**-रसादिगन्धतानां चतुर्णां समभागं, मरिचञ्चैकभाग ऽ-

माषमात्रमनुपानयोगतः सद्य एव जठराग्निदीपनः ।
वह्निमान्द्य-दशवक्त्रनाशनो रामबाण इति विश्रुतो रसः ॥३०॥
जाठरामयरुजाञ्च ताडकां दुःसहं ह्यरुचिकं कबन्धकम् ।
सङ्ग्रहग्रहणिकुम्भकर्णकं सामवातखरदूषणं जयेत् ॥ ३१ ॥

अजीर्णकण्टको रसः—

शुद्धसूतं विषं गन्धं समं सर्वं विचूर्णयेत् ।
मरिचं सर्वतुल्यञ्च कण्टकार्याः फलद्रवैः ॥ ३२ ॥
मर्दयेत् भावयेत् सर्वमेकविंशतिवारकम् ।
त्रिगुञ्जां वटिकां खादेत् सर्वाऽजीर्णप्रशान्तये ।
अजीर्णकण्टकः सोऽयं रसो हन्ति विषूचिकाम् ॥ ३३ ॥

पाशुपतो रसः—

शुद्धसूतं द्विधा गन्धं त्रिभागं तीक्ष्णभस्मकम् ।
त्रिभिः समं विषं देयं चित्रकक्काथभावितम् ॥ ३४ ॥
धूर्त्तबीजस्य भस्मापि द्वात्रिंशद्भागसंयुतम् ।
कटुत्रयं त्रिभागं स्यात् लवङ्गैले च तत्समे ॥ ३५ ॥
जातीफलं तथा कोषमर्द्धभागं नियोजयेत् ।
तथार्द्धं लवणं पञ्च स्नुह्यर्कैरण्डतिन्तिडी ॥ ३६ ॥
अपामार्गाश्वत्थजञ्च क्षारं दद्यात् विचक्षणः ।
हरीतकी यवक्षारं स्वर्जिका हिङ्गु जीरकम् ॥ ३७ ॥
टङ्कणं सूततुल्यञ्च अम्लयोगेन मर्दयेत् ।
भोजनान्ते प्रयोक्तव्यो गुञ्जाफलप्रमाणतः ॥ ३८ ॥
रसः पाशुपतो नाम सद्यः प्रत्ययकारकः ।
दीपनः पाचनो हृद्यः सद्यो हन्ति विषूचिकाम् ॥ ३९ ॥
तालमूलीरसेनैव उदरामयनाशनः ।
अतीसारं मोचरसैः ग्रहणीं तक्रसैन्धवैः ॥ ४० ॥

---

पेक्षया द्विगुणं, मिलिताऽपेक्षयेति केचित् । जातिकाफलमर्द्धभागिकमिति-ए-क.भागापेक्षया । तिन्तिडीफलमपक्वतिन्तिडीफलम् ॥ २९–३१ ॥

**पाशुपतरसे**–तीक्ष्णभस्मकमिति मृतलौहं । सूतादिविषपर्य्यन्तं द्रव्यं चित्रकक्काथेन भावयेत्, स्नुह्यादि–अश्वत्थान्तानां क्षारं पुनः पञ्चलवणञ्च,

सौवर्चलकणाशुण्ठीयुतः शूलं विनाशयेत् ।
अर्शो हन्ति च तक्रेण पिप्पल्या राजयक्ष्मकम् ॥ ४१ ॥
वातरोगं निहन्त्याशु शुण्ठीसौवर्चलान्वितः ।
शर्कराधान्ययोगेन पित्तरोगं निहन्त्ययम् ॥ ४२ ॥
पिप्पलीक्षौद्रयोगेन श्लेष्मरोगञ्च तत्क्षणात् ।
अस्मात् परतरो नास्ति धन्वन्तरिमतो रसः ॥ ४३ ॥

बृहच्छङ्खवटी—

दग्धशङ्खस्य चूर्णं स्यात् तथा लवणपञ्चकम् ।
तिन्तिडीक्षारकञ्चैव कटुकत्रयमेव च ॥ ४४ ॥
तथैव हिङ्गुकं ग्राह्यं विषं पारदगन्धकम् ।
अपामार्गस्य वह्नेश्च क्वाथैर्लिम्पाकजैर्द्रवैः ॥ ४५ ॥
भावयेत् सर्वचूर्णं तदम्लवर्गैर्विशेषतः ।
यावत् तदम्लतां याति गुडिकाऽमृतरूपिणी ॥ ४६ ॥
सद्यो वह्निकरी चैव भस्मकञ्च नियच्छति ।
भुक्त्वाऽऽकण्ठन्तु तस्यान्ते खादेच्च गुडिकामिमाम् ॥४७॥
तत्क्षणाज्जारयत्याशु पुनर्भोजनमिच्छति ।
हन्ति वातं तथा पित्तं कुष्ठानि विषमज्वरम् ॥ ४८ ॥
गुल्माख्यं पाण्डुरोगञ्च निद्राऽऽलस्यमरोचकम् ।
शूलञ्च परिणामोत्थं प्रमेहञ्च प्रवाहिकाम् ।
रक्तस्रावञ्च शोथञ्च दुर्नामानि विशेषतः ॥ ४९ ॥

भक्तविपाकवटी—

माक्षिकं रसगन्धौ च हरितालं मनःशिलां ।
त्रिवृद्दन्तीं वारिवाहं चित्रकञ्च महौषधम् ॥ ५० ॥

---

टङ्कणान्तञ्च प्रत्येकं रससममित्यर्थः ॥ ३४-४३ ॥

बृहच्छङ्खवटिकायां—तिन्तिडीक्षारं तिन्तिडीफलत्वग्भस्म । अत्र अम्लवर्गैर्भावयेदित्युक्तं तमम्लवर्गमाह—अम्लवेतसजम्बीर-लुङ्गाम्लचणकाम्लकाः । नागरङ्गं तिन्तिडीकं चिञ्चापत्रञ्च निम्बुकं ॥ चाङ्गेरी दाडिमं लोलं करमर्दस्तथैव च । व्यक्ताम्लोऽयं गणः प्रोक्तो वेतसाम्लवदुत्तमः । जम्बीरचणकाम्लञ्च सर्वत्रैव प्रशस्यते ॥ ४४-४९ ॥

पिप्पलीं मरिचं पथ्यां यमानीं कृष्णजीरकम्।
रामठं कटुकां पाठां सैन्धवं साजमोदकम् ॥ ५१ ॥
जातीफलं यवक्षारं समभागं विचूर्णयेत्।
आर्द्रकस्य रसेनैव निर्गुण्ड्याः स्वरसेन च ॥ ५२ ॥
सूर्य्यावर्त्तरसेनैव तुलस्याः स्वरसेन च।
आतपे भावयेद्वैद्यः खल्लपात्रे च निर्मले।
पेषयित्वा वटीं खादेत् गुञ्जाफलसमप्रभाम्[1] ॥ ५३ ॥
भुक्तोत्तरीये बहुभोजनान्ते मुहुर्मुहुर्वाञ्छति भोजनानि[2]।
आमानुबन्धे च चिराग्निमान्द्ये विड्विग्रहे पित्तकफानुबन्धे ॥ ५४ ॥
अर्शःसु शोथोदरकेऽप्यजीर्णे शूलप्रदोषप्रभवे ज्वरे च।
शस्ता वटी भक्तविपाकसंज्ञा सुखं विपच्याऽऽशु नरस्य कोष्ठम् ॥ ५५॥

पञ्चामृतवटी—

अभ्रकं पारदं ताम्रं गन्धकं मरिचानि च।
समभागमिदं चूर्णं चाङ्गेरीरसमर्दितम् ॥ ५६ ॥
मर्दिते हि रसे भूयो जयन्तीसिन्धुवारयोः।
भावनाऽपि च कर्त्तव्या गुञ्जापरिमिता वटी ॥ ५७ ॥
तप्तोदकानुपानेन चतस्रस्तिस्र एव वा।
वह्निमान्द्ये प्रदातव्या वट्यः पञ्चामृताः शुभाः ॥ ५८ ॥

क्रव्यादो रसः—

पलं रसस्य द्विपलं बलेः स्याच्छुल्बायसी चार्द्धपलप्रमाणे।
सञ्चूर्ण्य सर्वं द्रुतमग्नियोगादेरण्डपत्रेऽथ निवेशनीयम् ॥ ५९ ॥
कृत्वाऽथ तां पर्पटिकां विदध्याल्लौहस्य पात्रे त्ववपूतमस्मिन्।
जम्बीरजं पक्वरसं पलानां शतं नियोज्याग्निमथाल्पमल्पम् ॥६०॥

---

भक्तविपाकवटिकायां—यारिवाहं मुस्तकं रामठं हिङ्गु ॥५०-५५॥

क्रव्यादरसे—बलेर्गन्धकस्य। शुल्वायसी चार्द्धपलप्रमाणे इति ताम्रलौहयोः प्रत्येकमर्द्धपलत्वम्। रसादिलौहान्तानां चतुर्द्रव्याणां यथोक्तभागान् गृहीत्वा लौहपात्रे जम्बीररसं निम्पाकरसं वा शतपलं दत्वा तल्लौहपात्रतले

---

१ इतःपरं "भक्षयेच्छाणमात्रेण लवङ्गेन नियोजितं"ति पद्यार्द्धं सुखबोधसंग्रहेऽधिकं दृश्यते। २ आशुविपाच्य-मुहु २ भो० वाञ्छति।

जीर्णे रसे भावितमेतदेतैः सुपञ्चकोलोद्भववारिपूरैः।
सवेतसाम्लैः शतमत्र योज्यं समं रजष्टङ्कगजं सुभृष्टम् ॥ ६१ ॥
विडं तदर्धं मरिचं समञ्च तत् सप्तवारं चणकाम्लकेन।
क्रव्यादनामा भवति प्रसिद्धो रसस्तु मन्थानकभैरवोक्तः ॥ ६२ ॥
माषद्वयं सैन्धवतक्रपीतो ह्यसौ सुधन्यः खलु भोजनान्ते।
गुरूणि मांसानि पयांसि पिष्ट-घृतानि सेव्यानि फलानि चापि ॥६३॥
मात्रातिरिक्तान्यपि सेवितानि यामद्वयाज्जारयति प्रसिद्धः।
निहन्त्यजीर्णान्यपि षट् प्रवृद्धमग्निं करोति क्रमसेवनेन ॥ ६४ ॥

कार्श्यस्थौल्यनिबर्हणो गरहरः सामार्त्तिनिर्णाशनः
गुल्मप्लीहनिषूदनो ग्रहणिकाविध्वंसनः स्रंसनः।
वातश्लेष्मनिबर्हणः श्रमहरः शूलार्त्तिशूलापहः
वातग्रन्थिमहोदरापहरणः क्रव्यादनामा रसः ॥ ६५ ॥

ज्वालानलोरसः—

क्षारद्वयं सूतगन्धौ पञ्चकोलमिदं समम्।
सर्वतुल्या जया देया तदर्द्धं शिग्रुवल्कलम् ॥ ६६ ॥
एतत् सर्वं जयाशिग्रुवह्निमार्कवजै रसैः।
भावयेत् त्रिदिनं घर्मे ततो लघुपुटे पचेत् ॥ ६७ ॥
भावयेत् सप्तधा चार्द्र-द्रवैर्ज्वालानलो भवेत्।
पाचनो दीपनो ह्यश्वोदरामयनाशनः ॥ ६८ ॥
निष्कोऽस्य मधुना लीढोऽनुपानं गुडनागरैः।
ज्वराजीर्णमतीसारं ग्रहणीं वह्निमार्दवम्।
श्लेष्महृल्लासवमनमालस्यमरुचिं जयेत् ॥ ६९ ॥

---

अल्पमात्रमग्निं प्रज्वाल्य शनैः शनैः पचेत्। जीर्णे जम्बीररसे सति भावयेत् पञ्चकोलक्काथैः अम्लवेतसक्वाथैर्वा। ततः रसादीनां चतुर्णां समभागं टङ्कणं, विडं विडलवणं तच्च टङ्कणार्द्धभागं मरिचं समञ्च तादिति मरिचचूर्णं टङ्कणतुल्यमित्येके, अन्ये तु सर्व्वचूर्णसममिति। एतत् सर्व्वमेकीकृत्य चणकाम्लैर्भावयेत् ॥ ५९–६५ ॥

**ज्वालानलरसे**—जया विजया, मार्कवी भृङ्गराजः। भावयेत् त्रिदिनमिति प्रत्येकैस्त्रिदिनं भावयेत् ॥ ६६–६९ ॥

अमृतावटी—

अमृतवराटकमरिचैर्द्विपञ्चनवभागयोजितैः क्रमशः ।
वटिका मुद्गसमाना कफत्रिदोषानलमान्द्यहारिणी ॥ ७० ॥

भक्तपाकवटी—

अभ्रं पारदगन्धकौ सदरदौ ताम्रञ्च तालं शिला
वङ्गञ्च त्रिफला विषञ्च कुनटी भागास्त्रयो दन्तिनः ।
भृङ्गीव्योषयमानिचित्रजलदं द्वे जीरके टङ्कणम्
एलापत्रलवङ्गहिंगुकटुकीजातीफलं सैन्धवम् ॥ ७१ ॥
एतान्यार्द्रकचित्रदन्तिसुरसावासरसैर्बिल्वजैः
पत्रोत्थैरपि सप्तधा सुविमले खल्ले विभाव्यान्यतः ।
खादेद्वल्लमितं तथा च सकलव्याधौ प्रयोज्या बुधैः
विड्बन्धे कफजे त्रिदोषजनिते ह्यामानुबन्धेऽपि च ।।७२।।
मन्देऽग्नौ विषमज्वरे च सकले शूले त्रिदोषोद्भवे
हन्यात् तानपि भक्तपाकवटिका भूयश्च सामं जयेत् ।।७३।।

लवङ्गादिवटी—

लवङ्गशुण्ठीमरिचानि भृष्टसौभाग्यचूर्णानि समानि कृत्वा ।
माव्यान्यपामार्गहुताशवारा प्रभूतमांसादिकजारणाय ॥ ७४ ॥

बृहल्लवङ्गादिवटी—

लवङ्गजातीफलधान्यकुष्ठं जीरद्वयं त्र्यूषणत्रैफलञ्च ।
एलात्वचं टङ्कवराटमुस्तं वचाऽजमोदाविडसैन्धवञ्च ॥ ७५ ॥

---

**बृहद्भक्तपाकवटिकायां**—दरदं हिङ्गुलं, तालं हरितालं, शिला मनःशिला, कुनटी नैपाली मनःशिला, अभ्रादिकुनट्यन्तनां प्रत्येकं भागैकं, दन्तिनस्त्रयो भागाः, तथा शृङ्ग्यादि-सैन्धवान्तानां प्रत्येकं भागैकम् । एतत् सर्व्वमेकीकृत्य आर्द्रकादिस्वरसैः सप्तवारं भावयेत् ॥ ७१–७३ ॥

**लवङ्गादिवटिकायाम्**—भृष्टसौभाग्यचूर्णानि भृष्टटङ्कणचूर्णानि । हुताशश्चित्रकः ॥ ७४ ॥

**बृहल्लवङ्गादिवटिकायाम्**—तदर्द्धमिति एकभागापेक्षया अर्द्धभा-

---

१ पादत्रयमार्यायाः, चतुर्थः पादोवंशस्थस्य । संग्रहोऽयं न पद्यबन्धः, एवं सर्वत्र ।

तदर्द्धकं पारदगन्धमभ्रं लौहञ्च तुल्यं सुविचूर्ण्य सर्वम् ।
तन्नागवल्लीदलतोयपिष्टं वल्लप्रमाणां वटिकाञ्च कृत्वा ॥ ७६ ॥
प्रातर्विदध्यादपि चोष्णतोयैरियं निहन्याद् ग्रहणीविकारम् ।
आमानुबन्धं सरुजं प्रवाहं ज्वरं तथा श्लेष्मभवं सशूलम् ॥ ७७ ॥
कुष्ठाम्लपित्तं प्रबलं समीरं मन्दानलं कोष्ठगतञ्च वातम् ।
वटी लवङ्गादि-वसु[1]प्रणीता तथाऽऽमवातं विनिहन्ति शीघ्रम् ॥ ७८ ॥

जातीफलादिवटी—

जातीफलं लवङ्गञ्च पिप्पली सिन्धुकामृतम् ।
शुण्ठी धुस्तूरबीजञ्च दरदं टङ्कणं तथा ॥ ७९ ॥
समं सर्वं समाहृत्य जम्भनीरेण मर्दयेत् ।
वल्लमाना वटी कार्य्या चाग्निमान्द्यप्रशान्तये ॥ ८० ॥

शङ्खवटी—

सार्द्धकर्षं रसेन्द्रस्य गन्धकस्य तथैव च ।
विषं कर्षत्रयं दद्यात् सर्वतुल्यं मरीचकम् ॥ ८१ ॥
दग्धशङ्खञ्च तत्तुल्यं पञ्च कर्षाणि नागरात् ।
स्वर्जिकारामठकणा-सिन्धुसौवर्चलं विडम् ॥ ८२ ॥
सामुद्रमौद्भिदञ्चैव भावयेत् निम्बुकद्रवैः ।
वटी ग्रहण्यम्लपित्त-शूलघ्नी वह्निदीपनी ।
वह्निमान्द्यकृतान् रोगान् सामदोषं विनाशयेत् ॥ ८३ ॥

चिन्तामणि रसः—

रसं गन्धं मृतं ताम्रं मृतमभ्रं फलत्रयम् ।
त्र्यूषणं दन्तिबीजञ्च सर्वं खल्ले विमर्दयेत् ॥ ८४ ॥
द्रोणपुष्पीरसैश्चापि भावयेच्च पुनः पुनः ।

---

गतत्रम् ॥ ७५-७८ ॥

**जातिफलादिवटिकायाम्**—सिन्धुकः सिन्धुवारः, भट्टस्तु सैन्धव-मित्याह ॥ ७९-८० ॥

**शङ्खवटिकायाम्**—तत्तुल्यामिति मरिचतुल्यं, सिन्धु सैन्धवं, औद्भिदं पांशुलवणम् । नागरादिति प्रत्येकं पञ्चकर्षाणीत्यर्थः ॥ ८१-८३ ॥

---

१ वसुशब्दोऽत्रद्रव्यवाची ।

अस्य मात्रा प्रदातव्या गुञ्जैका वा द्विगुञ्जिका ॥ ८५ ॥
चिन्तामणिरसो ह्येष चाजीर्णे शस्यते सदा ।
आमवातं ज्वरं हन्ति सर्वशूलनिषूदनः ॥ ८६ ॥

प्रदीपनो रसः—

रसनिष्कं गन्धनिष्कं निष्कमात्रं प्रदीपनम् ।
मानमर्द्धं प्रदद्यात्तु चुल्लिकालवणं भिषक् ॥ ८७ ॥
मर्दयित्वा प्रदातव्यमथास्य माषमात्रकम् ।
अजीर्णे चाग्निमान्द्ये च दातव्यो 'रसवल्लभः' ॥ ८८ ॥

विजयरसः—

रसस्यैकं पलं दत्त्वा नागञ्च[1] गन्धकं पलम् ।
क्षारत्रयं पलं देयं लवङ्गं पलपञ्चकम् ॥ ८९ ॥
दशमूलीजयाचूर्णं तद्द्रवेण तु भावयेत् ।
चित्रकस्य रसेनाथ भृङ्गराजरसेन तु ॥ ९० ॥
शिग्रुमूलद्रवैश्चापि ततो भाण्डे निरुध्य च ।
याममात्रं पचेदग्नौ मर्दयेदार्द्रकद्रवैः ।
ताम्बूलीपत्रसंयुक्तं खादेत् निष्कमितं सदा ॥ ९१ ॥

भक्तविपाकवटी—

माक्षिकं रसगन्धौ च हरितालं मनःशिलाम् ।
गगनं कान्तलौहञ्च सर्वमेतच्च कार्षिकम् ॥ ९२ ॥
त्रिवृद्दन्तीवारिवाहं[2] चित्रकञ्च महौषधम् ।
पिप्पलीं मरिचं पथ्यां यमानीं कृष्णजीरकम् ॥ ९३ ॥
रामठं कटुकां पाठां सैन्धवं साजमोदकम् ।
जातीफलं यवक्षारं समभागं विचूर्णयेत् ॥ ९४ ॥

---

प्रदीपनरसे—प्रदीपनं विषं मानमर्द्धमित्यत्र पलमर्द्धमिति केचित् पठन्ति ॥ ८७-८८ ॥

विजयरसे—रसादिविजयाचूर्णान्तं सर्व्वमेकीकृत्य यथोक्तरसैः सप्तसप्तवारं विभावयेत् । ततः पुटपाकविधिना यामैकं पचेत् ॥ ८९-९१ ॥

---

१ विजयरसे नागशब्देन विषं ग्राह्यं, योगरत्नाकरे विषस्योक्तत्वात् ।
२ दन्तिन्—दन्ती-इति-इन्नन्तङ्यन्तयोरुभयोरपि प्रयोगोऽत्र दृश्यते ।

आर्द्रकस्य रसेनैव निर्गुण्ड्याः स्वरसेन च ।
सूर्य्यावर्त्तरसेनैव ज्योतिष्मत्या रसेन च ॥ ९५ ॥
आतपे भावयेत् वैद्यः कृत्वा गुञ्जामितां वटीम् ।
भक्षयेत् तां वटीं प्राज्ञो लवङ्गेन नियोजिताम् ॥ ९६ ॥
भुक्तोत्तरीये बहुभोजनान्ते आमानुबन्धे चिरवह्निमान्द्ये ।
विड्विग्रहे वातकफानुबन्धे शोथोदरानाहगदेऽप्यजीर्णे ॥ ९७ ॥
शूले त्रिदोषप्रभवे ज्वरे च शस्ता वटी भक्तविपाकसंज्ञा ।
सुखं विरेच्याशु नरस्य कोष्ठं मुहुर्मुहुर्वाञ्छयतीप्सितान्नम् ॥९८॥

## रसराक्षसः—

ताम्रं पारदगन्धकं त्रिकटुकं तीक्ष्णञ्च सौवर्चलं
खल्ले मर्द्य दिनं निधाय सिकताकुम्भेषु यामं ततः ।
स्विन्नं तेष्वपि रक्तशाकिनिभवं क्षारं समं भावयेत्
एकीकृत्य च मातुलुङ्गकजलैर्नाम्ना रसो राक्षसः ॥ ९९ ॥

## त्रिफलालौहम्—

त्रिफलामुस्तवेल्लैश्च सितया कणया समम् ।
खरमञ्जरिबीजैश्च लौहं भस्मकनाशनम् ॥ १०० ॥

## अपामार्गाद्यञ्जनम्—

अपामार्गस्य पत्रञ्च मरिचञ्च समं समम् ।
अम्ललोलीयुतं पिष्टमञ्जनात् सूचिकां जयेत् ॥ १०१ ॥

## अग्निकुमारः—

टङ्कणं रसगन्धौ च समं भागत्रयं विषात् ।
कपर्दशङ्खयोस्त्र्यंशं वसुभागं मरीचकम् ॥ १०२ ॥

---

**रसराक्षसमाह ताम्रमित्यादि**--ताम्रादि सर्व्वं खल्ले दिनं संमर्द्य वालुकायन्त्रे पचेत् । ततस्तुल्यं रक्तपुनर्नवाक्षारं विमिश्रय मातुलुङ्गरसैः सप्ताहं भावयेत् ॥ ९९ ॥

**त्रिफलालौहमाह**—त्रिफलेत्यादि । खरमञ्जरीवीजमपामार्गवीजम् । त्रिफलादिसर्व्वद्रव्यतुल्यं मृतलौहं देयम् ॥ १०० ॥

**अग्निकुमारे**--समभागमिति प्रत्येकं भागकम् । वसुभागमिति भागा-

दिनं जम्भाम्भसा पिष्टं वल्लमात्रं प्रदापयेत् ।
विसूचीशूलविष्टम्भ-वह्निमान्द्ये ज्वरे तथा ।
अजीर्णे सङ्ग्रहण्याञ्च सिद्धश्चाग्निकुमारकः ॥ १०३ ॥

अपरा शङ्खवटी—

द्वौ क्षारौ रसगन्धकौ सलवणौ क्षारेण तुल्यं विषं
चिञ्चाशङ्खचतुर्गुणं रसवरैर्लिम्पाकजातैः कृतम् ।
वारंवारमिदं सुपाकरचितं लौहं क्षिपेत् हिङ्गुकं
भूयष्टङ्कसमं सुमर्दितमिदं गुञ्जाप्रमाणं भजेत् ॥ १०४ ॥
ख्याता शङ्खवटी महाग्निजननी शूलान्तकृत् पाचनी
कासश्वासविनाशिनी क्षयहरी मन्दाग्निसन्दीपनी ।
वातव्याधिमहोदरादिशमनी तृष्णामयोच्छेदिनी
सर्वव्याधिनिषूदनी क्रिमिहरी दुष्टामयध्वंसिनी ॥ १०५ ॥

इति अजीर्णचिकित्सा ।

---

## अथ क्रिमिचिकित्सा ।

### क्रिमिकालानलो रसः—

विडङ्गं द्विपलञ्चैव विषचूर्णं तदर्द्धकम् ।
लौहचूर्णं तदर्द्धञ्च तदर्द्धं शुद्धपारदम् ॥ १ ॥
रसतुल्यं शुद्धगन्धं छागीदुग्धेन पेषयेत् ।
छायाशुष्कां वटीं कृत्वा खादेत् षोडशरक्तिकाम् ॥ २ ॥
धान्यजीरानुपानेन क्रिमिकालानलो रसः ।
उदरस्थं क्रिमिं हन्याद् ग्रहण्यर्शःसमान्वितम् ॥ ३ ॥

---

द्धकम् ॥ १०२–१०३ ॥

शङ्खवटिकायाम्—द्वौ क्षाराविति यवक्षारं स्वर्जिक्षारञ्च । सलवणौ समभागौ । चिञ्चा चिञ्चा फलत्वग्भस्म । वारंवारमिति लिम्पाकजै रसैः सप्तवारं भावयेदित्यर्थः ॥ १०२–१०३ ॥

इत्यजीर्णादिचिकित्सा ।

अजीर्णात् क्रिमिसम्भव इत्यजीर्णानन्तरं क्रिमिचिकित्सामाह—क्रिमि-

अग्निदः शोथशमनो गुल्मप्लीहोदरान् जयेत् ।
गहनानन्दनाथेन भाषितो विश्वसम्पदे ॥ ४ ॥

क्रिमिविनाशो रसः—

शुद्धसूतं समं गन्धमभ्रं लौहं मनःशिला ।
धातकी त्रिफला लोध्रो विडङ्गं रजनीद्वयम् ॥ ५ ॥
भावयेत् सप्तधा सर्वं शृङ्गवेरभवै रसैः ।
चणमात्रां वटीं कृत्वा त्रिफलारससंयुताम् ॥ ६ ॥
भक्षयेत् प्रातरुत्थाय क्रिमिरोगोपशान्तये ।
वातिकं पैत्तिकं हन्ति श्लैष्मिकञ्च त्रिदोषजम् ।
नाम्ना क्रिमिविनाशोऽयं क्रिमिरोगकुलान्तकः ॥ ७ ॥

क्रिमिनाशनो रसः—

सूतं गन्धं मृतं लौहं मरिचं विषमेव च ।
धातकी त्रिफला शुण्ठी मुस्तकं सरसाञ्जनम् ॥ ८ ॥
पाठा त्रिकटु मुस्ता च बालकं बिल्वमेव च ।
भावयेत् सर्वमेकत्र स्वरसैर्भृङ्गजैस्ततः ॥ ९ ॥
वराटिका प्रमाणेन भक्षणीयो विशेषतः ।
क्रिमिरोगविनाशाय रसोऽयं क्रिमिनाशनः ॥ १० ॥

कीटमर्दो रसः—

शुद्धसूतं शुद्धगन्धो ह्यजमोदा विडङ्गकम् ।
विषमुष्टिः ब्रह्मबीजं क्रमात् द्विगुणितं भवेत् ॥ ११ ॥
चूर्णयेन्मधुना मिश्रं निष्कैकं क्रिमिजिद्भवेत् ।
कीटमर्दो रसो नाम मुस्ताक्वाथं पिबेदनु ॥ १२ ॥

क्रिमिघ्नो रसः—

क्रिमिघ्नकिंशुकारिष्टबीजं सुरसभस्मकम् ।

---

कालानलरसे लौहचूर्णं तदर्द्धमिति विषार्द्धं लौहचूर्णमेवमन्यत्र ॥ १-४ ॥

क्रिमिविनाशरसे-रजनीद्वयं हरिद्राद्वयं, शृङ्गवेररसैरार्द्रकरसैः ॥५-७॥

कीटमर्दरसे—ब्रह्मबीजमिति भार्गीबीजम् ॥ ११-१२ ॥

क्रिमिघ्नरसे—क्रिमिघ्नं विडङ्गं, किंशुकः पलाशस्तस्य बीजं ग्राह्यं, अरि-

वल्लद्वयं चाखुपर्णी-रसैः क्रिमिविनाशनम् ॥ १३ ॥

क्रिमिमुद्गरो रसः—

क्रमेण वृद्धं रसगन्धकाज-मोदा विडङ्गं विषमुष्टिका च।
पलाशबीजञ्च विचूर्ण्यमस्य निष्कप्रमाणं मधुनाऽवलीढम् ॥१४॥
पिबेत् कषायं घनजं तदूर्द्ध्वं रसोऽयमुक्तः क्रिमिमुद्गराख्यः।
क्रिमिं निहन्यात्क्रिमिजांश्च रोगान् सन्दीपयत्यग्निमयं त्रिरात्रात् ॥१५॥

क्रिमिधूलिजलप्लवो रसः—

पारदं गन्धकं शुद्धं वङ्गं शङ्खं समं समम्।
चतुर्णां योजयेत् तुल्यं पथ्याचूर्णं भिषग्वरः ॥ १६ ॥
दण्डयन्त्रेण निर्मथ्य पटोलस्वरसं क्षिपेत्।
कार्पासबीजसदृशीं कुर्य्याद्वै यत्नतो वटीम्।
त्रिवटीं भक्षयेत् प्रातः शीततोयं पिबेदनु ॥ १७ ॥
केवलं पैत्तिके योज्यः कदाचित् वातपैत्तिके।
श्रीमद्गहननाथोक्तः क्रिमिधूलिजलप्लवः ॥ १८ ॥

क्रिमिकाष्ठानलो रसः—

विशुद्धं पारदं गन्धं वङ्गं तालं वराटकम्।
मनःशिला कृष्णकाचं सोमराजी विडङ्गकम् ॥ १९ ॥
दन्तीबीजञ्च जैपालं शिला टङ्कणचित्रकम्।
कर्षमात्रन्तु प्रत्येकं वज्रीक्षीरेण मर्दयेत् ॥ २० ॥
कलायसदृशीं कृत्वा वटिकां भक्षयेत् ततः।
क्रिमिकाष्ठानलो नाम रसोऽयं परिनिर्मितः।
श्लैष्मिके श्लेष्मपित्ते च श्लेष्मवाते च शस्यते ॥ २१ ॥

लाक्षादिवटी—

लाक्षाभल्लातश्रीवास-श्वेतापराजिताशिफाः।

---

छबीजं निम्बबीजम् ॥ १३ ॥

क्रिमिधूलिजलप्लवरसे—पथ्याचूर्णं हरीतकीचूर्णम् ॥ १६–१८ ॥

लाक्षादिवटिकायाम्—श्रीवासः नवनीतखोटी, श्वेताऽपराजितशिफा श्वेताऽपराजिता-मूलं, अर्ज्जुनस्य रूपमिति अर्ज्जुनस्य फलं पुष्पञ्चे-

---

१ स्पष्टमेवमूल।

अर्जुनस्य फलं पुष्पं विडङ्गं सर्जगुग्गुलू ॥ २२ ॥
एभिः कीटाश्च शाम्यन्ते धूपितैश्च गृहे सदा।
भुजङ्गा मूषिका दंशा घुणा लूताश्च मत्कुणाः।
दूरादेव पलायन्ते क्लिन्नकीटाश्च ये स्मृताः ॥ २३ ॥

क्रिमिहरो रसः—

शुद्धसूतमिन्द्रयवमजमोदां मनःशिलाम्।
पलाशबीजं गन्धञ्च देवदाल्या द्रवैर्दिनम् ॥ २४ ॥
सम्मर्द्य भक्षयेन्नित्यं शालपर्णीरसैः सह।
सितायुक्तं पिबेच्चानु क्रिमिपातो भवत्यलम् ॥ २५ ॥

विडङ्गलौहम्—

रसं गन्धञ्च मरिचं जातीफललवङ्गकम्।
शुण्ठी टङ्कं कणा तालं प्रत्येकं भागसम्मितम् ॥ २६ ॥
सर्वचूर्णसमं लौहं विडङ्गं सर्वतुल्यकम्।
लौहं विडङ्गकं नाम कोष्ठस्थक्रिमिनाशनम् ॥ २७ ॥
दुर्नाम ह्यरुचिञ्चैव मन्दाग्निञ्च विषचिकाम्।
शोथं शूलं ज्वरं हिक्कां श्वासं कासं विनाशयेत् ॥ २८ ॥

[ इति क्रिमि-चिकित्सा ]

## अथ पाण्डु-कामला-चिकित्सा ।

निशालौहम्—

लौहचूर्णं निशायुग्मं त्रिफला-रोहिणीयुतम्।
प्रलिह्यात् मधुसर्पिर्भ्यां कामलापाण्डुशान्तये ॥ १ ॥

---

त्यर्थः ॥ २२-२३ ॥

क्रिमिहररसे—देवदाली हस्तिघोषकफलम् ॥ २४-२५ ॥

विडङ्गलौहे—लौहञ्च तत्समामिति रसादितालकान्तानां तुल्यं लोहं तथा मिलितसर्व्वचूर्णसमं विडङ्गचूर्णम् ॥ २६-२८ ॥

इति क्रिमि-चिकित्सा ।

पुरीषक्रिमितः पाण्डुरोगस्य प्रादुर्भावात् क्रिम्यनन्तरं पाण्डुरोगचिकित्सामाह। निशायुगं हरिद्राद्वयं अत्र सर्व्वद्रव्यसमं लौहं प्रदेयं लौहप्रा-

धात्रीलौहम्—

धात्रीलौहरजोव्योष-निशाक्षौद्राज्यशर्कराः ।
भक्षणाच्च विनिघ्नन्ति कामलाञ्च हलीमकम् ॥ २ ॥

पञ्चाननवटी—

शुद्धसूतं तथा गन्धं मृतताम्राभ्रगुग्गुलून् ।
जैपालबीजं तुल्यांशं घृतेन वटकीकृतम् ॥ ३ ॥
भक्षयेद्बदरास्थ्याभं शोथपाण्डुप्रशान्तये ।
पञ्चाननवटी ख्याता पाण्डुरोगकुलान्तिका ॥ ४ ॥

प्राणवल्लभो रसः—

हिङ्गुलसम्भवं सूतं गन्धकं काश्मीरोद्भवम्[१] ।
लौहं ताम्रं वराटञ्च तुत्थं हिंगु फलत्रिकम् ॥ ५ ॥
स्नुहीक्षीरं यवक्षारो जैपालः दन्तिकं त्रिवृत् ।
प्रत्येकं शाणभागन्तु छागीक्षीरेण पेषयेत् ॥ ६ ॥
चतुर्गुञ्जां वटीं खादेत् वारिणा मधुना सह ।
प्राणवल्लभनामायं गहनानन्दभाषितः ॥ ७ ॥
श्लेष्मदोषं समालोक्य युक्त्या च त्रुटिवर्द्धनम् ।
निहन्ति कामलां पाण्डुमानाहं श्लीपदं तथा ॥ ८ ॥
गलगण्डं गण्डमालां व्रणानि च हलीमकम् ।
शोथं शूलमुरुस्तम्भं सङ्ग्रहग्रहणीं जयेत् ॥ ९ ॥
वान्तिं मूर्च्छां भ्रमिं दाहं कासं श्वासं गलग्रहम् ।
असाध्यं सन्निपातञ्च जीर्णज्वरमरोचकम् ॥ १० ॥
वातरक्तं तथा शोषं कण्डूं विस्फोटकापचीम् ।

---

धान्यात् पाण्डुरोगहरत्वाच्च ; लौहाभावे मण्डूरं प्रदेयमित्युपदिशन्ति वृद्धाः ॥ १-२ ॥

पञ्चाननवटिकामाह—शुद्धसूतमित्यादि—अत्र सर्व्वसमं जैपाल-चूर्णम् ॥ ३-४ ॥

प्राणवल्लभरसे—काश्मीरोद्भवं कुङ्कुमं, ताम्रमित्यत्र टङ्कणमिति केचित्

---

१ गन्धं काश्मीरकोद्भवम्-इति पाठे न च्छन्दोभङ्गः ।

नातः परतरं किञ्चित् कामलार्त्तिरुजापहम् ॥ ११ ॥

कामेश्वरो रसः—

पलं सूतं पलं गन्धं पथ्याचित्रकयोः पलम् ।
मुस्तैलापत्रकाणाञ्च प्रति सार्द्धपलं क्षिपेत् ॥ १२ ॥
त्र्यूषणं पिप्पलीमूलं विषञ्चापि पलं न्यसेत् ।
नागकेशरकं कर्षमेरण्डस्य पलं तथा ॥ १३ ॥
पुरातनगुडेनैव तुल्येनैव विमिश्रयेत् ।
मर्दयेत् कनकद्रावैर्भावयेच्च घृतान्विताम् ॥ १४ ॥
वटिकां बदरास्थ्याभां कारयेत् भक्षयेत् निशि ।
पाण्डुरोगहरः सोऽयं रसः कामेश्वरः स्वयम् ॥ १५ ॥

त्रिकत्रयाद्यलौहम्—

पलं लौहस्य किट्टस्य पलं गव्यस्य सर्पिषः ।
सितायाश्च पलञ्चैकं क्षौद्रस्यापि पलं तथा ॥ १६ ॥
तोलकं कान्तलौहस्य त्रिकत्रयसुभावितम् ।
ततः पात्रे विधातव्यं लौहे च मृन्मये तथा ॥ १७ ॥
हविषा भवितञ्चापि रौद्रे च शिशिरे तथा ।
भोजनादौ तथा मध्ये चान्ते चापि प्रदापयेत् ॥ १८ ॥
अनुपानं प्रदातव्यं बुद्ध्वा दोषबलाबलम् ।
कामलां पाण्डुरोगञ्च सुदारुणहलीमकम् ।
निहन्ति नात्र सन्देहो भास्करास्तिमिरं यथा ॥ १९ ॥

विडङ्गादिलौहम्—

विडङ्गमुस्तात्रिफला-देवदारुषडूषणैः ।

---

पठन्ति ॥ ५–११ ॥

**कामेश्वररसे**—वह्निश्चित्रकः, पत्रं तेजपत्रं, तुल्येनेति सर्व्वचूर्णतुल्येन, कनकद्रावैर्धुस्तूररसैः ॥ १२–१५ ॥

**त्रिकत्रयादिलौहे**—किट्टस्य मण्डूरस्य । अत्र सिताक्षौद्रे प्रक्षेपणीये ॥ १६–१९ ॥

**विडङ्गादिलौहे**-तुल्यमात्रमयश्चूर्णमिति विडङ्गादीनां चूर्णसमं लौहचू-

---

१ त्रिकस्य त्रयम्=त्रिफला–त्रिकटु–त्रिजात–रूपम् ।

तुल्यमात्रमयश्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ॥ २० ॥
तैरक्षमात्रां गुडिकां कृत्वा खादेत् दिने दिने।
कामलापाण्डुरोगार्त्तः सुखमाप्नुयतेऽचिरात् ॥ २१ ॥

अपरविडङ्गादिलौहम्—

विडङ्गत्रिफलाव्योषं शुद्धलौहन्तु तत्समम्।
पुरातनगुडेनाथ लेहयेत् दिनसप्तकम्।
श्वयथुं नाशयेत् शीघ्रं पाण्डुरोगं हलीमकम् ॥ २२ ॥

त्रैलोक्यसुन्दरी रसः—

मानञ्चैकं ततः सूतं षडभ्रं वसुलौहकम्।
गन्धकं त्रिफलाव्योष-चूर्ण मोचरसस्य च ॥ २३ ॥
मुषली चामृतासत्त्वं प्रत्येकं पञ्चभागिकम्।
भावयेत् सर्वमेकत्र त्रिफलानां कषायके ॥ २४ ॥
भावना विंशतिर्देया दशरात्रं सुभावना।
शिग्रुचित्रकमूलाभ्यामष्टधा च पृथक् पृथक् ॥ २५ ॥
त्रैलोक्यसुन्दरो नाम रसो निष्कमितो हितः।
सितया च समं क्षौद्रैः शोथपाण्डुक्षयापहः।
ज्वरातिसारसंयुक्त-सर्वोपद्रवनाशनः ॥ २६ ॥

दार्व्यादिलौहम्—

दार्वी सत्रिफलाव्योष-विडङ्गान्ययसो रजः।
मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान् ॥ २७ ॥

---

णमित्यर्थः। अत्र लौहस्य प्राधान्यात् तदपेक्षयैव गोमूत्रस्याष्टगुणत्वम्। पक्त्वा-
वतारिते विडङ्गादिचूर्णानि प्रक्षेप्याणि। अन्ये तु विडङ्गादिचूर्णैः सह लौह-
चूर्णस्य पाकः। गोमूत्रस्याष्टगुणत्वं सर्व्वचूर्णापेक्षयैव, अत्र द्रवद्वैगुण्यं न
व्यवहरन्ति वृद्धाः। पाकश्चात्र मुद्रापाकेनेत्याहुः। अक्षमात्रां गुडिकां
कुर्य्यात् नतु तत्प्रमाणं खादेत्। मात्रा च देहाग्निबलापेक्षिणी एवं सर्व्वत्र
मण्डूरपाकादौ ॥ २०-२१ ॥

**त्रैलोक्यसुन्दररसे**—अमृतासत्वं गुडूचीसत्वम् ॥ २३-२६ ॥

**दार्व्यादिलौहे**—दार्व्वी दार्व्वीयास्त्वक्, लौहचर्ण सर्व्वसमम् ॥२७॥

पथ्यानि—

शालिषष्टिकगोधूम-यवमुद्गादयो हिताः ।
रसाश्च जाङ्गलभवा मधुराः पाण्डुरोगिणाम् ॥ २८ ॥

चन्द्रसूर्य्यात्मको रसः—

सूतकं गन्धको लौहमभ्रकञ्च पलं पलम् ।
शङ्खं वराटकञ्चैव प्रत्येकार्धपलं हरेत् ॥ २९ ॥
गोक्षुरबीजचूर्णञ्च पलैकं तत्र दीयते ।
सर्वमेकीकृतं चूर्णं बाष्पयन्त्रे विभावयेत् ॥ ३० ॥
पटोलः पर्पटी भार्गी विदारी शतपुष्पिका ।
दन्ती वासा कुण्डली च काकमाचीन्द्रवारुणी ॥ ३१ ॥
वर्षाभूः केशराजश्च शालिञ्चो द्रोणपुष्पिका ।
प्रत्येकार्द्धपलैर्द्रावैर्भावयित्वा वटीं चरेत् ॥ ३२ ॥
चतुर्दशवटीं खादेत् छागीदुग्धानुपानतः ।
गहनानन्दनाथोक्तश्चन्द्रसूर्य्यात्मको रसः ॥ ३३ ॥
हलीमकं निहन्त्याशु पाण्डुरोगं सकामलम् ।
जीर्णज्वरं सविषममम्लपित्तमरोचकम् ॥ ३४ ॥
शूलं प्लीहोदरानाहमष्ठीलागुल्मविद्रधीन् ।
शोथं मन्दानलं हिक्कां कासं श्वासं वमिं भ्रमिम् ॥ ३५ ॥
भगन्दरोपदंशौ च दद्रुकण्डूव्रणापचीः ।
ऊरुस्तम्भमामवातं दाहं तृष्णां कटीग्रहम् ॥ ३६ ॥
युक्ता मण्डेन मद्येन मुद्गयूषेण वारिणा ।
गुडूचीत्रिफलावासा क्वाथनीरेण वा क्वचित् ॥ ३७ ॥

पाण्डुसूदनरसः—

रसं गन्धं मृतं ताम्रं जयपालञ्च गुग्गुलम् ।
समांशमाज्यसंयुक्तां गुडिकां कारयेद्भिषक् ॥ ३८ ॥
एकैकां भक्षयेन्नित्यं पाण्डुशोथप्रशान्तये ।

---

चन्द्रसूर्य्यात्मकरसे—कुण्डली गुडूची, वर्षाभूः पुनर्नवा ॥ २९-३७ ॥
पाण्डुसूदने—रसादिगुग्गुलवन्तानि पञ्चद्रव्याणि समभागानि घृतं

शीतलञ्च जलं चाम्लं वर्जयेत् पाण्डुसूदने ॥ ३९ ॥

मण्डूरवज्रवटकः—

पञ्चकोलं समरिचं देवदारु फलत्रिकम् ।
विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः ॥ ४० ॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः ।
पक्त्वा चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत् ॥ ४१ ॥
ततोऽक्षमात्रान् वटकान् पिबेत् तक्रेण तक्रभुक् ।
पाण्डुरोगं जयत्याशु मन्दाग्नित्वमरोचकम् ॥ ४२ ॥
अर्शांसि ग्रहणीदोषमूरुस्तम्भमथापि वा ।
क्रिमिं प्लीहानमानाहं गलरोगञ्च नाशयेत् ।
मण्डूरवज्रनामाऽयं रोगानीकप्रणाशनः ॥ ४३ ॥

लघ्वानन्दो रसः—

पारदं गन्धकं लौहं विषमभ्रकमेव च ।
समांशं मरिचञ्चाष्टौ टङ्कणञ्च चतुर्गुणम् ॥ ४४ ॥
भृङ्गराजरसैश्चाम्ल वेतसैः सप्त भावनाः ।
गुञ्जाद्वयं पर्णखण्डे खादेत् सायं निहन्ति च ॥ ४५ ॥
पाण्डुतामरुचिञ्चैव मन्दाग्निं ग्रहणीं ज्वरम् ।
वातश्लेष्मभवान् रोगान् जयेदचिरसेवनात् ॥ ४६ ॥

सम्मोहलौहः—

त्रिकटु त्रिफला वह्नि विडङ्गे लौहमभ्रकम् ।
एतानि समभागानि घृतेन वटिकां कुरु ॥ ४७ ॥
कामलां पाण्डुरोगञ्च हृद्रोगं शोथमेव च ।
भगन्दरं कोष्ठक्रिमिं मन्दानलमरोचकम् ॥ ४८ ॥
तान् सर्वान् नाशयेदाशु बलवर्णाग्निवर्द्धनः ।
सम्मोहलौहनामायं पाण्डुरोगे च पूजितः ॥ ४९ ॥

त्र्यूषणादिमण्डूरम्—

स्विन्नमष्टगुणे मूत्रे लोहकिट्टं सुशोधितम् ।

---

सर्व्वसमम् । गुडिका तु पुरुषाचिता ज्ञेया ॥ ३८–३९ ॥

**मण्डूरवज्रवटके**--अत्र लौहकिट्टस्य प्राधान्यात् तदपेक्षयैव गोमूत्र-

पाकान्ते त्र्यूषणं वह्नि वरादार्वीसुरद्रुमान् ॥ ५० ॥
विडङ्गबीजचूर्णञ्च मुस्तं किट्टसमं क्षिपेत् ।
प्रातः कर्षं भजेदस्य जीर्णे तक्रौदनं भजेत् ॥ ५१ ॥
हलीमकं पाण्डुरोगमर्शांसि श्वयथुं तथा ।
उरुस्तम्भं जयेदेतत् कामलां कुम्भकामलाम् ॥ ५२ ॥

कामला-चिकित्सा—

पाण्डुरोगोदिता योगा घ्नन्ति ते कामलामपि ॥ ५३ ॥
त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसः ।
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः ॥ ५४ ॥

[ इति पाण्डुकामलाचिकित्सा ]

---

## अथ रक्तपित्त-चिकित्सा

### अर्केश्वरो रसः—

मृतार्कं मृतवङ्गञ्च मृताभ्रञ्च समाक्षिकम् ।
अमृतास्वरसैर्भाव्यं पुटे त्रिःसप्तकं पचेत् ॥ १ ॥
वासाक्षीरविदारीभ्यां चतुर्गुञ्जाप्रमाणतः ।
भक्षणाद्विनिहन्त्याशु रक्तपित्तं सुदारुणम् ॥ २ ॥

### सुधानिधि रसः—

सूतं गन्धं माक्षिकञ्चैव लौहं सर्वं घृष्ट्वा त्रैफलेनोदकेन ।
लौहं पात्रे गोमयैः पाचयित्वा रात्रौ दद्याद्रक्तपित्तप्रशान्त्यै ॥ ३ ॥

---

स्याऽष्टगुणत्वम् । आसन्नपाके पञ्चकोलादिचूर्णं प्रक्षेप्यम् ॥ ४०–४३ ॥

पाण्डुरोगचिकित्सां कामलायामप्यतिदिशति **पाण्डुरोगेत्यादि** । ५३–५४

इति पाण्डुकामला-चिकित्सा ।

पाण्डुरोगवत् रक्तपित्तस्यापि पित्तरक्तकरणत्वाव्यभिचारात् पाण्डुरोगानन्तरं रक्तपित्तचिकित्सामाह । तत्र **अर्केश्वररसे**—अर्कस्ताम्रं, अमृता गुडूची, माक्षिकं स्वर्णमाक्षिकम् ॥ १–२ ॥

**सुधानिधिरसे**—त्रैफलोदकेन त्रिफलाक्वाथेन । भावना चात्र लौहपात्रे गोमयाग्निना कर्त्तव्या ॥ ३ ॥

आमलाद्यं लौहम्--

आमलापिप्पलीचूर्णं तुल्यया सितया सह।
रक्तपित्तहरं लौहं योगराजमिदं स्मृतम्॥ ४॥
वृष्याग्निदीपनं बल्यमम्लपित्तविनाशनम्।
पित्तोत्थानपि वातोत्थान् निहन्ति विविधान् गदान्॥५॥

शतमूल्याद्यं लौहम्—

शतमूलीसिताधान्य-नागकेशरचन्दनैः।
त्रिकत्रयतिलैर्युक्तं लौहं सर्वगदापहम्।
तृष्णादाहज्वरच्छर्दि-रक्तपित्तविनाशनम्॥ ६॥

अभ्रप्रयोगः—

रक्तपित्ते पिबेत् व्योम-सहितं पर्पटीरसम्॥ ७॥

वासादिः—

वासाद्राक्षाऽभयानाञ्च क्वाथं वा शर्कराऽन्वितम्।
योगवाहिरसान् सर्वान् रक्तपित्ते प्रयोजयेत्॥ ८॥

रक्तपित्तान्तको रसः—

मृताभ्रं मुण्डतीक्ष्णञ्च माक्षिकं रसतालकम्।
गन्धकञ्च भवेत् तुल्यं यष्टिद्राक्षाऽमृताद्रवैः॥ ९॥
दिनैकं मर्दयेत् खल्ले सिताक्षौद्रसमन्वितम्।
माषमात्रं निहन्त्याशु रक्तपित्तं सुदारुणम्।
ज्वरं दाहं क्षतक्षीणं तृष्णाशोषमरोचकम्॥ १०॥

रसामृतरसः—

रसस्य द्विगुणं गन्धं माक्षिकञ्च शिलाजतु।
गुडूचीं चन्दनं द्राक्षां मधुपुष्पञ्च धान्यकम्॥ ११॥
कुटजस्य त्वचं बीजं धातकी निम्बपत्रकम्।
यष्टीमधुसमायुक्तं मधुशर्करयाऽन्वितम्॥ १२॥
विधिना मर्दयित्वा तु कर्षमात्रन्तु भक्षयेत्।

---

**आमलाद्यलौहे**—लौहमिति सर्व्वचूर्णसमं लौहम्। **शतमूल्यादिलौहे** सिता शर्करा, लौहमिति सर्व्वचूर्णसमम्॥ ४-५॥

**रक्तपित्तान्तकरसे**—रसतालकं हरितालमेव॥ ९-१०॥

धारोष्णपयसा युक्तं प्रातरेव समुत्थितः ॥ १३ ॥
पित्तं तथाऽम्लपित्तञ्च रक्तपित्तं विशेषतः ।
निहन्ति सर्वदोषञ्च ज्वरं सर्वं न संशयः ।
रसामृतरसो नाम गहनानन्दभाषितः ॥ १४ ॥

खण्डकूष्माण्डकः—

कूष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम् ।
पचेत् तप्ते घृत प्रस्थे शनैस्ताम्रमये दृढे ॥ १५ ॥
यदा मधुनिभः पाकः न्यस्येत् खण्डशतं तदा ।
पिप्पली-शृङ्गवेराभ्यां द्वे पले जीरकस्य च ॥ १६ ॥
त्वगेलापत्रमरिच-धान्यकानां पलार्द्धकम् ।
न्यस्येत् चूर्णीकृतं तत्र दर्व्या सङ्घट्टयेत् मुहुः ॥ १७ ॥
तत् पक्वं स्थापयेत् भाण्डे दत्त्वा क्षौद्रं घृतार्द्धकम् ।
तद् यथाऽग्निबलं खादेद् रक्तपित्ती क्षतक्षयी ॥ १८ ॥

शर्कराद्यं लौहम्—

शर्करातिलसंयुक्तं त्रिकत्रययुतन्त्वयः ।
रक्तपित्तं निहन्त्याशु चाम्लपित्तहरं परम् ॥ १९ ॥

समशर्करलौहम्—

लौहाच्चतुर्गुणं क्षीरमाज्यं द्विगुणमुत्तमम् ।
चूर्णं पादन्तु वैडङ्गं दद्यात् मधुसिते समे ॥ २० ॥
ताम्रपात्रे दृढे पक्त्वा स्थापयेत् घृतभाजने ।

---

**कुष्माण्डखण्डे**—निष्कुलीकृतामिति निस्त्वगस्थिकृतं किञ्चिज्जलं दत्त्वा उत्स्विद्य क्षौमे निवेश्य पीडयेत्। ततः आतपे मनाक् संशोष्य पिष्ट्वा च पलशतं गृहीत्वा पक्तव्यम् । पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य चेति कणाशुण्ठ्योः प्रत्येकं पलद्वयं जीरकस्य च द्वे पले। अत्र खण्डामलकमानानुसारात् कुष्माण्डकद्रवात् पात्रं पाकाय दातव्यं यावान् वात्र रसो भवेदिति वक्तव्यम् । पाकश्चात्र मुद्रया। आसन्नपाके पिपल्यादिचूर्णं प्रक्षेप्यं सुशीते च मधु प्रक्षेपणीयम् ॥ १५–१८ ॥

**शर्करादिलौहे**—लौहं सर्व्वचूर्णसमम् ॥ १९ ॥

**समशर्करलौहे**—मधुसिते सम इति प्रत्येकं लौहसमम् । मुद्रया पाके

सप्ताहं मर्दयित्वा तु गोलकीकृत्य यत्नतः ॥ ६० ॥
निम्बुद्रवेण संपीड्य तिलकल्केन लेपयेत् ।
अर्द्धाङ्गुलदलेनैव परिशोष्य प्रयत्नतः ॥ ६१ ॥
प्रपचेत् वालुकायन्त्रे द्वादशप्रहरं ततः ।
जठरस्य रुजः सर्वास्तथा च मलविग्रहम् ॥ ६२ ॥
आध्मानकं तथाऽऽनाहं विषूचीं वह्निमान्द्यकम् ।
आमदोषमशेषञ्च गुल्मं छर्दिञ्च दुर्जयाम् ॥ ६३ ॥
ग्रहणीं श्वासकासौ च क्रिमिरोगं विशेषतः ।
हन्यात् सर्वाङ्गशूलञ्च मन्यास्तम्भं तथैव च ॥ ६४ ॥
ज्वरे चैवातिसारे च शूलरोगे त्रिदोषजे ।
पथ्यं रोगानुसारेण देयमस्मिन् भिषग्वरैः ।
कथितो नन्दिनाथेन 'वातविध्वंसनो' रसः ॥ ६५ ॥

पलाशादिवटी—

पलाशबीजोत्थरसेन सूतं, गन्धेन युक्तं त्रिदिनं विमर्द्य ।
श्लक्ष्णीकृतं तद्विषतिन्दुबीजं, संयोजयेदस्य कलाप्रमाणम् ।
मासद्वयं निष्कमितं प्रयत्नात्, अर्शांसि हन्त्याशु नियोजनीयम् ॥६६॥
वातरक्तं तथा शोथमस्पर्शाख्यानिलामयम् ।
वातवत् पित्तरोगेऽपि तत्र पित्तेन भावयेत् ।
'पलाशादिवटी' ख्याता वातरोगकुलान्तिका ॥ ६७ ॥

दशसारवटी—

यष्टिं धात्रीं बलां द्राक्षामेलां चन्दनवालुकम् ।
मधूकपुष्पं खर्जूरं दाडिमं पेषयेत् समम् ॥ ६८ ॥
सर्वतुल्या सिता योज्या पलार्द्धं भक्षयेत् सदा ।
'दशसारवटी' ख्याता सर्ववातविकारनुत् ॥ ६९ ॥

---

यथोत्तरमेकैकभागवर्द्धितमित्यर्थः । वातारिस्नेहसंयुतमितिचैरण्डतैलसंयुतम् ॥ ५९–६५ ॥

**पलाशादिवटिकायां**—विषतिन्दुकबीजं कुचिला इति ख्याता । इयं पलाशादिवटी यदा पित्तरोगे प्रयोक्तव्या तदा पञ्चापित्तेन भावयेत् ६६–६७

**दशसारवटिकायां**—दाडिममित्यत्र दाडिम्बगणमिच्छन्ति केचित् ॥ ६८–६९॥

गगनादिवटी—

मृतगगनरसार्कं मुण्डतीक्ष्णं सताप्यं
सबलिसममिदं स्यात् यष्टितोयप्रपिष्टम् ।
तदनुसलिलजातैर्वासकैर्गोस्तनीभिः
मृदितमनुविदारीवारिणा वस्रमेकम् ॥ ७० ॥
घृतमधुसहितेयं निष्कमात्रा वटीति
क्षपयति गुरुवातं पित्तरोगं क्षयञ्च ।
भ्रम-मद-कफशोषान् दाहतृष्णासमुत्थान् ।
मलयजमिह पेयञ्चानुपेयं सचन्द्रम् ॥ ७१ ॥

सर्वाङ्गसुन्दरो रसः—

शुद्धसूताभ्रताम्राऽयो-हिङ्गुलं कार्षिकं समम् ।
गन्धकश्चैकभागः स्यात् सर्वमेकत्र मर्दयेत् ॥ ७२ ॥
सप्तपर्णार्कस्नुक्क्षीर-वासावातारिवारिणा ।
विषमुष्टिसमं सर्वं पेष्यं तद्गोलकीकृतम् ॥ ७३ ॥
विपचेत् वालुकायन्त्रे द्वियामान्ते समुद्धरेत् ॥
पिप्पलीविषसंयुक्तो रसः 'सर्वाङ्गसुन्दरः' ।
सर्ववातविकारघ्नः सर्वशूलनिषूदनः ॥ ७४ ॥

तालकेश्वरो रसः—

एकभागो रसस्य स्यात् शुद्धतालैकभागिकः ।
अष्टौ स्युर्विजयायाश्च गुडिकां गुडतश्चरेत् ॥ ७५ ॥
एकैकां भक्षयेत् प्रातश्छायायामुपवेशयेत् ।
'तालकेश्वर'नामायमस्पर्शव्याधिनाशनः ॥ ७६ ॥

---

**गगनादिवटिकायां**—मुण्डं मुण्डलौहं, तीक्ष्णं तीक्ष्णलौहं, ताप्यं स्वर्णमाक्षिकं, मलयजं श्वेतचन्दनं, चन्द्रं कर्पूरम् ॥ ७०-७१ ॥

अथास्पर्शवातचिकित्सामाह **एकभाग इत्यादि**—रसस्येति भस्मसूतस्य । गुडिकां गुडत इति सर्वचूर्णापेक्षया गुडस्य द्वैगुण्यं, मात्रा चास्य तोलकैकपरिमिता ॥ ७५-७६ ॥

---

१ मालिनीछन्दः—ननमयययुतेयं मालिनीभोगिलोकैः ।

### त्रैलोक्यचिन्तामणि रसः—

हीरं सुवर्णं सुमृतञ्च तारं, मेषां समं तीक्ष्णरजश्चतुर्णाम् ।
समं मृताभ्रं रससिन्दुरञ्च, निष्पिष्य तीक्ष्णस्य तथाऽश्मनो वा ॥७७॥
खल्ले द्रवेणैव कुमारिकाया, गुञ्जाप्रमाणां वटिकां प्रकुर्य्यात् ।
'त्रैलोक्यचिन्तामणि'रेष नाम्ना, सम्पूज्य सम्यक् गिरिजां दिनेशम् ॥७८॥
हन्त्यामयान्, योगशतैर्विवर्ज्याऽऽमय-प्रणाशाय मुनिप्रणीतः ।
अस्य प्रसादेन गदानशेषान् जरां विनिर्जित्य सुखं बिभर्ति ॥ ७९ ॥
स्निग्धे श्लेष्मण्यार्द्रकस्य, रसेन पाययेत् सुधीः ।
शुष्के च माक्षिकेणैव, पित्ते घृतसितायुतम् ॥ ८० ॥
श्लेष्मणि मारुते सम्यग् दुष्टे च समतां गते ।
कणाचूर्णं क्षौद्रयुतं प्रमेहे दुग्धसंयुतम् ॥ ८१ ॥
बलवर्णाग्निजननः कासघ्नः कफवातजित् ।
आयुःपुष्टिकरो वृष्यः सर्वरोगनिषूदनः ॥ ८२ ॥

* इति वातव्याधि-चिकित्सा *

## अथ कफरोग-चिकित्सा ।

### श्लेष्मकालानलो रसः—

रसस्य द्विगुणो गन्धः गन्धकात् द्विगुणं विषम् ।
विषात्तु द्विगुणं देयं चूर्णं त्रिकटुसम्भवम् ॥ १ ॥
रसतुल्या प्रदातव्या चाभया सबिभीतकी ।
धात्री पुष्करमूलञ्च चाजमोदाऽजगन्धिका ॥ २ ॥

---

त्रैलोक्यचिन्तामणिरसे--हीरं हीरकं । तारं मौक्तिकं ( तारशब्देनात्र शुद्धमौक्तिकमेवोच्यते, न तु रजतं, हीरं स्वर्णं सुशुद्धञ्च मौक्तिकमिति पाठान्तरदर्शनात् ) । सममिति समभागं । चतुर्णां समं मृताभ्रमिति एषां चतुर्णां समं भस्माभ्रं योज्यं । रससिन्दूरञ्चाभ्रतुल्यं एतत् सर्व्वमेकीकृत्य लौहखल्ले पाषाणखल्ले वा कुमारिकारसे निष्पीड्य गुञ्जामात्रा वटिका कार्य्या ॥ ७७-८२ ॥

इति वातव्याधि-चिकित्सा ।

---

दोषत्रसासान्यात् वातपित्तकफ नामिति वातरोगचिकित्सामाभिधाय

विडङ्गं कट्फलं चव्यं पञ्चैव लवणानि च ।
लवङ्गं त्रिवृता दन्ती सर्वमेकत्र चूर्णयेत् ॥ ३ ॥
भावयेत् सप्तधा रौद्रे स्वरसैः सुरसोद्भवैः ।
हन्ति सर्वं कफोद्भूतं व्याधिं 'कालानलो' रसः ॥ ४ ॥

श्लेष्मशैलेन्द्रो रसः—

पारदो गन्धको लौहं त्र्यूषणं जीरकद्वयम् ।
शटी शृङ्गी यमानी च पौष्करञ्चार्द्रकं तथा ॥ ५ ॥
गैरिकं यावशूकञ्च टङ्कणं गजपिप्पली ।
जातीकोषाऽजमोदं च वरा यासलवङ्गकम् ॥ ६ ॥
कनकारुणबीजानि कट्फलं चव्यकं तथा ।
प्रत्येकं तोलकञ्चैषां श्लक्ष्णचूर्णानि कारयेत् ॥ ७ ॥
पाषाणे त्रिमले खल्ले घृष्टं पाषाणमुद्गरैः ।
बिल्वमूलरसं दत्वा चार्कचित्रफलत्रिकाः ॥ ८ ॥
निर्गुण्डी गणिका वासा चेन्द्राशनं प्रचोदनी ।
धुस्तूरः कृष्णजीरञ्च पिप्पली[१]पारिभद्रके ॥ ९ ॥
एतेषाञ्च रसैर्मध्यमाद्रकैश्च विभावयेत् ।
उष्णतोयानुपानेन सर्वव्याधिं विनाशयेत् ॥ १० ॥
विंशतिं श्लैष्मिकान् रोगान् सन्निपातभवान् गदान् ।
उदराष्टकदुर्नाममामवातञ्च दारुणम् ॥ ११ ॥
पञ्च पाण्डवामयान् दोषान् क्रिमिं स्थौल्यमथो नृणाम् ।
यथा शुष्केन्धने वह्निस्तथैवाग्निविवर्द्धनः ॥ १२ ॥

---

इदानीं कफरोगचिकित्सामाह **रसस्येति**—द्विगुणं देयं चूर्णं त्रिकटुसम्भवमिति त्रिकटुचूर्णं मिलित्वा विषात् द्विगुणं देयं, अजगन्धिका वर्व्वरीति ख्याता ॥ १-४ ॥

**श्लेष्मशैलेन्द्ररसे** त्र्यूषणं त्रिकटु, यावशूकं यवक्षारं, वरा त्रिफला, यासो दुरालभा, कनकबीजं धुस्तरबीजम् । इन्द्राशनस्य त्रैलोक्यविजयायाः ॥ ५-१२ ॥

---

१ पारिभद्रकपिप्पलीत्यत्र पिप्पलीशब्देन गजपिप्पलीति केचित् वदन्ति ।

### महाश्लेष्मकालानलो रसः—

हिङ्गूलसम्भवं सूतं शिला-गन्धक टङ्कणम् ।
ताम्रं वङ्गं तथाऽभ्रञ्च स्वर्णमाक्षिकतालकम् ॥ १३ ॥
धुस्तूरं सैन्धवं कुष्ठं पिप्पली हिङ्गु कट्फलम् ।
दन्तीबीजं सोमराजी वनराजफलं त्रिवृत् ॥ १४ ॥
वज्रीक्षीरेण संमर्द्य वटिकां कारयेद्भिषक् ।
कलायपरिमाणान्तु खादेदेकां यथाबलम् ॥ १५ ॥
सन्निपातं निहन्त्याशु वृक्षमिन्द्राशनिर्यथा ।
मत्तसिंहो यथाऽरण्ये मृगाणां कुलनाशनः ।
तथाऽयं सर्वरोगाणां सद्यो नाशकरो महान् ॥ १६ ॥

### महालक्ष्मीविलासः—

पलं वज्राभ्रचूर्णस्य तदर्द्धो गन्धको भवेत् ।
तदर्द्धं वङ्गभस्मापि तदर्द्धः पारदस्तथा ॥ १७ ॥
तत्समं हरितालञ्च तदर्द्धं ताम्रभस्मकम् ।
रसतुल्यञ्च कर्पूरं जातीकोषफले तथा ॥ १८ ॥
वृद्धदारकबीजञ्च बीजं स्वर्णफलस्य च ।
प्रत्येकं कार्षिकं भागं मृतस्वर्णञ्च शाणकम् ॥ १९ ॥
निष्पिष्य वटिका कार्य्या द्विगुञ्जाफलमानतः ।
निहन्ति सन्निपातोत्थान् गदान् घोरान् सुदारुणान् ॥ २० ॥
गलोत्थानन्त्रवृद्धिञ्च तथाऽतीसारमेव च ।
कुष्ठमेकादशविधं प्रमेहान् विंशतिं तथा ॥ २१ ॥
श्लीपदं कफवातोत्थं चिरजं कुलजं तथा ।
नाडीव्रणं व्रणं घोरं गुदामयभगन्दरम् ॥ २२ ॥
कासपीनसयक्ष्मार्शःस्थौल्यदौर्गन्ध्यरक्तनुत् ।
आमवातं सर्वरूपं जिह्वास्तम्भं गलग्रहम् ॥ २३ ॥
उदरं कर्णनासाक्षि-मुखवैजात्यमेव च ।
सर्वशूलं शिरःशूलं स्त्रीरोगञ्च विनाशयेत् ॥ २४ ॥
वटिकां प्रातरेकैकां खादेन्नित्यं यथाबलम् ।

१ दीर्घश्छन्दोऽनुरोधात् ।

अनुपानमिह प्रोक्तं मांसं पिष्टं पयो दधि ॥ २५ ॥
वारिभक्तं सुरासीधु सेवनात् कामरूपधृक् ।
वृद्धोऽपि तरुणस्पर्द्धी न च शुक्रक्षयो भवेत् ॥ २६ ॥
न च लिङ्गस्य शैथिल्यं न केशा यान्ति पक्वताम् ।
नित्यं गच्छेत् शतं स्त्रीणां मत्तवारणविक्रमः ॥ २७ ॥
द्विलक्षयोजनी दृष्टिर्जायते पौष्टिकं तथा ।
प्रोक्तः प्रयोगराजोऽयं नारदेन महात्मना ॥ २८ ॥
'महालक्ष्मीविलासोऽयं वासुदेवो जगत्पतिः ।
प्रसादादस्य भगवान् लक्षनारीषु वल्लभः ॥ २९ ॥

कफकेतुरसः—

टङ्कणं मागधी शङ्खं वत्सनाभं समं समम् ।
आर्द्रकस्य रसेनैव भावयेद्दिवसत्रयम् ॥ ३० ॥
गुञ्जामात्रं प्रदातव्यमार्द्रकस्य रसेन वै ।
पीनसं श्वासकासञ्च गलरोगं गलग्रहम् ॥ ३१ ॥
दन्तरोगं कर्णरोगं नेत्ररोगं सुदारुणम् ।
सन्निपातं निहन्त्याशु कफकेतुरसोत्तमः ॥ ३२ ॥

कफचिन्तामणिरसः—

हिङ्गुलेन्द्रयवं टङ्कं त्रैलोक्यबीजमेव च ।
मरिचञ्च समं सर्वं भस्मसूतं त्रिभागिकम् ॥ ३३ ॥
आर्द्रकस्य रसेनैव मर्दयेत् याममात्रकम् ।
चणकाभा वटी कार्य्या सर्ववातप्रशान्तये ।
कफरोगं निहन्त्याशु भास्करास्तिमिरं यथा ॥ ३४ ॥

* इति कफरोग-चिकित्सा *

---

महालक्ष्मीविलासे—स्वर्णफलस्य धुस्तूरफलस्य ॥ १७–२९ ॥
कफकेतुरसे—मागधी पिप्पली ॥ ३०–३२ ॥
कफचिन्तामणिरसे—त्रैलोक्यविजयाबीजं शक्राशनबीजम् ॥ ३३-३४ ॥

इति रसेन्द्रसारसंग्रहे कफरोग-चिकित्सा ।

## अथ पित्तरोग-चिकित्सा ।

### गुडूच्यादिलौहम्—

गुडूचीसारसंयुक्तं त्रिकत्रययुतं त्वयः ।
वातरक्तं निहन्त्याशु सर्ववातहरं परम् ॥ १ ॥

### धात्रीलौहम्—

धात्रीचूर्णस्याष्टौ, पलानि चत्वारि लौह¹चूर्णस्य ।
यष्टीमधुक-रजश्च, द्विपलं दद्यात् पटे घृष्टम् ॥ २ ॥
अमृताक्काथेनैतद्भाव्यं चूर्णन्तु सप्ताहम् ।
चण्डातपे सुशुष्कं भूयः पिष्ट्वा नवे घटे स्थाप्यम् ॥ ३ ॥
घृतेन मधुना युक्तं भोजनाद्यन्तमध्यतः ।
त्रीन् वारान् भक्षयेन्नित्यं पथ्यं दोषानुबन्धतः ॥ ४ ॥
भक्तस्यादौ नाशयेच्च दोषान् पित्तकृतानपि ।
मध्ये चानाहविष्टम्भं तथाऽन्ते चाग्निमान्द्यताम् ।
रक्तपित्तसमुद्भूतान् रोगान् हन्ति न संशयः ॥ ५ ॥

### पित्तान्तको रसः—

जातीकोषफले मांसी कुष्ठं तालीशपत्रकम् ।
माक्षिकं मृतलौहञ्च अभ्रं दिव्यं समांशिकम् ॥ ६ ॥
सर्वतुल्यं मृतं तारं समं निष्पिष्य वारिणा ।
द्विगुञ्जाभा वटी कार्य्या पित्तरोगविनाशिनी ॥ ७ ॥
कोष्ठाश्रितञ्च यत् पित्तं शाखाश्रितमथापि वा ।
शूलञ्चैवाम्लपित्तञ्च पाण्डुरोगं हलीमकम् ॥ ८ ॥
दुर्नाम भ्रान्तिवान्ती च क्षिप्रमेव विनाशयेत् ।
रसः पित्तान्तको ह्येष काशिराजेन भाषितः ॥ ९ ॥

### महापित्तान्तको रसः—

यद्यत्र माक्षिकं त्यक्त्वा सुवर्णमपि दीयते ।

---

प्रागुक्तरीत्या कफरोगानन्तरं पित्तरोगचिकित्सामाह गुडूचीत्यादि—गुडूचीसारं गुडूचीसत्त्वम् । अत्र सर्व्वसमं लौहं प्रदेयम् ॥ १ ॥

---

१ तन्त्रान्तरेष्वयं योगः शूलाधिकारे उक्तः ।  १ पथ्यार्याछन्दः ।

महापित्तान्तको नाम सर्वपित्तविनाशनः ॥ १० ॥

* इति पित्तरोग-चिकित्सा *

## अथ वातरक्त-चिकित्सा।

लाङ्गल्याद्यं लौहम्—

विशुद्धलाङ्गलीमूलं त्रिकटुत्रिफलैस्तथा।
द्राक्षागुग्गुलुभिस्तुल्यं लौहचूर्णं नियोजयेत् ॥ १ ॥
मातुलुङ्गरसेनैव त्रिफलाया रसेन च।
विमृद्य यत्नतः पश्चात् गुडिकां कोलसम्मिताम् ॥ २ ॥
भक्षयेन्मधुना सार्द्धं करोति शृणु यान् गुणान्।
आजानुस्फुटितं घोरं सर्वाङ्गस्फुटितं तथा।
तत् सर्वं नाशयत्याशु साध्यासाध्यञ्च शोणितम् ॥ ३ ॥

वातरक्तान्तको रसः—

गन्धकं पारदं लौहं शिलां तालं घनं तथा।
शिलाजतु पुरं शुद्धं समभागं विचूर्णयेत् ॥ ४ ॥
श्वेतापराजिता दार्वी वागुजी चित्रकं तथा।
पुनर्नवा देवकाष्ठ-त्रिफलाव्योषवेल्लकम् ॥ ५ ॥
चूर्णमेषां पृथक् तुल्यं सर्वमेकत्र कारयेत्।
त्रिफला भृङ्गराजस्य रसेनैव त्रिधा त्रिधा ॥ ६ ॥
भावयेत् भक्षयेत् पश्चात् चणमात्रं दिने दिने।
ततोऽनुपानं निम्बस्य पत्रं पुष्पं त्वचं समम् ॥ ७ ॥
शाणमात्रं घृतैः कुर्य्यात् सर्ववातविकारनुत्।
वातरक्तं महाघोरं गम्भीरं सर्वजञ्च यत्।
सर्वोपद्रवसंयुक्तं साध्यासाध्यं निहन्त्यलम् ॥ ८ ॥

---

पित्तान्तकरसे फलं जातीफलं, तार रौप्यम् ॥ ६-९ ॥

इति पित्तरोग-चिकित्सा।

पित्तजनितरक्तदुष्टिसाधर्म्यात् पित्तरोगानन्तरं वातरक्तचिकित्सा—

लाङ्गलादिलौहे—सर्व्वचूर्णसमं लौहम् ॥ १-३ ॥

वातरक्तान्तकरसे—घनमभ्रम्। पुरो गुग्गुलुः। वागुजी सोमराजी।

चूर्णमेषां पृथक् तुल्यमिति प्रत्येकं पारदसमामित्यर्थः ॥ ४-८ ॥

### तालभस्म—

हरितालं पलं शुद्धं तथा कर्षं विषस्य च।
श्वेताङ्कोठरसेनैव द्वयमेकत्र खल्लयेत् ॥ ९ ॥
पलाशभस्म द्विपलं निधाय स्थालिकोपरि।
तद्भस्मोपरि तालस्य गोलकं स्थापयेत् सुधीः ॥ १० ॥
तस्योपरि ह्यपामार्ग-भस्म दद्यात् पलत्रयम्।
स्थालीमुखे शरावञ्च दद्यात् यत्नेन लेपयेत् ॥ ११ ॥
लेपयित्वा ततश्चुल्ल्यामहोरात्रं पचेत् भिषक्।
ततस्तु जायते भस्म शुद्धकर्पूरसन्निभम् ॥ १२ ॥
गुञ्जत्रयं ततो भक्ष्यमनुपानविशेषतः।
वातरक्तञ्च कुष्ठञ्च दद्रुविस्फोटकाऽपचीम् ॥ १३ ॥
विचर्चिकां चर्मदलं वातदुष्टञ्च शोणितम्।
रक्तपित्तं तथा शोथं गलत्कुष्ठं विनाशयेत्।
हलीमकं तथा शूलमग्निमान्द्यमरोचकम् ॥ १४ ॥

### महातालेश्वरो रसः—

तथा सिद्धेन तालेन गन्धतुल्येन मेलयेत्।
द्वयोस्तुल्यं जीर्णताम्रं वालुकायन्त्रगं पचेत् ॥ १५ ॥
अयं तालेश्वरो नाम रसः परमदुर्लभः।
हन्यात् कुष्ठानि सर्वाणि वातरक्तमथापि च।
शूलमष्टविधं श्वित्रं रसस्तालेश्वरो महान् ॥ १६ ॥

### विश्वेश्वरो रसः—

रसात् दश विषात् पञ्च गन्धकात् दश शोधितात्।
तुत्थात् दश पलाशस्य बीजेभ्यः पञ्च कारयेत् ॥ १७ ॥
क्षुद्राऽश्वमारधुस्तूर-नीलतः करहाटकात्।
दशकं दशकं कुर्यात् शोषयित्वा जटात्वचः ॥ १८ ॥
दशकं दशकं दत्त्वा कुचिलात् दश नूतनात्।
भल्लातकाच्च दशकं चूर्णयित्वा भिषक् ततः ॥ १९ ॥
सुदिने च बलिं दत्त्वा वैद्यः पूजापरायणः।

---

विश्वेश्वरसे—क्षुद्रा कण्टकारी, अश्वमारं करवीरः, करहाटः हातजु-

रक्तिकाद्वितयं दद्यात्, सहते यदि वा त्रयम् ॥ २० ॥
वातरक्तं ज्वरं कुष्ठं खरस्पर्शमसौख्यदम् ।
आजानुस्फुटितं हन्ति विपजं वाऽस्थिनिःसृतम् ॥ २१ ॥
कुष्ठमष्टादशविधमग्निमान्द्यमरोचकम् ।
'विश्वेश्वरो' रसो नाम विश्वनाथेन भाषितः ॥ २२ ॥

कुष्ठोक्तौषधप्रयोगाऽतिदेशः—

वक्ष्यते कुष्ठरोगेयदौषधं भिषजां वरैः ।
वातरक्ते प्रयुञ्जीत कुर्य्याच्च रक्तमोक्षणम् ॥ २३ ॥

* इति वातरक्तचिकित्सा *

---

## अथोरुस्तम्भ-चिकित्सा ।

गुञ्जाभद्ररसः—

निष्कत्रयं शुद्धसूतं निष्कद्वादश गन्धकम् ।
गुञ्जाबीजञ्च षड्निष्कं जयन्तीनिम्बबीजकम् ॥ १ ॥
प्रत्येकं निष्कमात्रन्तु निष्कं जैपालबीजकम् ।
जयाजम्बीरधुस्तूरकाकमाचीद्रवैर्दिनम् ॥ २ ॥
भावयित्वा वटीं कुर्य्यात् चतुर्गुञ्जाप्रमाणतः ।
गुञ्जाभद्ररसो नाम हिङ्गुसैन्धवसंयुतः ।
शमयत्युल्बणं दुःखमूरुस्तम्भं सुदारुणम् ॥ ३ ॥

शिलाजत्वादियोगचतुष्टयम्—

शिलाजतु गुग्गुलुं वा पिप्पलीमथ नागरम् ।
ऊरुस्तम्भे पिबेत् मूत्रैर्दशमूलीरसेन वा ॥ ४ ॥

वारिशोषणरसादिप्रयोगोपदेशः—

प्लीहाधिकारे कथितं रसेन्द्रं 'वारिशोषणम्' ।
ऊरुस्तम्भे प्रयुञ्जीत चान्यद्वा योगवाहिकम् ॥ ५ ॥

* इति ऊरुस्तम्भचिकित्सा *

---

रीति ख्याता लता ॥ १७-२२ ॥

इति वातरक्त-चिकित्सा ।

आवृतवातसाधर्म्याद्वातरक्तानन्तरमूरुस्तम्भचिकित्सामाह—**निष्कमिति**—निष्कमर्द्धतोलकम् गुञ्जाभद्ररसं गुञ्जाबीजं श्वेतगुञ्जाबीजम् ॥१-३॥

इति ऊरुस्तम्भ-चिकित्सा ।

## अथाऽऽमवात-चिकित्सा

### आमवाताऽरिवटिका—

रसगन्धकलौहाभ्रं तुत्थं टङ्कणसैन्धवम् ।
समभागं विचूर्ण्याथ चूर्णाद् द्विगुणगुग्गुलुः ॥ १ ॥
गुग्गुलोः पादिकं देयं त्रिवृतामूलवल्कलम् ।
तत्समं चित्रकं देयं घृतेन परिमर्दयेत् ॥ २ ॥
खादेत् माषद्वयञ्चास्य त्रिफलाचूर्णयोगतः ।
आमवातारिवटिका पाचिका भेदिका मता ॥ ३ ॥
आमवातं निहन्त्याशु गुल्मशूलोदराणि च ।
यकृत्प्लीहोदराष्ठीला-कामलापाड्वरोचकान् ॥ ४ ॥
ग्रन्थिशूलं शिरःशूलं वातरोगञ्च गृध्रसीम् ।
गलगण्डं गण्डमालां क्रिमिकुष्ठं भगन्दरान् ॥ ५ ॥
विद्रधिञ्चान्त्रवृद्धिञ्च ह्यर्शांसि गुदजानि च ।
आमवातारिवटिका पुरेशानेन चोदिता ॥ ६ ॥

### अपराऽऽमवातारिवटिका—

रसगन्धौ वरावह्नी गुग्गुलुः क्रमवर्द्धितः ।
एतदेरण्डतैलेन मर्दयेदतिचिक्कणम् ॥ ७ ॥
कर्षोऽस्यैरण्डतैलेन हन्त्युष्णजलपायिनः ।
आमवातमतीवोग्रं दुग्धं मुद्गादि वर्जयेत् ॥ ८ ॥

### आमवातेश्वरो रसः—

शुद्धगन्धः पलार्द्धश्च मृतताम्रञ्च तत्समम् ।
ताम्रार्द्धः पारदः शुद्धः रसतुल्यं मृतायसम् ॥ ९ ॥
सर्वं पञ्चाङ्गुलेनैव भावयेच्च पुनः पुनः ।
सञ्चूर्ण्य पञ्चकोलोत्थैः क्वाथैः सर्वं विभावयेत् ॥ १०

---

आमवातजन्यत्वसामान्यादूरुस्तम्भानन्तरमामवातचिकित्सामाह—**आमवातारिवटिकायां**—चूर्णाद्द्विगुणगुग्गुलुरिति गुग्गुलोः सर्व्वचूर्णाद्द्वैगुण्यम् ॥ १–६ ॥

**आमवातेश्वररसे**—गन्धादि सर्व्वं पञ्चाङ्गुलरस-इत्येरण्डमूलरसे पुनः पुनरिति सप्तवारं भावयेत् । ततः सञ्चूर्ण्य पञ्चकोलक्वाथैर्व्विंशतिवारान्

रौद्रे विंशतिवारांश्च गुडूचीनां रसैर्दश।
भृष्टटङ्कणचूर्णेन तुल्येन सह मेलयेत् ॥ ११ ॥
टङ्कणार्द्धं विडं देयं मरिचं विडतुल्यकम्।
तिन्तिडीक्षारतुल्यञ्च सूततुल्यञ्च दन्तिकम् ॥ १२ ॥
त्रिकटु त्रिफलञ्चैव लवङ्गञ्चार्द्धभागिकम्।
आमवातेश्वरो नाम विष्णुना परिकीर्त्तितः ॥ १३ ॥
महाग्निकारको ह्येष आमवातान्तको मतः।
स्थूलानां कर्षणः श्रेष्ठः कृशानां स्थौल्यकारकः ॥ १४ ॥
अनुपानविशेषेण सर्वरोगविनाशनः।
अनेन सदृशो नास्ति वह्निदीप्तिकरो महान्।
गुल्मार्शोग्रहणीदोष-शोथपाण्डुरुजापहः ॥ १५ ॥

वृद्धदाराद्यं लौहम्—

वृद्धदारत्रिवृद्दन्ती-गजपिप्पलिमाणकैः।
त्रिकत्रयसमायुक्तैरामवातान्तकं त्वयः।
सर्वानेव गदान् हन्ति केशरी करिणो यथा ॥ १६ ॥

शिवागुग्गुलुः—

शिवाबिभीतामलकीफलानां, प्रत्येकशो मुष्टिचतुष्टयञ्च।
तोयाढके तत् क्वथितं विधाय, पादावशेषे त्ववतारणीयम् ॥ १७ ॥
एरण्डतैलं द्विपलं निधाय, पिचुत्रयं गन्धकनामकस्य।
पचेत् पुरस्यात्र पलद्वयञ्च, पाकावशेषे च विचूर्ण्य दद्यात् ॥१८॥
रास्ना विडङ्गं मरिचं कणा च, दन्ती जटा नागरदेवदारु।
प्रत्येकशः कोलमितं तथैषां, विचूर्ण्य निक्षिप्य नियोजयेच्च ॥१९॥
आमवाते कटीशूले गृध्रसीक्रोष्टुशीर्षके।
न चान्यदस्ति भेषज्यं यथाऽयं गुग्गुलुः स्मृतः ॥ २० ॥

---

भावयेत्। ततः टङ्कणादि सर्व्वं योज्यम् ॥ ९–१५ ॥

**वृद्धदाराद्यलौहे**—त्रिवृदिति त्रिवृन्मूलम्। माणकन्दं पुराणं ग्राह्यम्। अत्र सर्व्वसमं लौहं प्रदेयम् ॥ १६ ॥

**शिवागुग्गुलौ**—शिवा हरीतकी, मुष्टिचतुष्टयमित्यर्द्धशरावं, पिचुत्रयमिति तोलकषट्कम्। पुरस्य गुग्गुलोः। प्रत्येकशः कोलमिति प्रत्येकं तोलकमितम् ॥ १७-२० ॥

### आमवातगजसिंहमोदकः—

शुण्ठीचूर्णस्य प्रस्थैकं यमान्याश्च पालाष्टकम् ।
जीरकस्य पले द्वे च धन्याकस्य पलद्वयम् ॥ २१ ॥
पलैकं शतपुष्पाया लवङ्गस्य पलं तथा ।
टङ्कणस्य पलं भृष्टं मरिचस्य पलानि च ॥ २२ ॥
त्रिवृतात्रिफलाक्षार पिप्पलीनां पलं तथा ।
शट्यलातेजपत्राणां चविकानां पलं तथा ॥ २३ ॥
अभ्रं लौहं तथा वङ्गं प्रत्येकञ्च पलं पलम् ।
एतेषां सर्वचूर्णानां खण्डं दद्यात् गुणत्रयम् ॥ २४ ॥
घृतेन मधुना मिश्रं कर्षमात्रन्तु मोदकम् ।
एकैकं भक्षयेत् प्रातः श्रृतञ्चानुपिबेत् पयः ॥ २५ ॥
शूलघ्नो रक्तपित्तघ्नश्चाम्लपित्तविनाशनः ।
आमवातकुलध्वंसी 'केशरी' विधिनिर्मितः ॥ २६ ॥

### योगवाहिरसान्तरप्रयोगोपदेशः—

रामवाणो रसो देयो योगबहिरसेन्द्रकाः ।
आमवाते विधीयन्ते सानुपानैः प्रयत्नतः ॥ २७ ॥

* इति आमवात-चिकित्सा *

---

## अथ शूलरोग-चिकित्सा

### सप्तामृतलौहम्—

मधुकं त्रिफलाचूर्णमयोरजः समं लिहन् ।
मधुसर्पिर्युतं सम्यक् गव्यक्षीरं पिबेदनु ॥ १ ॥
छर्दिं सतिमिरं शूलमम्लपित्तं ज्वराऽरुचिम् ।
मूत्रकृच्छ्रं तथा मेहं हन्यादेतन्न संशयः ॥ २ ॥

---

**आमवातगजसिंहमोदके**—आदौ खण्डं किञ्चिज्जलञ्च संमिश्रय मृद्वग्निसन्तापे उष्णीकृतं, ततश्चूर्णादि सर्व्वं प्रक्षिप्य मोदकवत् पचेत् । घृतमधुनी तु प्रक्षेप्ये ॥ २१–२६ ॥

इत्यामवात-चिकित्सा ।

---

आमवाते शूलं भवतीत्यनन्तरं शूलचिकित्सामाह **मधुकमित्यादि**—तुल्यमात्रमयोरज इति सर्व्वद्रव्यसमं लौहमित्यर्थः ॥ १–२ ॥

त्रिफलालौहम्—

तीक्ष्णायश्चूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम् ।
क्षीरेण पाययेद्धीमान् सद्यः शूलनिवारणम् ॥ ३ ॥

चतुःसमलौहम्—

अभ्रं ताम्रं रसं लौहं गन्धकं संस्कृतं पलम्[1] ।
सर्वमेतत् समाहृत्य यत्नतः कुशलो भिषक् ॥ ४ ॥
आज्ये पले द्वादशके दुग्धे वत्सरसंख्यके ।
पक्त्वा तत्र क्षिपेत् चूर्णं सुपूतं घनवाससा ॥ ५ ॥
विडङ्गत्रिफलावह्नि-त्रिकटूनां तथैव च ।
पिष्ट्वा पलोन्मितानेतानथ सम्मिश्रितान् नयेत् ॥ ६ ॥
ततः पिष्ट्वा शुभे भाण्डे स्थापयेच्च विचक्षणः ।
आत्मनः शोभने चाह्नि पूजयित्वा रविं गुरुम् ॥ ७ ॥
घृतेन मधुनाऽऽलोड्य भक्षयेत् माषकादिकम् ।
अष्टौ माषान् क्रमेणैव वर्द्धयेच्च समाहितः ॥ ८ ॥
अनुपानं प्रयोक्तव्यं नारिकेलजलं पयः ।
जीर्णे लोहितशाल्यन्नं मुद्गमांसरसं तथा ॥ ९ ॥
भक्षयेत् घृतसंयुक्तं सद्यः शूलात् विमुच्यते ।
हृच्छूलं पार्श्वशूलञ्च सामवातं कटीग्रहम् ।
गुल्मशूलं शिरःशूलं योगेनानेन नाशयेत् ॥ १० ॥

पञ्चात्मको रसः—

मृतसूताभ्रकं चाम्लवेतसं ताम्रगन्धकम् ।

---

**त्रिफलालौहे**—त्रिफलाचूर्णसमं लौहम् ॥ ३ ॥

**चतुःसमलौहे**—अभ्रादि लौहान्तं द्रव्यचतुष्कं प्रत्येकं पलम् । दुग्धे वत्सरसङ्ख्यक इति द्वादशपले दुग्धे । विडङ्गादीनामष्टद्रव्याणां चूर्णं मिलित्वा पलं पाके निष्पन्ने प्रक्षिपेत् ॥ ४-१० ॥

**पञ्चात्मकरसे**—महाराष्ट्री ब्रह्मयष्टिः, अर्द्धांशं पञ्चलवणमिति सर्वद्र-

---

१ अभ्रं ताम्रं रसं गन्धं लौहं प्रत्येकशः पलमिति पाठान्तरम्, स्वीकृत्य मिलितऽभ्रादि-गन्धान्तानां द्रव्यचतुष्कानां समं लौहं गृह्णन्ति, तेनाऽस्य चतुःसमलौहमिति संज्ञेति रामसेनस्याभिप्रायः ।

विषं फलत्रयाच्चूर्णं तुल्यं मर्द्यं दिनावधि ॥ ११ ॥
जयन्ती मुण्डिरी वासा बृहती च गुडूचिका ।
महाराष्ट्री जम्बुरसैस्तथा नीलोत्पलस्य च ॥ १२ ॥
प्रतिद्रावैर्दिनं भाव्यं ततः संशोष्य यत्नतः ।
अर्द्धांशं पञ्चलवणं दत्त्वाऽऽर्द्रकरसेन च ॥ १३ ॥
दिनं पेष्यं ततः कुर्य्याद् वटिकां चणसम्मिताम् ।
प्रातर्मध्याह्नरात्रौ च भक्षयेद् वटिकात्रयम् ॥ १४ ॥
माषेक्षुपिष्टगुर्वन्नं गोपयश्च हितं तथा ।
सेवेत वातशूलार्त्तो रस पञ्चात्मकं शुभम् ॥ १५ ॥

धात्रीलौहम्—

कुडवं शुद्धमण्डूरं यवञ्च कुडवं तथा ।
पाकार्थञ्च जलं प्रस्थं चतुर्भागाऽवशेषितम् ॥ १६ ॥
शतावरीरसस्याष्टावामलक्या रसस्य च ।
तथा दधि पयो भूमि-कूष्माण्डस्य चतुःपलम् ॥ १७ ॥
चतुःपलमिक्षुरसं दद्यात् तत्र विचक्षणः ।
प्रक्षिपेत् जीरकं धान्यं त्रिजातं करिपिप्पलीम् ॥ १८ ॥
मुस्तं हरीतकीञ्चैव अभ्रं लौहं कटुत्रयम् ।
रेणुका त्रिफला चैव तालीशं स्वर्णकेशरम् ॥ १९ ॥
कटुकं मधुकं रास्ना चाश्वगन्धा च चन्दनम् ।
एतेषां कार्षिकं भागं चूर्णयित्वा विनिक्षिपेत् ॥ २० ॥
भोजनाद्यवसाने च मध्ये चैव समाहितः ।
तोलैकं भक्षयेन्नित्यमनुपानं पयस्तथा ॥ २१ ॥
शूलमष्टविधं हन्ति साध्यासाध्यमथापि वा ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ २२ ॥
परिणामसमुत्थञ्च ह्यन्नद्रवभवं तथा ।

---

व्यापेक्षया मिलितं पञ्चलवणमर्द्धांशम् ॥ ११–१५ ॥

**धात्रीलौहे**—कुडवपरिमितयवस्य क्वाथे मण्डूरं शतावरीरसादींश्च प्रक्षिप्य पचेत्। पाकशेषे जीरकादिचूर्णं प्रक्षेप्यम्। त्रिजातं त्रिसुगन्धि।

द्वन्द्वजानपि शूलांश्च ह्यम्लपित्तं सुदारुणम् ।
सर्वशूलहरं श्रेष्ठं धात्रीलौहमिदं शुभम् ॥ २३ ॥

शूलराजलौहम्—

कर्षैकं कान्तलौहस्य शुद्धमभ्रं पलं तथा ।
सितायाश्च पलञ्चैकं मधु सर्पिस्तथैव च ॥ २४ ॥
सर्वमेकीकृतं पात्रे लौहदण्डेन मर्दयेत् ।
त्रिकटुं त्रिफलां मुस्तं विडङ्गं चव्यचित्रकम् ॥ २५ ॥
प्रत्येकं तोलकं मानं चूर्णितं तत्र दापयेत् ।
भक्षयेत् प्रातरुत्थाय शिशिराम्ब्वनुपानतः ॥ २६ ॥
सर्वदोषभवं शूलं कुक्षिशूलञ्च यत् भवेत् ।
हृच्छूलं पार्श्वशूलञ्च अम्लपित्तञ्च नाशयेत् ॥ २७ ॥
अर्शांसि ग्रहणीदोषं प्रमेहांश्च विषूचिकाम् ।
'शूलराज'मिदं लौहं हरेण परिनिर्मितम् ॥ २८ ॥

विद्याधराभ्रम्—

विडङ्गमुस्तत्रिफलागुडूची-दन्तीत्रिवृद्वह्निकटुत्रिकञ्च ।
प्रत्येकमेषां पिचुभागचूर्णं, पलानि चत्वार्ययसो मलस्य ॥ २९ ॥
गोमूत्रशुद्धस्य पुरातनस्य, यद्वाऽयसस्तानि शिवाटिकायाः ।
कृष्णाभ्रचूर्णस्य पलं विशुद्धं, निश्चन्द्रकं शुद्धमतीव सूतात् ॥३०॥
पादोनकर्षं स्वरसेन खल्ले, शिलातले मन्युमणीदलस्य ।
संमर्द्य पश्चादतिशुद्धगन्ध-पाषाणचूर्णेन पिचून्मितेन ॥ ३१ ॥
युक्त्या ततः पूर्वरजांसि दत्वा सर्पिर्मधुभ्यामवमर्द्य यत्नात् ।
निधापयेत् स्निग्धविशुद्धभाण्डे ततः प्रयोज्योऽस्य रसायनस्य ॥३२॥
प्राङ्माषको द्वावथवा त्रयोवा गव्यं पयो वा शिशिरं जलं वा ।

---

स्वर्णकेशरम् नागकेशरम् ॥ १६-२३ ॥

**विद्याधराभ्रे**—विडङ्गादि कटुत्रयान्तानां द्वादशद्रव्याणां प्रत्येकं पिचुः कर्षः, उपलक्षणत्वात् पलं वा । यद्वायसस्तानि शिवाटिकाया इति यद्वा लौहस्य चत्वारि पलानि अथवा लौहपत्रिकायाश्चत्वारि पलानि । सूतात् पादोनकर्षमिति पादहीनकर्षं चतुर्दशमाषकमित्यर्थः । थानकुनीरसेन पारदं संशोध्य संमर्द्य पश्चात् गन्धकचूर्णं कर्षमितं दत्वा संमर्द्य च विडङ्गादिचूर्णं प्रक्षिप्य

पिबेदयं योगवरः प्रभूतकालप्रनष्टानलदीपकश्च ॥ ३३ ॥
रोगं निहन्यात् परिणामशूलं शूलं तथाऽन्नद्रवसंज्ञकञ्च ।
यक्ष्माऽम्लपित्तं ग्रहणी प्रवृद्धां जीर्णज्वरं लोहितपित्तमुग्रम् ।
न सन्ति ते यान्न निहन्ति रोगान् योगोत्तमः सम्यगुपास्यमानः ३४

बृहद्विद्याधराभ्रम्—

शुद्धसूतं तथा गन्धः फलत्रयकटुत्रयम् ।
विडङ्गं मुस्तकं दन्तीं त्रिवृतां चित्रकं तथा ॥ ३५ ॥
आखुपर्णी ग्रन्थिकञ्च प्रत्येकं कर्षसम्मितम् ।
पलं कृष्णाभ्रचूर्णस्य मृतायश्च चतुर्गणम् ॥ ३६ ॥
घृतेन मधुना पिष्ट्वा वटिकां कोलसम्मिताम् ।
एकैकां वटिकां खादेत् प्रातरुत्थाय नित्यशः ॥ ३७ ॥
अनुपानं गवां क्षीरं नीरं वा नारिकेलजम् ।
सर्वशूलं निहन्त्याशु वातपित्तभवं तथा ॥ ३८ ॥
एकंज द्वन्द्वजञ्चैव तथैव सान्निपातिकम् ।
परिणामोद्भवं शूलमामवातोद्भवं तथा ॥ ३९ ॥
कार्श्यं वैवर्ण्यमालस्यं तन्द्राऽरुचिविनाशनम् ।
साध्यासाध्यं निहन्त्याशु भास्करस्तिमिरं यथा ॥ ४० ॥

सर्वाङ्गसुन्दरो रसः—

शुद्धसूतं तथा ताम्रं शिलामाक्षिकतालकम् ।
रजतं स्वर्णवङ्गञ्च लौहमभ्रं सनागरम् ॥ ४१ ॥
चूर्णयेत् पञ्चलवणं देयं सर्वन्तु तुल्यकम् ।
गन्धकं मिश्रयेत् सर्वं रसैरेषां विभावयेत् ॥ ४२ ॥
शुण्ठी-जयन्ती-विजया-महाराष्ट्रिक-धूर्त्तजैः ।
सर्वाङ्गसुन्दरो नाम्ना रसोऽयं विष्णुनिर्मितः ॥ ४३ ॥

---

घृतभाण्डे स्थापनीयम् । ततो लौहपात्रे लौहदण्डेन घृतमधुभ्यां माषैकं पुरुषापेक्षया माषद्वयं वा संमर्द्य लिह्यात् । चतुःषष्टिगुणं गव्यदुग्धं शिशिर तायं वा अनुपेयम् ॥ २९–३४ ॥

बृहद्विद्याधराभ्रे—ग्रन्थिकं पिप्पलीमूलम् । अनुपानं गवां क्षीरमिति चतुःषष्टिगुणम् ॥ ३५–४० ॥

खादेदेरण्डशुण्ठीभ्यां माषमात्रं दिने दिने ।
कफवातामयं हन्ति चाऽनुपानं वदाम्यहम् ॥ ४४ ॥
व्योषं सौवर्चलं हिङ्गु करञ्ज-बीजसयुतम् ।
पिबेदुष्णाम्बुना चानु सर्वशूलनिकृन्तनम् ॥ ४५ ॥

शूलवज्रिणी वटिका—

रसगन्धकलौहानां पलार्द्धेन समन्वितम् ।
त्रिफला रामठं शुल्वं शटी त्रिकटु टङ्कणम् ॥ ४६ ॥
पत्रं त्वगेला-तालीश-जातीफल-लवङ्गकम् ।
यमानी जीरकं धान्यं प्रत्येकं तोलकं मतम् ॥ ४७ ॥
माषैका वटिका कार्य्या छागादुग्धेन वा पुनः ।
एकैका भक्षिता चयं वटिका 'शूलवज्रिणी' ॥ ४८ ॥
शूलमष्टविधं हन्ति प्लीहगुल्मोदरं तथा ।
अम्लपित्ताऽमवातञ्च पाण्डुत्वं कामलां तथा ॥ ४९ ॥
शोथं गलग्रहं वृद्धिं श्लीपदं सभगन्दरम् ।
वृद्धबालकरी चैव मन्दाग्नेरपि दीपनी ॥ ५० ॥

त्रिपुरभैरवो रसः—

भागो रसस्याऽश्महेम्नः भागो ग्राह्योऽतियत्नतः ।
तयोर्द्वादशभागानि ताम्रपत्राणि लेपयेत् ॥ ५१ ॥
पचेत् शूलहरः सूतो भवेत् 'त्रिपुरभैरवः' ।
माषो मध्वाज्यसंयुक्तो देयोऽस्य परिणामजे ।
एरण्डतैल-त्रिकटु हिङ्गुभिर्दद्दते परे ॥ ५२ ॥

अग्निमुखो रसः—

रस-बलि-गगनाऽर्कं वेतसाम्लं विषं स्यात्
सवरमिह पृथक् स्याद् भावयेद् घस्रमेतैः ।
कनक-भुजगवल्ली-कण्टकारी-जयाऽद्भिः
कमल-सलिल-वासा मुष्टि-वज्य्र्यम्बुपूरैः ॥ ५३ ॥
अरुणसदृशपाकैर्मातुलुङ्गैश्च योज्यः

---

त्रिपुरभैरवे—अश्महेम्नः गन्धकस्य ॥ ५१-५२ ॥
अग्निमुखे—बलिर्गन्धकः सवरमिति त्रिफलया सहितं, भुजगवल्ली पर्ण,

पटुगण इह तुल्यो, भावयेदार्द्रकाऽद्भिः।
दहनवदननामा वल्लमात्रो निहन्ति
प्रबलसकलशूलं तद्विकारानशेषान् ॥ ५४ ॥

शूलगजकेशरी रसः—

शुद्धसूतं द्विधा गन्धं यामैकं मर्दयेद् दृढम्।
द्वयोस्तुल्यं शुद्धताम्रं सम्पुटे सन्निवेशयेत् ॥ ५५ ॥
ऊर्द्ध्वाधो लवणं दत्त्वा मृद्भाण्डे स्थापयेद् भिषक्।
रुद्ध्वा गजपुटं दत्त्वा स्वाङ्गशीतं समुद्धरेत् ॥ ५६ ॥
सम्पुट चूर्णयेत् श्लक्ष्णं पर्णखण्डे द्विगुञ्जकम्।
भक्षयेत् सर्वशूलार्त्तो सशुण्ठीहिङ्गजीरकम् ॥ ५७ ॥
वचामरिचजं चूर्णं कर्षमुष्णजलैः पिबेत्।
असाध्यं नाशयेत् शूलं 'श्रीशूलगजकेशरी' ॥ ५८ ॥

त्रिगुणाख्यो रसः—

टङ्कणं हारिणं शृङ्गं स्वर्णं गन्धं मृतं रसम्।
दिनैकमार्द्रकद्रावैर्मर्द्यं रुद्ध्वा पुटे पचेत् ॥ ५९ ॥
त्रिगुणाख्यो रसो नाम्ना माषैकं मधुसर्पिषा।
सैन्धवं जीरकं हिङ्गु मध्वाज्याभ्यां लिहेदनु।
पक्तिशूलहरः ख्यातो याममात्रान्न संशयः ॥ ६० ॥

शूलहरणयोगः—

हरीतकी त्रिकटुकं कुचिलं हिङ्गु सैन्धवम्।
गन्धकश्च समं सर्वं वटीं कुर्यात् सुखावहाम् ॥ ६१ ॥

---

सलिलं बालकम ॥ ५३–५४ ॥

**शूलगजकेशरीरसे**—तस्य ताम्रस्य संपुटे संपुट निर्म्माय तस्मिन् सूतकगन्धककज्जलं दत्त्वा रोधयेत्। लपं विनैव। स्वल्पमृत्भाण्डे पलद्वयलवणप्रवेशयोग्ये पलैकं लवणं निक्षिप्य लवणमध्ये सम्पुटकं स्थापयित्वा अपरलवणपलेनाच्छाद्य भाण्डमुखं कर्पस्या आच्छाद्य लिप्त्वा च गजपुटं पचेत्। तस्मादाकृष्य सम्पुटं चूर्णयेत् अनुपानञ्च हिङ्गुशुण्ठ्यादिचर्णूं मापकं, कर्ष मित्युपलक्षणम् ॥ ५५–५८ ॥

**शर्करालौहे**--लौहचर्गं सर्व्वतुल्यम्। **शङ्खादिचूर्णे**—शङ्खस्य दग्धश-

लघु कोलप्रमाणान्तु शस्यते प्रातरेव हि ।
एकैका वटिका ग्राह्या गुल्मशूलविनाशिनी ॥ ६२ ॥
ग्रहण्यामतिसारे च साजीर्णे मन्दपावके ।
योजयेदुष्णपयसा सुखमाप्नोति निश्चितम् ।
सुवर्णञ्च भवेत् देहं सदोत्साहयुतं नृणाम् ॥ ६३ ॥

शर्करालौहम्—

त्रिफलायास्तथा धात्र्याश्चूर्णं वा काललौहजम् ।
शर्कराचूर्णसंयुक्तं सर्वशूलेषु योजयेत् ॥ ६४ ॥

शङ्खादिचूर्णम्—

शङ्खचूर्णस्य च पलं पञ्चैव लवणानि च ।
क्षारं टङ्कणकं जाती शतपुष्पा यमानिका ॥ ६५ ॥
हिङ्गु त्रिकटुकञ्चैव सर्वमेकत्र चूर्णयेत् ।
आमवातं यकृच्छूलं परिणामसमुद्भवम् ।
अन्नद्रवकृतं शूलं शूलञ्चैव त्रिदोषजम् ॥ ६६ ॥

अपथ्यानि—

व्यायामं मैथुनं मद्यं लवणानि कटूनि च ।
वेगरोधं शुचं क्रोधं वर्जयेत् शूलवान् नरः ॥ ६७ ॥

* इति शूलरोग चिकित्सा *

---

## अथोदावर्त्तानाह-चिकित्सा ।

वैद्यनाथवटी—

पथ्या त्रिकटु सूतञ्च द्विगुणं कानकं तथा ।
मन्युमणीरसैरम्ल-लोणिकाया रसैः कृता ॥ १ ॥
गुडिकोदरगुल्मादि-पाण्ड्वामयविनाशिनी ।
क्रिमिकुष्ठगात्रकण्डू-पिडकांश्च निहन्ति हि ।
गुर्डा सिद्धफला चेयं वैद्यनाथेन भाषिता ॥ २ ॥

---

ङ्खस्य, क्षारं टङ्कणकमिति टङ्कणक्षारम् ॥ ६४–६६ ॥

इति शूलरोग–चिकित्सा

उदावर्त्तेऽपि शूलं भवतीति शूलानन्तरमुदावर्त्तचिकित्सामाह–वैद्यनाथवटिकायाम्—पथ्या हरीतकी, कानकं जैपालम् ॥ १–२ ॥

### बृहत् इच्छाभेदी रसः—

शुद्धं पारदटङ्कणं समरिचं गन्धाश्मतुल्यं त्रिवृत्
विश्वा च द्विगुणा ततो नवगुणं जैपालचूर्णं क्षिपेत् ।
खल्ले दण्डयुगं विमर्द्य विधिना चार्कस्य पत्रे ततः
स्वेदं गोमयवह्निना च मृदुना स्वेच्छावशाद्भेदकः ॥ ३ ॥
गुञ्जैकप्रमितो रसो हिमजलैः संसेवितो रेचयेत्
यावन्नोष्णजलं पिबेदपि वरं पथ्यञ्च दध्योदनम् ।
आमं सर्वभवं सुजीर्णमुदरं गुल्मं विशालं हरेत्
वह्नेर्दीप्तिकरो बलासहरणः सर्वामयध्वंसनः ॥ ४ ॥

### योगवाहिरसादिप्रयोगोपदेशः—

योगवाहिरसान् सर्वान् रेचके कथितानपि ।
प्लीहाधिकारे कथितं रसेन्द्रं वारिशोषणम् ।
उदावर्त्ते तथाऽऽनाहे प्रयुञ्जीताऽनुपानतः ॥ ५ ॥

### लौहप्रयोगः—

पुटिते भाविते लौहे त्रिवृत्क्वाथैरनेकशः ।
उदावर्त्तहरं युञ्ज्यात् ससितं वा यथाबलम् ॥ ६ ॥

### उदरोक्तरसप्रयोगोपदेशः—

उदावर्त्ते प्रयोक्तव्य उदरोक्ता रसाः खलु ॥ ७ ॥

* इत्युदावर्त्तानाह-चिकित्सा *

---

## अथ गुल्मरोग-चिकित्सा

### महानाराचरसः—

ताम्रं सूतं समं गन्धं जैपालञ्च फलत्रिकम् ।
कटुकं पेषयेत् क्षारैर्निष्कं गुल्महरं पिबेत् ।
उष्णोदकं पिबेच्चानु नाराचोऽयं महारसः ॥ १ ॥

---

**इच्छाभेदीरसे**—गन्धाश्मो गन्धकः । नवगुणं जैपालचूर्णमित्येकभागापेक्षया नवगुणं जैपालचूर्णमित्यर्थः ॥ ३–४ ॥

इत्युदावर्त्तानाह-चिकित्सा ।

---

गुल्मेऽप्यानाहो भवतीत्यानाहानन्तरं गुल्मचिकित्सामाह-**महानाराचरसे** कटुकं त्रिकटुकं, क्षारैः क्षारत्रयैः ॥ १ ॥

पञ्चाननरसः—

पारदं शिखितुत्थञ्च गन्धजैपालपिप्पलीः ।
आरग्वधफलान्मज्जां वज्रीक्षीरेण पेषयेत् ॥ २ ॥
धात्रीरसयुतं खादेद्रक्तगुल्मप्रशान्तये ।
चिञ्चाफलरसञ्चानु पथ्यं दध्योदनं हितम् ॥ ३ ॥

गुल्मवज्रिणी वटिका—

रसगन्धकताम्रञ्च कांस्यं टङ्कणतालकम् ।
प्रत्येकं पलिकं ग्राह्यं मर्दयेदतियत्नतः ॥ ४ ॥
तद् यथाऽग्निबलं खादेद्रक्तगुल्मप्रशान्तये ।
निर्मिता नित्यनाथेन वटिका गुल्मवज्रिणी ॥ ५ ॥
गुल्मप्लीहोदराष्ठीला-यकृदानाहनाशिनी ।
कामलापाण्डुरोगघ्नी ज्वरशूलविनाशिनी ॥ ६ ॥

गुल्मकालानलो रसः—

सूतकं लौहकं ताम्रं तालकं गन्धकं समम् ।
तोलद्वयमितं भागं यवक्षारञ्च तत्समम् ॥ ७ ॥
मुस्तकं मरिचं शुण्ठीं पिप्पलीं गजपिप्पलीम् ।
हरीतकीं वचां कुष्ठं तोलैकं चूर्णयेद्बुधः ॥ ८ ॥
सर्वमेकीकृतं पात्रे क्रियन्ते भावनास्ततः ।
पर्पटं मुस्तकं शुण्ठ्यपामार्गं पापचेलिकाम् ॥ ९ ॥
तत्पुनश्चूर्णयेत् पश्चात् सर्वगुल्मनिवारणम् ।
गुञ्जाचतुष्टयं खादेद्धरीतक्यनुपानतः ॥ १० ॥
वातिकं पैत्तिकं गुल्मं तथा चैव त्रिदोषजम् ।
द्वन्द्वजं श्लैष्मिकं हन्ति वातगुल्मं विशेषतः ।
'गुल्मकालानलो' नाम सर्वगुल्मकुलान्तकृत् ॥ ११ ॥

वडवानलो रसः—

पारदं गन्धकं ताप्यं यवक्षारार्कमभ्रकम् ।

---

**पञ्चाननरसे**—वज्रीक्षीरैः स्नुहीदुग्धैः । चिञ्चाफलरसञ्चान्विति तिन्तिडीफलरसञ्चानुपानम् ॥ २–३ ॥

**गुल्मकालानले** यवक्षारञ्च तत्समिति सर्व्वद्रव्यसमं । हरीतक्यनुपानत इति क्वाथं चूर्णं वा अनुपानम् ॥ ७–११ ॥

अग्न्यम्बुनाऽहिपत्रेण संमर्द्याथ द्विगुञ्जकम् ॥ १२ ॥
भक्षयेत् पर्णखण्डेन हिङ्गुसिन्धुसुवर्चलैः ।
दाडिमञ्च तथा बिल्वं कार्षिकं भृङ्गजैर्द्रवैः ॥ १३ ॥
पिष्ट्वा तु सुरया युक्तं देयं स्यादनुपानकम् ।
सर्वगुल्मं निहन्त्याशु शूलञ्च परिणामजम् ॥ १४ ॥

महानाराचरसः—

सूतटङ्कणतुल्यांशं मरिचं सूततुल्यकम् ।
गन्धकं पिप्पलीशुण्ठ्योः द्वौ द्वौ भागौ विमिश्रयेत् ॥ १५ ॥
सर्वतुल्यं क्षिपेद् दन्तीबीजं निस्तुषमेव च ।
द्विगुञ्जं रेचनं सिद्धं 'नाराचाख्यो' महारसः ॥ १६ ॥

विद्याधररसः—

पारदं गन्धकं तालं ताप्यं स्वर्णं मनःशिलाम् ।
कृष्णाक्काथैः स्नुहीक्षीरैर्दिनैकं मर्दयेत् सुधीः ॥ १७ ॥
निष्कार्द्धं श्लैष्मिकं गुल्मं हन्ति मूत्रानुपानतः ।
रसो विद्याधरो नाम गोदुग्धञ्च पिबेदनु ॥ १८ ॥

महागुल्मकालानलो रसः—

गन्धकं तालकं ताम्रं तथैव तीक्ष्णलौहकम् ।
समांशं मर्दयेत् गाढं कन्यानीरेण यत्नतः ॥ १९ ॥
सम्पुटं कारयेत् पश्चात् सन्धिलेपञ्च कारयेत् ।
ततो गजपुटं दत्त्वा स्वाङ्गशीतं समुद्धरेत् ॥ २० ॥
द्विगुञ्जां भक्षयेत् गुल्मी शृङ्गबेरानुपानतः ।
सर्वगुल्मं निहन्त्याशु भास्करस्तिमिरं यथा ॥ २१ ॥

अभयावटी—

अभया मरिचं कृष्णा टङ्कणञ्च समांशिकम् ।
सर्वचूर्णसमञ्चैव दद्यात् कानकजं फलम् ॥ २२ ॥

---

**वडवानलरसे**—ताप्यं स्वर्णमाक्षिकं, अर्कस्ताम्रं, अग्न्यम्बुना चित्रककाथेन सम्मर्द्य पर्णखण्डेन भक्षयेत् । हिङ्ग्वादिचूर्णन्त्वनुयोज्यम् ॥१२–१४॥

**महानाराचरसे**—सूतादिद्रव्यत्रयं प्रत्येकमेकभागसमम् ॥ १५–१६ ॥

**अभयावटिकायां**—कानकजं फलं जैपालफलं, शिवाभिति हरीतकीं,

स्नुहीक्षीरैर्वटी कार्य्या धीरैः स्विन्नकलायवत्।
वटीद्वयं शिवामेकां पिष्ट्वा चोष्णाम्बुना पिबेत् ॥ २३ ॥
उष्णाद्विरेचयेदेषा शीते स्वास्थ्यमुपैति च।
जीर्णज्वरं पाण्डुरोगं प्लीहाष्ठीलोदराणि च।
रक्तपित्ताम्लपित्तादि सर्वाजीर्णञ्च नाशयेत् ॥ २४ ॥

गोपीजलः—

जैपालाष्टौ द्विको गन्धः शुण्ठी मरिचचित्रकम्।
एकः सूतः ससौभाग्यो 'गोपीजल' इति स्मृतः ॥ २५ ॥
शूलव्याध्याश्रयान् गुल्मान् कोष्ठादौ दश पैत्तिकान्।
भगन्दरादिहृद्रोगान् नाशयेदेव भक्षणात् ॥ २६ ॥

काङ्कायनगुडिका—

शटीं पुष्करमूलञ्च दन्तीं चित्रकमाढकीम्।
शृङ्गवेरं वचाञ्चैव पलिकानि समाहरेत् ॥ २७ ॥
त्रिवृतायाः पलञ्चैकं कुर्यात् त्रीणि च हिंङ्गुनः।
यवक्षारात् पले द्वे च, द्वे पले चाम्लवेतसात् ॥ २८ ॥
यमान्यजाजी मरिचं धान्यकञ्चेति कार्षिकम्।
उपकुञ्च्यजमोदाभ्यां पृथगर्द्धपलं भवेत् ॥ २९ ॥
मातुलुङ्गरसेनैव गुडिकां कारयेद्भिषक्।
तासामेकां पिबेत् द्वे वा तिस्रो वाऽथ सुखाम्बुना ॥ ३० ॥
अम्लैर्मद्यैश्च यूषैश्च घृतेन पयसाऽथवा।
एषा 'काङ्कायनेनोक्ता गुडिका' गुल्मनाशिनी ॥ ३१ ॥
अर्शोहृद्रोगशमनी क्रिमीणाञ्च विनाशिनी।
गोमूत्रयुक्ता शमयेत् कफगुल्मं चिरोत्थितम् ॥ ३२ ॥
क्षीरेण पित्तगुल्मञ्च मद्यैरम्लैश्च वातिकत्।
त्रिफलारसमूत्रैश्च नियच्छेत् सान्निपातिकम्।
रक्तगुल्मेषु नारीणामुष्ट्रीक्षीरेण पाययेत् ॥ ३३ ॥

---

तप्ताम्बुना उष्णजलेन ॥ २२-२४ ॥

**गोपीजले**—जैपालाष्टाविति जैपालबीजस्य चाष्टौ भागाः एवमन्यत्र २५-२६॥

**काष्कायनगुडिकायां**—आढकी तुवरी, उपकुञ्ची कृष्णजीरकं, अजमोदा यमानी ॥ २७-३३ ॥

### गुल्मशार्दूलो रसः--

रसं गन्धं शुद्धलौहं गुग्गुलोः पिष्टितं पलम् ।
त्रिवृता पिप्पली शुण्ठी शटी धान्यकजीरकम् ॥ ३४ ॥
प्रत्येकं पलिकं ग्राह्यं पलार्द्धं कानकं फलम् ।
सञ्चूर्ण्य बटिका कार्य्या घृतेन वल्लमानतः ॥ ३५ ॥
वटीद्वयं भक्षयेच्चाऽर्द्धकोष्णाम्बु पिबेदनु ।
हन्ति प्लीहयकृद्गुल्म-कामलोदरशोथकम् ॥ ३६ ॥
वातिकं पैत्तिकं गुल्मं श्लैष्मिकं रौधिरं तथा ।
रसोऽयं गुल्मशार्दूलो गहनानन्दभाषितः ॥ ३७ ॥

### प्राणवल्लभो रसः--

लौहं ताम्रं वराटञ्च तुत्थं हिंङ्गु फलत्रिकम् ।
स्नुहीमूलं यवक्षारं जैपालं टङ्कणं त्रिवृत् ॥ ३८ ॥
प्रत्येकं पलिकं ग्राह्यं छागीदुग्धेन पेषयेत् ।
चतुर्गुञ्जां वटीं खादेद् वारिणा मधुनाऽपि वा ॥ ३९ ॥
प्राणवल्लभनामायं गहनानन्दभाषितः ।
निहन्ति कामलां पाण्डुं मेहं हिक्कां विशेषतः ॥ ४० ॥
असाध्यं सन्निपातञ्च गुल्मं रुधिरसम्भवम् ।
वातरक्तञ्च कुष्ठञ्च कण्डू-विस्फोटकाऽपचीम् ॥ ४१ ॥

### सर्वेश्वरो रसः—

ताम्रं दशगुणं स्वर्णात् स्वर्णपादं कटुत्रिकम् ।
त्रिफला त्रिकटोः तुल्यं त्रिफलाऽर्द्धमयोरजः ॥ ४२ ॥
अयसोऽर्द्धं विषञ्चैव सर्वं सम्मर्द्य यत्नतः ।
सर्वेश्वररसो नाम रक्तगुल्मविनाशनः ॥ ४३ ॥

* इति गुल्मरोग-चिकित्सा *

---

गुल्मशार्दूलरसे—कानकफलं जैपालफलम् ॥ ३४-३७ ॥

प्राणवल्लभरसे—स्नुहीमूलमिति स्नुहीमूलक्षारं । त्रिवृत् त्रिवृन्मूलम् ॥ ३८-४१ ॥

इति गुल्मरोग-चिकित्सा ।

## अथ हृद्रोग-चिकित्सा।

हृदयार्णवो रसः—

शुद्धसूतसमं गन्धं मृतताम्रं तयोः समम्।
मर्दयेत् त्रिफलाक्वाथैः काकमाचीद्रवैर्दिनम्॥ १॥
चणमात्रां वटीं खादेद् रसोऽयं 'हृदयार्णवः'।
काकमाचीफलं कर्षं त्रिफलापलसंयुतम्॥ २॥
द्वात्रिंशत् तोलकं तोयं क्वाथमष्टावशेषितम्।
अनुपानं पिबेच्चात्र हृद्रोगे च कफोत्थिते॥ ३॥

नागार्जुनाभ्रम्—

सहस्रपुटनैः शुद्धं वज्राभ्रमर्जुनत्वचः।
सत्त्वैर्विमर्दितं सप्त-दिनं खल्ले विशोषितम्॥ ४॥
छायाशुष्का वटी कार्या नाम्नेदमर्जुनाह्वयम्।
हृद्रोगं सर्वशूलार्शो-हृल्लासच्छर्द्यरोचकान्॥ ५॥
अतीसारमग्निमान्द्यं रक्तपित्तं क्षतक्षयम्।
शोथोदराऽम्लपित्तञ्च विषमज्वरमेव च।
हन्त्यन्यान्यपि रोगाणि बल्यं वृष्यं रसायनम्॥ ६॥

पञ्चाननो रसः—

सूतगन्धौ द्रवैर्धात्र्या मर्दयेद् गोस्तनीद्रवैः।
यष्टिखर्जूरसलिलैर्दिनञ्च परिमर्दयेत्।
धात्रीचूर्णं सिताञ्चानु पिबेत् हृद्रोगशान्तये॥ ७॥

* इति हृद्रोग-चिकित्सा *

## अथ वस्तिरोगेषु-मूत्रकृच्छ्र चिकित्सा।

त्रिनेत्राख्यो रसः—

वङ्गं सूतं गन्धकं भावयित्वा, लौहे पात्रे मर्दयेदेकघस्रम्।

---

गुल्मस्य हृदयं स्थानमुक्तं अतः स्थानसाम्याद् हृद्रोग उच्यते। शुद्ध-सूतमित्यादि नागार्ज्जुनाभ्रे-अर्ज्जुनत्वचः सत्त्वैरिति अर्ज्जुनवल्कलस्वा-थैरित्यर्थः॥ १-६॥

इति हृद्रोग-चिकित्सा।

सप्तोत्तरे मर्म्मशते त्रीणि मर्म्माणि शिरोहृदयवस्तयःप्रधानानि; तत्र

दूर्वायष्टीगोक्षुरैः शाल्मलीभिः मूषामध्ये भूधरे पाचयित्वा ॥ १ ॥
तत्तद्द्रावैर्भावयित्वाऽस्य वल्लं दद्यात् शीतं पायसं वक्ष्यमाणम् ।
दूर्वायष्टीशाल्मलीतोयदुग्धैस्तुल्यैः कुर्य्यात् पायसं तद्ददीत ।
प्रातःकाले शीतपानीयपानात् मूत्रे जाते स्यात् सुखी च क्रमेण ॥२॥

वरुणाद्यं लौहम्—

द्विपलं वरुणं धात्र्यास्तदर्द्धं धातृपुष्पिकाम् ।
हरीतक्याः पलार्द्धञ्च पृश्निपर्णं तदर्द्धकम् ॥ ३ ॥
कर्षमात्रञ्च लौहाभ्रं चूर्णमेकत्र कारयेत् ।
भक्षयेत् प्रातरुत्थाय शाणमानं विधानवित् ॥ ४ ॥
मूत्राघातं तथा घोरं मूत्रकृच्छ्रञ्च दारुणम् ।
अश्मरीं विनिहन्त्याशु प्रमेहं विषमज्वरम् ॥ ५ ॥
बलपुष्टिकरञ्चैव वृष्यमायुष्यमेव च ।
'वरुणाद्य'मिदं लौहं चरकेण विनिर्मितम् ॥ ६ ॥

मूत्रकृच्छ्रान्तकयोगौ—

अयोरजः श्लक्ष्णपिष्टं मधुना सह योजयेत् ।
मूत्राघातं निहन्त्याशु मूत्रकृच्छ्रं सुदारुणम् ॥ ७ ॥
रसगन्धयवक्षारं सितातक्रयुतं पिबेत् ।
मूत्रकृच्छ्राण्यशेषाणि निहन्ति नियतं नृणाम् ॥ ८ ॥
भैषज्यैरश्मरीप्रोक्तैर्मूत्रकृच्छ्रमुपाचरेत् ।
योगवाहिरसैर्वाऽपि चानुपानविशेषतः ॥ ९ ॥

मूत्रकृच्छ्रान्तको रसः—

शतावरीरसैः पिष्ट्वा मृतसूतञ्च तालकम् ।
शिखितुत्थञ्च तुल्यांशं दिनैकं मर्दयेत् दृढम् ॥ १० ॥
तद्गोलं सार्षपे तैले पाच्यं यामञ्च चूर्णयेत् ।
मूत्रकृच्छ्रान्तकश्चास्य क्षौद्रैर्गुञ्जाचतुष्टयम् ॥ ११ ॥
भक्षणान्नात्र सन्देहो मूत्रकृच्छ्रं निहन्त्यलम् ।
तुलसीतिलपिण्याकं बिल्वमूलं तुषाम्बुना ।

---

हृदयगतविकारचिकित्सामभिधाय वस्तिगतरोगचिकित्सामाह वज्रामित्यादि १-२॥
वरुणादिलौहे—कर्षमानञ्च लौहाभ्रमिति प्रत्येकम् ॥ ३-६ ॥

कर्षैकं वाऽनुपानेन सुरया वा सुवर्चलैः ॥ १२ ॥

*इति मूत्रकृच्छ्र चिकित्सा*

---

## अथ मूत्राघात-चिकित्सा ।

### तारकेश्वरो रसः--

मृतसूताभ्रगन्धञ्च मर्दयेन्मधुना दिनम् ।
तारकेश्वरनामायं गहनानन्दभाषितः ॥ १ ॥
माषमात्रं भजेत् क्षौद्रैर्बहुमूत्रप्रशान्तये ।
औडुम्बरफलं पक्कं चूर्णितं कर्षमात्रकम् ।
संलिह्यान्मधुना सार्द्धमनुपानं सुखावहम् ॥ २ ॥

### लघुलोकेश्वरो रसः—

शुद्धसूतस्य भागैकं चतुरः शुद्धगन्धकात् ।
पिष्ट्वा वराटिका पूर्य्या रसपादेन टङ्कणम् ॥ ३ ॥
क्षीरैः पिष्ट्वा मुखं लिप्त्वा भाण्डे रुद्ध्वा पुटे पचेत् ।
स्वाङ्गशीतं विचूर्ण्याथ 'लघुलोकेश्वरो' मतः ॥ ४ ॥
चतुर्गुञ्जाप्रमाणन्तु मरिचेन तथैव च ।
जातीमूलफलैर्युक्तमजाक्षीरेण पाययेत् ।
शर्कराभावितञ्चानु पिबेत् कृच्छ्रहरं परम् ॥ ५ ॥

### क्षुद्रयोगाः—

येनौषधेन मतिमान् मूत्रकृच्छ्रमुपाचरेत् ।
तेनौषधेन श्रेष्ठेन मूत्राघातानुपाचरेत् ॥ ६ ॥
लवणाम्लवरायुक्तं घृतञ्चापि पिबेन्नरः ।

---

**मूत्रकृच्छ्रान्तके**—शिखितुत्थं तुत्थकमेव ॥ १०-१२ ॥

इति मूत्रकृच्छ्र-चिकित्सा।

मूत्रगतविकारसाधर्म्यादनन्तरं मूत्राघातचिकित्सामाह—**तारकेश्वररसे**—उडुम्बरफलं पक्वमिति पक्वयज्ञोडुम्बरफलम् ॥ २ ॥

**लघुलोकेश्वरे**—ससूतं गन्धकं पिष्ट्वा तेन वराटिका पूरणीया, ततो रसपादेन टङ्कणं दुग्धे पिष्ट्वा वराटिकामुखं लिप्त्वा पुटपाके योजयेदिति भावः ॥ ३-५ ॥

तस्य नश्यन्ति वेगेन मूत्राघातास्त्रयोदश ॥ ७ ॥
पक्वैर्वारुकबीजानामक्षमात्रं ससैन्धवम् ।
धान्याम्लयुक्तं पीत्वैव मूत्राघातात् विमुच्यते ॥ ८ ॥
त्रिकण्टकैरण्डशतावरीभिः सिद्धं पयो वा तृणपञ्चमूलैः ।
गुडप्रगाढं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्तमेतत् ॥ ९ ॥

* इति मूत्राघात चिकित्सा *

## अथाश्मरी-चिकित्सा ।

### पाषाणवज्रको रसः—

शुद्धसूतं द्विधा गन्धं रसैः श्वेतपुनर्नवैः ।
मर्दयित्वा दिनं खल्ले रुद्ध्वा तद् भूधरे पचेत् ॥ १ ॥
दिनान्ते तत् समुद्धृत्य मर्दयेद् गुडसंयुतम् ।
अश्मरीं बस्तिशूलञ्च हन्ति 'पाषाणवज्रकः' ॥ २ ॥
गोरक्षककर्कटीमूल-क्वाथं कौलत्थकं तथा ।
अनुपानं प्रयोक्तव्यं बुद्ध्वा दोषबलाबलम् ॥ ६ ॥

### त्रिविक्रमो रसः—

मृतताम्रमजाक्षीरैः पाच्यं तुल्यं गते द्रवे ।
तत् ताम्र शुद्धसूतञ्च गन्धकञ्च समं समम् ॥ ४ ॥
निर्गुण्डीस्वरसैर्मर्द्यं दिनं तद्गोलकीकृतम् ।
यामैकं वालुकायन्त्रे पक्त्वा योज्यं द्विगुञ्जकम् ॥ ५ ॥
बीजपूरस्य मूलञ्च सजलञ्चानुपाययेत् ।
रस 'स्त्रिविक्रमो' नाम शर्करामश्मरीं जयेत् ॥ ६ ॥

---

मूत्रकृच्छ्रचिकित्सां मूत्राघातेऽप्यतिदिशति येनौषधेनेति ॥ ६ ॥
इति मूत्राघात-चिकित्सा ।

मूत्रविरोधित्वसामान्यात्तदनन्तरमश्मरीचिकित्सितमुच्यते—

**त्रिविक्रमरसे**—ताम्रतुल्यं छागीदुग्धं दत्त्वा पाच्यं, दुग्धे निःशेषिते ताम्रतुल्यं रसगन्धकं निःक्षिप्य निर्गुण्डीरसैर्दिनैकं संमर्द्य वालुकायन्त्रे दिनैकं पचेत् । मात्रा चास्य गुञ्जाद्वयपरिमिता ॥ ४–६ ॥

---

१ श्वेता पुनर्नवा येषान्ते श्वेतपुनर्नवा रसास्तैः षष्ठ्यर्थबहुव्रीहिः,कार्यकारणभावसन्धः षष्ठ्यर्थः, अतएव भावाद्यर्थकताद्धितं विनैव सामानाधिकरण्यम् ।

लौहप्रयोगः—

अयोरजः श्लक्ष्णपिष्टं मधुना सह योजितम्।
अश्मरीं विनिहन्त्याशु मूत्रकृच्छ्रञ्च दारुणम्॥ ७॥

क्षुद्रयोगौ—

इन्द्रवारुणिकामूलं मरिचं क्षीरपाचितम्।
पर्पटीरससंयुक्तं सप्ताहादश्मरीं जयेत्॥ ८॥
गन्धको जीरकं क्षुद्राफलं टङ्कद्वयं सदा।
अश्मरीं शर्करां मूत्रकृच्छ्रं क्षपयति ध्रुवम्॥ ९॥

* इति अश्मरी-चिकित्सा *

## अथ प्रमेह-चिकित्सा।

हरिशङ्करो रसः—

मृतसूताभ्रकं तुल्यं धात्रीफलनिशाद्रवैः।
सप्ताहं भावयेत् खल्ले योगोऽयं 'हरिशङ्करः'।
माषमात्रां वटीं खादेत् सर्वमेहप्रशान्तये॥ १॥

इन्द्रवटी—

मृतं सूतं मृतं वङ्गमर्जुनस्य त्वचान्वितम्।
तुल्यांशं मर्दयेत् खल्ले शाल्मल्या मूलजैः द्रवैः॥ २॥
दिनान्ते वटिका कार्य्या माषमात्रा प्रमेहहा।
एषा 'इन्द्रवटीनाम्ना' मधुमेहप्रशान्तिकृत्॥ ३॥

वङ्गावलेहः—

वङ्गभस्म द्विवल्लञ्च लेहयेन्मधुना सह।
ततो गुडसमं गन्धं भक्षयेत् कर्षमात्रकम्॥ ४॥
गुडूचीसत्त्वमथवा शर्करासहितं तथा।
सर्वमेहहरो ज्ञेयो 'वङ्गावलेह' उत्तमः॥ ५॥

---

गन्धकमित्यादौ—क्षुद्राफलं बृहतीफलम्॥ ९॥

इत्यश्मरी-चिकित्सा।

वस्तिविकृतिसाम्यादश्मर्य्यनन्तरं प्रमेहचिकित्सितमुच्यते—**हरिशङ्कररसे**—आमलजलैरिति आमलकीरसैस्तदभावे क्वाथैः॥ १॥

### प्रमेहसेतुरसः—

सूताभ्रञ्च वटक्षीरैर्मर्दयेत् प्रहरद्वयम् ।
विशोष्य पक्कमूषायां सर्वरोगे प्रयोजयेत् ॥ ६ ॥
विशेषान्मेहरोगेषु त्रिफलामधुसंयुतम् ।
युञ्जीत वल्लमेकन्तु 'रसेन्द्रस्याऽस्य' वैद्यराट् ॥ ७ ॥

### विडङ्गाद्यलौहम्—

विडङ्गत्रिफलामुस्तैः कणया नागरेण च ।
जीरकाभ्यां युतो हन्ति प्रमेहानतिदारुणान् ।
लौहम् मूत्रविकारांश्च सर्वानेव विनाशयेत् ॥ ८ ॥

### बृहद्धरिशङ्करो रसः—

रसगन्धकलौहञ्च स्वर्णं वङ्गञ्च माक्षिकम् ।
समभागन्तु सम्पिष्य वटिकां कारयेद्भिषक् ॥ ९ ॥
सप्ताहमामलद्रावैर्भावितोऽयं रसेश्वरः ।
'हरिशङ्करनामायं' गहनानन्दभाषितः ।
प्रमेहान् विंशतिं हन्ति सत्यं सत्यं न संशयः ॥ १० ॥

### आनन्दभैरवो रसः—

वङ्गभस्म मृतं स्वर्णं रसं क्षौद्रैर्विमर्दयेत् ।
द्विगुञ्जं भक्षयेन्नित्यं हन्ति मेहं चिरोद्भवम् ।
गुञ्जामूलं तथा क्षौद्रैरनुपानं प्रशस्यते ॥ ११ ॥

### विद्यावागीशो रसः—

मृतसूताभ्रनागञ्च स्वर्णं तुल्यं प्रकल्पयेत् ।
महानिम्बस्य चूर्णन्तु चतुर्भिः सममाहरेत् ॥ १२ ॥
मधुना लेहयेन्माषं लालामेहप्रशान्तये ।
सक्षौद्रं रजनीचूर्णं लेह्यं निष्कद्वयं तथा ।
असाध्यं नाशयेन्मेहं 'विद्यावागीशको' रसः ॥ १३ ॥

---

प्रमेहसेतुरसे—सूतमिति भस्मसूतम् ॥ ६-७ ॥
विडङ्गादिलौहे—लौहं सर्व्वतुल्यम् ॥ ८ ॥
आनन्दभैरवरसे—रसमिति पारदभस्म ॥ ११ ॥
विद्यावागीशरसे—सक्षौद्रं हरिद्राचूर्णमनुलेह्यम् ॥ १२-१३ ॥

मेहमुद्गरो रसः—

रसाञ्जनं विडं दारु बिल्वगोक्षुरदाडिमम् ।
भूनिम्बः पिप्पलीमूलं त्रिकटु त्रिफला त्रिवृत् ॥ १४ ॥
प्रत्येकं तोलकं देयं लौहचूर्णन्तु तत्समम् ।
पलैकं गुग्गुलुं दत्त्वा घृतेन वटिकां कुरु ॥ १५ ॥
माषिका निर्मिता चेयं 'मेहमुद्गर'संज्ञिनी ।
श्रीमद्गहननाथेन लोकनिस्तारकारिणा ॥ १६ ॥
अनुपानं प्रकर्त्तव्यं छागीदुग्धं जलञ्च वा ।
हन्त्याशु विंशतिंमेहान् , मूत्रकृच्छ्रं हलीमकम् ॥ १७ ॥
अश्मरीं कामलां पाण्डुं मूत्राघातमरोचकम् ।
अर्शांसि व्रणकुष्ठञ्च वातरक्तं भगन्दरम् ॥ १८ ॥

मेघनादो रसः—

भस्मसूतं समं कान्तमभ्रकन्तु शिलाजतु ।
शुद्धताप्यं शिलाव्योष त्रिफलाऽङ्कोठजीरकम् ॥ १९ ॥
कार्पासबीजं रजनी-चूर्णं भाव्यञ्च वह्निना ।
विशोष्य विंशतिंवारान् लिह्याच्च मधुना सह ।
माषमात्रो हरेन्मेहं 'मेघनादरसो' महान् ॥ २० ॥

चन्द्रप्रभा वटिका—

मृतसूताभ्रकं लौहं नागं वङ्गं समं समम् ।
एलाबीजं लवङ्गञ्च जातीकोषफलं तथा ॥ २१ ॥
मधुकं मधुयष्टीञ्च धात्रीञ्च समशर्कराम् ।
कर्पूरं खादिरं सारं शताह्वां कण्टकारिकाम् ॥ २२ ॥
अम्लवेतसकं तुल्यं दिनैकं लाङ्गलीद्रवैः ।
भावयेत् मेषदुग्धेन नागवल्ल्या रसैर्दिनम् ॥ २३ ॥

---

**मेहमुद्गररसे**—विडं विडलवणं, दारु दारुहरिद्रा । लौहचूर्णन्तु तत्समामिति सर्व्वचूर्णसममित्यर्थः ॥ १४–१८ ॥

**मेघनादरसे**—कान्तं कान्तलौहं ताप्यं स्वर्णमाक्षिकम् । भाव्यञ्च वह्निनेति चित्रकरसेन भाव्यम् ॥ १९–२० ॥

**चन्द्रप्रभावटिकायाम्**—जातीकोषफलं तथेति जातीकोषं जाती-

वटिका बदरास्थ्याभा कार्य्या 'चन्द्रप्रभा' परा।
भक्षयेद् वटिकामेकां सर्वमेहकुलान्तिकाम् ॥ २४ ॥
धात्रीपटोलपत्राणां कषायं वाऽमृतायुतम्।
सक्षौद्रं भक्षयेच्चानु सर्वमेहप्रशान्तये ॥ २५ ॥

वङ्गेश्वरो रसः इक्षुमेहे—

रसभस्मसमामुक्तं 'वङ्गभस्म' प्रकल्पयेत्।
अस्य माषद्वयं हन्ति मेहान् क्षौद्रसमन्वितम् ॥ २६ ॥

बृहद्वङ्गेश्वरो रसः—

वङ्गभस्म रसं गन्धः रौप्यं कर्पूरमभ्रकम्।
कर्षं कर्षं मानमेषां सूताङ्घ्रि हेममौक्तिकम् ॥ २७ ॥
केशराजरसैर्भाव्यं द्विगुञ्जाफलमानतः।
प्रमेहान् विंशतिञ्चैव[1] साध्यासाध्यमथापि वा ॥२८ ॥
मूत्रकृच्छ्रं तथा पाण्डुं धातुस्थञ्च ज्वरं जयेत्।
हलीमकं रक्तपित्तं वातपित्तकफोद्भवम् ॥ २९ ॥
ग्रहणीमामदोषञ्च मन्दाग्नित्वमरोचकम्।
एतान् सर्वान् निहन्त्याशु वृक्षमिन्द्राशनिर्यथा ॥ ३० ॥
'बृहद्वङ्गेश्वरो' नाम सोमरोगं निहन्त्यलम्।
बहुमूत्रं बहुविधं मूत्रमेहं सुदारुणम् ॥ ३१ ॥
मूत्रातिसारं कृच्छ्रञ्च क्षीणानां पुष्टिवर्द्धनः।
ओजस्तेजस्करो नित्यं स्त्रीषु सम्यक् वृषायते।
बलवर्णकरो रुच्यः शुक्रसञ्जननःपरः ॥ ६२ ॥
छागं वा यदि वा गव्यं पयो वा दधि निर्मलम्।
अनुपानं प्रयुञ्जीत बुद्ध्वा दोषगतिं भिषक् ॥ ३३ ॥

---

फलञ्च ॥ २१–२५ ॥

वङ्गेश्वरे—रससिन्दूरं वङ्गभस्म च समभागं ग्राह्यम् ॥ २६ ॥

बृहद्वङ्गेश्वरे—सूताङ्घ्रि हेममौक्तिकमिति स्वर्णं मुक्ता च प्रत्येकं पारदा-

---

१ "विंशत्याद्याः सदैकत्वे ज्ञेयाः संख्येयसंख्ययोः"–इति–सामानाधिकरण्यमेकवचनान्त-बहुवचनान्तयोः।

दद्याच्च बाले प्रौढे च सेवनार्थं रसायनम् ॥ ३४ ॥

वङ्गादियोगाः—

वङ्गाभ्रथम नागाभ्रं नागं वङ्गञ्च केवलम् ।
मेहरोगे प्रयोक्तव्यं शिलाजतुसमन्विम् ॥ ३५ ॥

कस्तूरीमोदकः—

कस्तूरी वनिता क्षुद्रा त्रिफला जीरकद्वयम् ।
एलाबीजं त्वचा यष्टि-मधुकं मिषि बालकम् ॥ ३६ ॥
शतपुष्पोत्पलं धात्री मुस्तकं भद्रसंज्ञकम् ।
कदलीनां फलं पक्वं खर्जूरं कृष्णतिलकम् ॥ ३७ ॥
कोकिलाक्षस्य बीजञ्च माषमात्रं समं समम् ।
यत्वन्त्येतानि चूर्णानि द्विगुणा सितशर्करा ॥ ३८ ॥
धात्रीरसेन पयसा कूष्माण्डस्वरसेन च ।
विपचेत् पाकविद्वैद्यो मन्दमन्देन वह्निना ॥ ३९ ॥
अवतार्य्य सुशीते च यथालाभं विनिक्षिपेत् ।
अक्षमात्रं प्रयुञ्जीत सर्वमेहप्रशान्तये ॥ ४० ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम ।
सोमरोगं बहुविधं मूत्रातीसारमुल्वणम् ॥ ४१ ॥
मूत्रकृच्छ्रं निहन्त्याशु मूत्राघातं तथाऽश्मरीम् ।
ग्रहणीं पाण्डुरोगञ्च कामलां कुम्भकामलाम् ॥ ४२ ॥
वृष्यो बलकरो हृद्यः शुक्रवृद्धिकरः परः ।
कस्तूरीमोदकश्चायं चरकेण च भाषितः ॥ ४३ ॥

---

च्चतुर्थभागम् ॥ २७-३४ ॥

**वङ्गाभ्रेत्यादि**—वङ्गभस्मसममभ्रं धात्रीरसेन रक्तिकादिक्रमेण बोध्यम् । अथवा नागं सीसकन्तच्चाभ्रसमम् । अथवा केवलं वङ्गं सीसकं वा धात्रीरसेन । अथवा केवलं शिलाजतु मधुना लेह्यम् ॥ ३५ ॥

**कस्तूरीमोदके**—वनिता प्रियङ्गुः, क्षुद्रा कण्टकारी, जीरकद्वयं जीरकं कृष्णजीरकञ्च । उत्पलं कुष्ठम् । सर्व्वचूर्णात् चतुर्गुणेन धात्र्यादिरसेन पाचयेत् ॥ ३६-४३ ॥

### मेहव्रजः—

भस्मसूतं मृतं कान्त लौहभस्म शिलाजतु ।
शुद्धताप्यं शिला व्योषं त्रिफला बिल्वजीरकम् ॥ ४४ ॥
कपित्थं रजनीचूर्णं भृङ्गराजेन भावयेत् ।
त्रिंशद्वारं विशोष्याथ लिह्याच्च मधुना सह ।
निष्कमात्रं हरेन्मेहान् मूत्रकृच्छ्रं सुदारुणम् ॥ ४५ ॥
महानिम्बस्य बीजञ्च षड्निष्कं पेषितञ्च यत् ।
पलतण्डुलतोयेन घृतनिष्कद्वयेन च ।
एकीकृत्य पिबेच्चानु हन्ति मेहं चिरोत्थितम् ॥ ४६ ॥

### कुमारिकायोगः—

कुमारी केवला देया चेषल्लवणसंयुता ।
प्रमेहं हन्ति सकलं सप्ताहात् परतो नृणाम् ॥ ४७ ॥

### मेहकेशरी—

मृतं वङ्गं सुवर्णञ्च कान्तलौहञ्च पारदम् ।
मुक्तां गुडत्वचञ्चैव सूक्ष्मैलां नागकेशरम् ॥ ४८ ॥
समभागं विचूर्ण्याथ कन्यानीरेण भावयेत् ।
द्विमाषां वटिकां खादेद् दुग्धान्नं प्रपिबेत् ततः ।
प्रमेहं नाशयत्याशु 'केशरी' करिणं यथा ॥ ४९ ॥
शुक्रप्रमेहं शमयेत् त्रिरात्रान्नात्र संशयः ।
चिरजातं प्रमेहञ्च मधुमेहञ्च नाशयेत् ॥ ५० ॥

### योगेश्वरो रसः—

सूतकं गन्धको लौहः नागञ्चापि वराटिका ।
ताम्रकं वङ्गभस्मापि व्योमकञ्च समांशिकम् ॥ ५१ ॥
सूक्ष्मैलापत्रमुस्तञ्च विडङ्गं नागकेशरम् ।
रेणुकाऽऽमलकञ्चैव पिप्पलीमूलमेव च ॥ ५२ ॥
एषाञ्च द्विगुणं भागं मर्दयित्वा प्रयत्नतः ।
भावना तत्र दातव्या धात्रीफलरसेन च । ॥ ५३ ॥
मात्रा चणकतुल्या च गुडिकेयं प्रकीर्तिता ।

---

मेहवज्रे—ताप्यं स्वर्णमाक्षिकं, शिला मनःशिला ॥ ४४-४६ ॥

प्रमेहं बहुमूत्रञ्च, अश्मरीं मूत्रकृच्छ्रकम् ॥ ५४ ॥
व्रणं हन्ति महाकुष्ठं ह्यर्शांसि च भगन्दरम् ।
'योगेश्वरो' रसो नाम महादेवेन भाषितः ॥ ५५ ॥

* इति प्रमेह-चिकित्सा *

## अथ सोमरोग-चिकित्सा ।

### तालकेश्वरो रसः—

तालं सूतं समं गन्धं मृतलौहाभ्रवङ्गकम् ।
मर्दयेन्मधुना चैव रसोऽयं 'तालकेश्वरः' ॥ १ ॥
माषमात्रं भजेत् क्षौद्रैर्बहुमूत्रप्रशान्तये ।
उडुम्बरफलं पक्वं चूर्णितं कर्षमानतः ।
संलेह्यं मधुना सार्द्धमनुपानं सुखावहम् ॥ २ ॥

### गगनादिलौहम्—

गगनं त्रिफला लौहं कुटजं कटुकत्रयम् ।
पारदो गन्धकश्चैव त्रिपटङ्कणसर्जिकाः ॥ ३ ॥
त्वगेला तेजपत्रञ्च वङ्गं जीरकयुग्मकम् ।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥ ४ ॥
तदर्द्धं चैत्रकं चूर्णं कर्षैकं मधुना लिहेत् ।
अवश्यं विनिहन्त्याशु मूत्राऽतीसारसोमकम् ॥ ५ ॥

### सोमनाथ रसः—

कर्षं जारितलौहञ्च तदर्द्धं रसगन्धकम् ।
एलापत्रं निशायुग्मं जम्बूवीरणगोक्षुरम् ॥ ६ ॥
विडङ्गं जीरकं पाठा धात्रीदाडिमटङ्कणम् ।
चन्दनं गुग्गुलुर्लोध्र-शालार्जुनरसाञ्जनम् ॥ ७ ॥

---

**योगेश्वररसे**—समांशिकमित्येकभागसमं बोध्यम् ॥ ५१-५५ ॥

इति प्रमेह-चिकित्सा ।

मूत्रगतविकारसाधर्म्यात् तथा प्रमेहान्तरस्य प्रायस्तुल्यत्वात् प्रमेहाधिकार एव प्रमेहविशेषस्य सोमरोगस्य चिकित्सामाह-**तालमित्यादि** १-२

**गगनादिलौहे**--गगनमभ्रम् । सोमकं सोमरोगम् ॥ ३-५ ॥

छागीदुग्धेन वटिकां कारयेद् दशरक्तिकाम् ।
निर्मितो 'नित्यनाथेन सोमनाथ'रसस्त्वयम् ॥ ८ ॥
सोमरोगं बहुविधं प्रदरं हन्ति दुर्जयम् ।
योनिशूलं मेढ्रशूलं सर्वजं चिरकालजम् ।
बहुमूत्रं विशेषेण दुर्जयं हन्त्यसंशयम् ॥ ९ ॥

बृहत् सोमनाथरसः—

हिङ्गुल-सम्भवं सूतं पालिधा-रसमर्दितम् ।
रण्डाशोधितगन्धश्च तेनैव कज्जलीकृतम् ॥ १० ॥
तद्द्वयोर्द्विगुणं लौहं कन्यारसविमर्दितम् ।
अभ्रकं वङ्गकं रौप्यं खर्परं माक्षिकं तथा ॥ ११ ॥
सुवर्णञ्च समं सर्वं प्रत्येकञ्च रसार्द्धकम् ।
तत् सर्वं कन्यकाद्रावैर्मर्दयेद् भावयेत् ततः ॥ १२ ॥
भेकपर्णीरसेनैव गुञ्जाद्वयवटीं ततः ।
मधुना भक्षयेच्चापि सोमरोगनिवृत्तये ॥ १३ ॥
प्रमेहान् विंशतिं हन्ति बहुमूत्रञ्च सोमकम् ।
मूत्रातिसारं कृच्छञ्च मूत्राघातं सुदारुणम् ॥ १४ ॥
बहुदोषं बहुविधं प्रमेहं मधुसंज्ञकम् ।
हस्तिमेहमिक्षुमेहं लालामेहं विनाशयेत् ॥ १५ ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सोमसंज्ञकम् ।
नाशयेद् बहुमूत्रञ्च प्रमेहमविकल्पतः ॥ १६ ॥

सोमेश्वरो रसः—

शालार्जुनं लोध्रकञ्च कदम्बागुरुचन्दनम् ।
अग्निमन्थो निशायुग्मं धात्रीदाडिमगोक्षुरम् ॥ १७ ॥
जम्बूवीरणमूलञ्च भागमेषां पलार्द्धकम् ।
रसगन्धकधान्याब्दमेलां पत्रं तथाऽभ्रकम् ॥ १८ ॥
लौहं रसाञ्जनं पाठा विडङ्गं टङ्कजीरकम् ।

---

सोमनाथरसे—रसगन्धादीनां प्रत्येकं लौहार्द्धमानम् ॥ ॥ ६–९ ॥
बृहत्सोमनाथरसे—रण्डा मूषिकपर्णी ॥ १०–१६ ॥
सोमेश्वररसे—शालं शालसारं, अर्ज्जुनमिति अर्ज्जुनवल्कलं, निशा-

प्रत्येकं पालकं भागं पलार्द्धं गुग्गुलोरपि ॥ १९ ॥
घृतेन वटिकां कृत्वा खादेत् षोडशरक्तिकाम् ।
गहनानन्दनाथेन रसो यत्नेन निर्मितः ॥ २० ॥
'सोमेश्वरो' महातेजाः सोमरोगं निहन्त्यलम् ।
एकजं द्वन्द्वजञ्चैव सन्निपातसमुद्भवम् ।
मूत्राघातं मूत्रकृच्छ्रं कामलाञ्च हलीमकम् ॥ २१ ॥
भगन्दरोपदंशौ च विविधान् पैडकान् व्राणान् ।
विस्फोटार्बुदकण्डूश्च सर्वमेहं विनाशयेत् ॥ २२ ॥
* इति रसेन्द्रसारसङ्ग्रहे सोमरोग चिकित्सा *

## अथ स्थौल्य-चिकित्सा ।

### त्र्यूपणाद्यं लौहम्—

त्र्यूषणं विजया चव्यं चित्रकं विडमौद्भिदम् ।
वागुजी सैन्धवञ्चैव सौवर्चलसमन्वितम् ॥ १ ॥
अयश्चूर्णेन संयुक्तं भक्षयेन्मधुसर्पिषा ।
स्थौल्यापकर्षणं श्रेष्ठं बलवर्णाग्निवर्द्धनम् ॥ २ ॥
मेहघ्नं कुष्ठशमनं सर्वव्याधिहरं परम् ।
नाऽहारे यन्त्रणा कार्या न विहारे तथैव च ।
'त्र्यूषणाद्य'मिदं लौहं रसायनवरोत्तमम् ॥ ३ ॥

### बडवाग्निलौहम्—

सूतभस्म सतालञ्च लौहं ताम्रं समं समम् ।
मर्दयेत् सूर्य्यपत्रेण चास्य वल्लं प्रयोजयेत् ॥ ४ ॥
मधुना स्थूलरोगे च शोथे शूले तथैव च ।

---

युग्ममिति हरिद्राद्वयम् ॥ १७-२२ ॥

इति सोमरोग-चिकित्सा ।

प्रमेहवत् स्थौल्यस्यापि व्यायामसाध्यत्वात् तथा दुष्टमेदोजन्यत्वाच्च प्रमेहानन्तरं स्थौल्यचिकित्सामाह—त्र्यूषणादिलौहे त्र्यूषणं त्रिकटु, विजया शक्राशनं, वागुजी सोमराजी, लौहमत्र सर्व्वचूर्णसमम् ॥ १-३ ॥

मध्वाज्यमनुपानञ्च देयं वाऽपि कफोल्बणे ॥ ५ ॥

बडवाग्निरसः—

शुद्धसूतं समो गन्धः ताम्रं तालं समं समम् ।
अर्कक्षीरैर्दिनं मर्द्यं क्षौद्रैर्लेह्यं त्रिगुञ्जकम् ।
बडवाग्निरसो नाम्ना स्थौल्यमाशु नियच्छति ॥ ६ ॥

* इति रसेन्द्रसारसङ्ग्रहे स्थौल्य-चिकित्सा *

## अथ उदररोग-चिकित्सा ।

त्रैलोक्यसुन्दरो रसः—

शुद्धसूतं द्विधा गन्धं ताम्राभ्रं सैन्धवं विषम् ।
कृष्णजीरं विडङ्गञ्च गुडूचीसत्त्वचित्रकम् ॥ १ ॥
उग्रगन्धा यवक्षारं प्रत्येकं कर्षमात्रकम् ।
निर्गुण्डिकाद्रवैरग्नि-बीजपूरद्रवैर्दिनम् ॥ २ ॥
मर्दयेत् शोषयेत् सोऽयं रसस्त्रैलोक्यसुन्दरः ।
गुञ्जाद्वयं घृतैर्लेह्यं वातोदरकुलान्तकम् ॥ ३ ॥
वह्निचूर्णं यवक्षारं प्रत्येकञ्च पलद्वयम् ।
घृतप्रस्थं विपक्तव्यं गोमूत्रैश्च चतुर्गुणैः ।
घृतावशेषं कर्त्तव्यं कर्षमात्रं पिबेदनु ॥ ४ ॥

वैश्वानरी वटी—

शुद्धसूतं द्विधा गन्धं मृतार्कायः शिलाजतु ।
रसमानं प्रदातव्यं रसस्य द्विगुणं विषम् ॥ ५ ॥
त्रिकटु चित्रकं वीरा निर्गुण्डी मूषलीरजः ।
अजमोदा त्रिषांशेन प्रत्येकञ्च नियोजयेत् ॥ ६ ॥
निम्बपञ्चाङ्गुलक्काथैर्भावना चैकविंशतिः ।

---

**वडवाग्निलौहे**—सूर्य्यपत्रेणेति अर्कपत्ररसेन ॥ ४–५ ॥

इति स्थौल्य–चिकित्सा ।

उदरोत्सेधसाधर्म्म्यात् स्थौल्यानन्तरमुदराचिकित्सितमुच्यते **शुद्धसूतमित्यादि** ॥ १–४ ॥

**वैश्वानरीवटिकायां**—अर्कस्ताम्रं, अयो लौहं, मूषलीरजः तालमूली·

भृङ्गराजरसैः सप्त दत्वा क्षौद्रैर्विलोडयेत् ॥ ७ ॥
भक्षयेद्बदरास्थ्याभां वटिकां तां दिवा निशि।
श्लेष्मोदरं निहन्त्याशु नाम्ना 'वैश्वानरी वटी' ॥ ८ ॥
देवदारुवह्निमूल-कल्कं क्षीरेण पाययेत्।
भोजनं मेषदुग्धेन कुलत्थानां रसेन तु ॥ ९ ॥

जलोदरारिसः—

पिप्पली मरिचं ताम्रं रजनीचूर्णसंयुतम्।
स्नुहीक्षीरैर्दिनं मर्द्यं तुल्यं जैपालबीजकम् ॥ १० ॥
निष्कं खादेद्विरेकः स्यात् सद्यो हन्ति जलोदरम्।
रेचनानाञ्च सर्वेषां दध्यन्नं स्तम्भने हितम्।
दिनान्ते च प्रदातव्यमन्नं वा मुद्गयूषकम् ॥ ११ ॥

महावह्निरसः—

चतुः सूतस्य गन्धाष्टौ रजनीत्रिफलाशिलाः।
प्रत्येकञ्च द्विभागं स्यात् त्रिवृत् जैपालचित्रकम् ॥ १२ ॥
प्रत्येकञ्च त्रिभागं स्याद्दन्ती त्र्यूषणजीरकम्।
प्रत्येकमष्टभागं स्यादेकीकृत्य विचूर्णयेत् ॥ १३ ॥
जयन्तीस्नुक्पयोभृङ्ग-वह्निवातारितैलकैः।
प्रत्येकेन क्रमाद्भाव्यं सप्तवारं पृथक् पृथक् ॥ १४ ॥
'महावह्निरसो' नाम्ना निष्कमुष्णजलैः पिबेत्।
विरेचनं भवेत् तेन तक्रं भक्तं ससैन्धवम् ॥ १५ ॥
दिनान्ते दापयेत् पथ्यं वर्जयेच्छीतलं जलम्।
सर्वोदरहरः प्रोक्तः श्लेष्मवातहरः परः ॥ १६ ॥

---

चूर्ण, विषांशेनेति विषार्द्धभागेन, पञ्चाङ्गुलक्वाथै रेरण्डमूलक्वाथैः ॥ ५–९ ॥

**जलोदरारिरसे**—तुल्यं जैपालबीजकमिति सर्व्वचूर्णसमं जैपालचूर्णम् ॥ १०–११ ॥

**महावह्निरसे**—चतुःसूतस्येति चतुर्भागः सूतस्य। हरिद्रादि–हरीतक्यन्तानां प्रत्येकं द्विभागं तेन प्रत्येकं सूतार्द्धम्। त्रिवृतादिचित्रकान्तानां प्रत्येकं त्रिभागः। दन्त्यादिजीरकान्तानां प्रत्येकञ्चाष्टौ भागाः तेन गन्ध-

त्रैलोक्योडुम्बरो रसः—

द्वौ भागौ शिवबीजस्य चत्वारो गन्धकस्य च।
अभ्रवह्निविडङ्गानां गुडूचीसत्त्वनागयोः ॥ १७ ॥
कृष्णजीर-कटूनाञ्च लवणक्षारयोरपि।
प्रत्येकं भागमादाय मर्दयेत् सुरसाद्रवैः ॥ १८ ॥
बीजपूररसैर्भूयो मर्दयित्वा विशोषयेत्।
'त्रैलोक्योडुम्बरो' नाम वातोदरकुलान्तकः ॥ १९ ॥
गुञ्जाद्वयं ततश्चास्य ददीत घृतसंयुतम्।
भोजयेत् स्निग्धमुष्णञ्च पायसञ्च विवर्जयेत् ॥ २० ॥

इच्छाभेदी रसः—

शुण्ठीमरिचसंयुक्तं रसगन्धकटङ्कणम्।
जैपालो द्विगुणः प्रोक्तः सर्वमेकत्र चूर्णयेत् ॥ २१ ॥
इच्छाभेदी द्विगुञ्जः स्यात् सितया सह दापयेत्।
पिबेत्तु चुल्लकान् यावत् तावद्वारान् विरेचयेत्।
तक्रौदनञ्च दातव्यं पथ्यमत्र विजानता ॥ २२ ॥

पिप्पल्याद्यं लौहम्—

पिप्पलीमूलचित्राभ्र-त्रिकत्रयेन्दुसैन्धवम्।
सर्वचूर्णसमं लौहं हन्ति सर्वोदरामयम् ॥ २३ ॥

उदराररिसः—

पारदं शिखितुत्थञ्च जैपालं पिप्पलीसमम्।
आरग्वधफलान्मज्जा वज्रीक्षीरेण मर्दयेत्।
माषमात्रां वटीं खादेत् स्त्रीणां जलोदरं जयेत् ॥ २४ ॥
चिञ्चाफलरसञ्चानु पथ्यं दध्योदनं हितम्।
दकोदरहरञ्चैव तीव्रेण रेचनेन च ॥ २५ ॥

---

कसमत्वम् ॥ १२-१६ ॥

**त्रैलोक्यडुम्बुररसे**—शिवबीजं पारदः, नागं सीसकम्। अभ्रादिक्षारान्तानाञ्चैकादशद्रव्याणां प्रत्येकमेको भागः ॥ १७-२० ॥

**उदराररिसे**—वज्री.क्षीरेण स्नुहीक्षीरेण ॥ २४-२५ ॥

वङ्गेश्वरो रसः—

सूतभस्म वङ्गभस्म भागैकं सम्प्रकल्पयेत्।
गन्धकं मृतताम्रञ्च प्रत्येकञ्च चतुःपलम्॥ २६॥
अर्कक्षीरैर्दिनं मर्द्यं सर्वं तद्गोलकीकृतम्।
रुद्ध्वा तद्भूधरे पक्त्वा पुटकेन समुद्धरेत्॥ २७॥
एष 'वङ्गेश्वरो' नाम प्लीहगुल्मोदरान् जयेत्।
घृतैर्गुञ्जाद्वयं लेह्यं निष्कां श्वेतपुनर्नवाम्।
गवां मूत्रैः पिबेच्चानु रजनीं वा गवां जलैः॥ २८॥

* इति उदररोग चिकित्सा *

---

## अथ प्लीहरोग-चिकित्सा।

रोहीतकलौहम्—

रोहितक-समायुक्तं त्रिकत्रययुतं त्वयः।
प्लीहानमग्रमांसञ्च यकृच्चैव विनाशयेत्॥ १॥

लोकनाथो रसः—

पारदं गन्धकञ्चैव सममागं विमर्दयेत्।
मृताभ्रं रसतुल्यञ्च पुनस्तत्रैव मर्दयेत्॥ २॥
रसात् द्विगुणलौहञ्च लौहतुल्यञ्च ताम्रकम्।
भस्म वराटिकायाश्च ताम्रतस्त्रिगुणं क्षिपेत्॥ ३॥
नागवल्लीरसेनैव मर्दयेत् यत्नतो भिषक्।
पुटेद् गजपुटे विद्वान् स्वाङ्गशीतं समुद्धरेत्॥ ४॥
यकृत्प्लीहोदरं गुल्मं श्वायथुञ्च विनाशयेत्।
पिप्पलीमधुसंयुक्तां सगुडां वा हरीतकीम्।

---

वङ्गेश्वरे—भागैकं सम्प्रकल्पयेदिति प्रत्येकं पलमित्यर्थः॥ २६-२८॥

इत्युदररोग-चिकित्सा।

---

प्लीहवृद्ध्या उदरसम्भवादनन्तरं प्लीहचिकित्सामाह—रोहितक-लौहे—रोहितको रोहनति ख्यातो वृक्षः, अस्य वल्कलं ग्राह्यम्। अत्र

---

१ "रोहीरोहितकः प्लीहशत्रुर्दाडिमपुष्पकः"। वनौषधिः।

गोमूत्रञ्च पिबेच्चानु गुडं वा जीरकान्वितम् ॥ ५ ॥

बृहल्लोकनाथो रसः—

शुद्धसूतं द्विधा गन्धं खल्ले कृत्वा तु कज्जलम् ।
सूततुल्यं जारिताभ्रं मर्दयेत् कन्यकाम्बुना ॥ ६ ॥
ततो द्विगुणितं दद्यात् ताम्रं लौहं प्रयत्नतः ।
काकमाचीरसेनैव सर्वं तत् परिमर्दयेत् ॥ ७ ॥
सूताच्च द्विगुणं गन्धं वराटीसम्भवं रजः ।
पिष्ट्वा जम्बीरनीरेण मूषायुग्मं प्रकल्पयेत् ॥ ८ ॥
तन्मध्ये गोलकं क्षिप्त्वा यत्नेन छादयेद् भिषक् ।
शरावसम्पुटं कृत्वा मृन्दस्मलवणाम्बुभिः ॥ ९ ॥
शरावसन्धिमालिप्य चातपे शोषयेत् क्षणम् ।
ततो गजपुटं दत्त्वा साङ्गशीतं समुद्धरेत् ॥ १० ॥
पिष्ट्वा तु सर्वमेकत्र स्थापयेद् भाजने शुभे ।
खादेत् वल्लद्वयञ्चास्य मूत्रञ्चानु पिबेन्नरः ॥ ११ ॥
मधुना पिप्पलीचूर्णं सगुडां वा हरीतकीम् ।
अजाजीं वा गुडेनैव भक्षयेत् तुल्ययोगतः ॥ १२ ॥
यकृत्प्लीहोदरोगञ्च श्वयथुञ्च विनाशयेत् ।
वाताष्ठीलाञ्च कमठीं प्रत्यष्ठीलां तथैव च ॥ १३ ॥
कांस्यक्रोडाग्रमांसञ्च शूलञ्चैव भगन्दरम् ।
वह्निमान्द्यञ्च कासञ्च 'लोकनाथरसोत्तमः' ॥ १४ ॥

ताम्रेश्वरवटी—

हिङ्गु त्रिकटुकञ्चैवापामार्गस्य च पत्रकम् ।
अर्कपत्रं स्नुहीपत्रं तथा च समभागिकम् ॥ १५ ॥
सैन्धवं तत्समं ग्राह्यं लौहं ताम्रञ्च तत्समम् ।
"सेयं 'ताम्रेश्वरवटी' नाशयेज्जाठराऽग्यमान्" ।
प्लीहानं तु यकृतं[१] गुल्ममामवातं सुदारुणम ॥ १६ ॥

---

सर्व्वचूर्णसमं लौहं मधुना लौहपात्रे विमर्द्य रक्तिकादिक्रमेण लिह्यात् ॥ १ ॥
**ताम्रेश्वरे**—अपामार्गपत्रस्य तथा अर्कपत्रस्य तथा स्नुहीपत्रस्य च

---

१ यकृत्-शब्दो नपुंसकः ।

अर्शांसि घोरमुदरं मुर्च्छां पाण्डुं हलीमकम्।
ग्रहणीमतिसारञ्च यक्ष्माणं शोथमेव च ॥ १७ ॥

अग्निकुमारलौहम्—

तुत्थरामठटङ्कानि सैन्धवं धान्यजीरकम्।
यमानी मरिचं शुण्ठी लवङ्गैला विडङ्गकम् ॥ १८ ॥
प्रत्येकं तोलकं चूर्णं "लौहचर्णन्तु तत्समम्"।
रसस्य गन्धकस्यापि पलैकं कज्जलीकृतम् ॥ १९ ॥
घृतेन मधुना खाद्यं लौहमग्निकुमारकम्।
यकृत्प्लीहोदरहरं गुल्मञ्चापि हलीमकम् ॥ २० ॥
बलवर्णाग्निजननं कान्तिपुष्टिविवर्द्धनम्।
श्रीमद्गहननाथेन निर्मितं विश्वसम्पदे ॥ २१ ॥

प्राणवल्लभो रसः—

लौहं ताम्रं वराटञ्च तुत्थं हिङ्गु फलत्रिकम्।
स्नुहीमूलं यवक्षारः जैपालं टङ्कणं त्रिवृत् ॥ २२ ॥
प्रत्येकञ्च पलं ग्राह्यं छागीदुग्धेन पेषितम्।
चतुर्गुञ्जां वटीं खादेद्वारिणा मधुनाऽपि वा ॥ २३ ॥
'प्राणवल्लभनामा'ऽयं गहनानन्दभाषितः।
दोषं रोगञ्च संवीक्ष्य युक्त्या वा त्रुटिवर्द्धनम् ॥ २४ ॥
निहन्ति कामलां पाण्डुमानाहं श्लीपदार्बुदम्।
गलगण्डं गण्डमालां व्रणानि च हलीमकम् ॥ २५ ॥
अपचीं वातरक्तञ्च कण्डूं विस्फोटकुष्ठकम्।
नातः परतरः श्रेष्ठः कामलाऽर्त्तिभयेष्वपि ॥ २६ ॥

यकृदरिलौहम्—

द्विकर्षं लौहचूर्णस्य चाभ्रकस्य पलार्द्धकम्।
कर्षं शुद्धं मृतं ताम्रं लिम्पाकाङ्घ्रित्वचं पलम ॥ २७ ॥
मृगाजिनभस्मपलं सर्वमेकत्र कारयेत्।

---

क्षारमित्युपदिशन्ति वृद्धाः ॥ १५-१७ ॥

अग्निकुमारलौहे—रामठं हिङ्गु ॥ १८-२१ ॥

प्राणवल्लभरसे—फलत्रिकं त्रिफला ॥ २२-२६ ॥

नवगुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ॥ २८ ॥
यकृत्प्लीहोदरञ्चैव कामलाञ्च हलीमकम् ।
कासं श्वासं ज्वरं हन्याद् बलवर्णाग्निकारकम् ।
'यकृदरि' रिवदं लौहं वातगुल्मविनाशनम् ॥ २९ ॥

मृत्युञ्जयलौहम्—

शुद्धसूतं समं गन्धं जारिताभ्रं समं समम् ।
गन्धकाद् द्विगुणं लौहं मृतताम्रं चतुर्गुणम् ॥ ३० ॥
द्विक्षारं टङ्कणं विडं वराटमथ शङ्खकम् ।
चित्रकं कुनटी तालं कटुकी रामठं तथा ॥ ३१ ॥
रोहीतकं त्रिवृच्चिञ्चा विशाला धव-लाङ्कठम् ।
अपामार्गः ताललण्डमम्लिका च निशायुगम् ॥ ३२ ॥
कानकं तुत्थकञ्चैव यकृन्मर्दं रसाञ्जनम् ।
एतानि समभागानि चूर्णयित्वा विभावयेत् ॥ ३३ ॥
आर्द्रकस्वरसेनैव गुडूच्याः स्वरसेन च ।
मधुनः कुडवैर्भाव्यं वटिका माषमात्रतः ॥ ३४ ॥
अनुपानं प्रदातव्यं बुद्ध्वा दोषानुसारतः ।
भक्षयेत् प्रातरुत्थाय सर्वरोगकुलान्तकम् ॥ ३५ ॥
प्लीहानं ज्वरमुग्रञ्च कासञ्च विषमज्वरम् ।
चिरजं कुलजञ्चैव श्लीपदं हन्ति दारुणम् ॥ ३६ ॥
रोगानीकविनाशाय धन्वन्तरिकृतं पुरा ।
मृत्युञ्जयमिदं लौहं सिद्धिदं शुभदं नृणाम् ॥ ३७ ॥

प्लीहार्णवो रसः—

हिङ्गुलं गन्धकं टङ्कमभ्रकं विषमेव च ।
प्रत्येकं पालिकं भागं चूर्णयेदतिचिक्कणम् ॥ ३८ ॥

---

यकृदरिलौहे—लिम्पाकाङ्घ्रित्वचं लिम्पाकमूलवल्कलम् ॥ २७-२९ ॥

मृत्युञ्जयलौहे—जारिताभ्रमिति मृताभ्रम् । मृतताम्रं चतुर्गुणमिति भस्मताम्रं गन्धकाच्चतुर्गुणमित्यर्थः । कुनटी मनःशिला, चिञ्चा तिन्तिडीत्वग्भस्म । धवं 'खदिरः' ॥ ३०-३७ ॥

प्लीहार्णवे—जम्बीररसेन शोधितं हिङ्गुलं ग्राह्यम् । विषञ्चात्र गोमू-

पिप्पलीं मरिचञ्चैव प्रत्येकञ्च पलार्द्धकम् ।
मर्दयित्वा वटीं कुर्य्यात् वल्लमात्रां प्रयत्नतः ॥ ३९ ॥
सेव्या शेफालिदलजैर्वटी माक्षिकसंयुता ।
प्लीहानं षट्प्रकारञ्च हन्ति शीघ्रं न संशयः ॥ ४० ॥
ज्वरं मन्दानलञ्चैव कासं श्वासं वमिं भ्रमिम् ।
'प्लीहार्णव' इति ख्यातो गहनानन्दभाषितः ॥ ४१ ॥

प्लीहशार्दूलो रसः—

सूतकं गन्धकं व्योषं समभागं पृथक् पृथक् ।
एभिः समं ताम्रभस्म योजयेच्चैव बुद्धिमान् ॥ ४२ ॥
मनःशिलां वराटञ्च तुत्थं रामठलौहकम् ।
जयन्तीं रोहितञ्चैव क्षारटङ्कणसैन्धवम् ॥ ४३ ॥
विडं चित्रं कानकञ्च रसतुल्यं पृथक् पृथक् ।
भावयेत् त्रिदिनं यावत् त्रिवृच्चित्रकणाऽऽर्द्रकैः ॥ ४४ ॥
गुञ्जामात्रां वटीं खादेत् सद्यः प्लीहविनाशिनीम् ।
पिप्पलीमधुसंयुक्तां द्विगुञ्जां वा प्रयोजयेत् ॥ ४५ ॥
प्लीहानमग्रमांसञ्च यकृद्गुल्मं सुदुस्तरम् ।
आमाशयेषु सर्वेषु चोदरे शोथविद्रधौ ॥ ४६ ॥
अग्निमान्द्ये ज्वरे चैव प्लीह्नि सर्वज्वरेषु च ।
श्रीमद्गहननाथेन भाषितः 'प्लीहशार्दूलः' ॥ ४७ ॥

प्लीहारिरसः—

द्विकर्षं लौहभस्मापि कर्षं ताम्रं प्रदापयेत् ।
शुद्धसूतं तथा गन्धं कर्षमानं भिषग्वरः ॥ ४८ ॥
मृगाजिनभस्मपलं लिम्पकाङ्घ्रित्वचः पलम् ।
एवं भागक्रमेणैव कुर्य्यात् 'प्लीहारिकां' वटीम् ॥ ४९ ॥
नवगुञ्जामितां खादेच्चाऽथ नित्यं हि पूतवाक् ।
प्लीहानं यकृतं गुल्मं हन्त्यवश्यं न संशयः ॥ ५० ॥

---

त्रशोधितम् । शेफालिदलजैरित्यत्र रसैरिति शेषः ॥ ३८-४१ ॥

प्लीहशार्दूलरसे—क्षारं यवक्षारं, कानकं जैपालम् ॥ ४२-४७ ॥

प्लीहारिरसे–शुद्धसूतं तथा गन्धं कर्षमानामित्यत्र प्रत्येकमिति शेषः ॥ ४८—५० ॥

### अपरप्लीहारिरसः—

कर्षैकं तालचूर्णस्य तत्पादांशं सुवर्णकम्।
पलार्द्धं मृतताम्रञ्च तत्समं शुद्धमभ्रकम् ॥ ५१ ॥
मृगाजिनस्य भस्मापि कर्षमत्र प्रदापयेत्।
लिम्पाकाङ्घ्रित्वचस्तद्वत् सर्वमेकत्र कारयेत् ॥ ५२ ॥
रसगुञ्जाप्रमाणेन वटिकां कारयेत् ततः।
मधुना वह्निचूर्णेन खादेन्नित्यं यथाबलम् ॥ ५३ ॥
असाध्यमपि प्लीहानं हन्त्यवश्यं न संशयः।
यकृतं पाण्डुरोगञ्च गुल्मादिकभगन्दरान् ॥ ५४ ॥

### लौहमृत्युञ्जयो रसः—

रसगन्धकलौहाभ्रं कुनटीं मृतताम्रकम्।
विषमुष्टिवराटञ्च तुत्थं शङ्खं रसाञ्जनम् ॥ ५५ ॥
जातीफलञ्च कटुकीं द्विक्षारं कानकं तथा।
व्योषं हिङ्गु सैन्धवञ्च प्रत्येकं सूततुल्यकम् ॥ ५६ ॥
श्लक्ष्णचूर्णीकृतं सर्वमेकत्र भावयेत् ततः
सूर्य्यावर्त्तरसेनैव बिल्वपत्ररसेन च ॥ ५७ ॥
सूर्य्यावर्त्तेन मतिमान् वटिकां कारयेत् ततः।
प्लीहानं यकृतं गुल्ममष्ठीलाञ्च विनाशयेत् ॥ ५८ ॥
अग्रमांसं तथा शोथं तथा सर्वोदराणि च।
वातरक्तञ्च कमठं चान्तर्विद्रधिमेव च ॥ ५९ ॥

### महामृत्युञ्जयो रसः—

रसगन्धकलौहाभ्रं कुनटी तुत्थताम्रकम्।
सैन्धवञ्च वराटञ्च वागुजी विडशङ्खकम् ॥ ६० ॥
चित्रकं हिङ्गु कटुकी द्विक्षारं कट्फलं तथा।
रसाञ्जनं जयन्ती च टङ्कणं समभागिकम् ॥ ६१ ॥
एतत्सर्वं विचूर्ण्याथ दिनमेकं विभावयेत्।

---

**अपरप्लीहारिरसे**—रसगुञ्जा षड्गुञ्जेत्यर्थः ॥ ५१—५४ ॥
**लौहमृत्युञ्जयरसे**—कानकं जैपालफलम् ॥ ५५—५९ ॥
**महामृत्युञ्जये**—वागुजी हाकुचीति ख्याता, केचित् तु सोमराजी-

आर्द्रकस्वरसेनैव गुडूच्याः स्वरसेन च ॥ ६२ ॥
गुञ्जामात्रां वटीं कृत्वा भक्षयेन्मधुना सह ।
नानारोगप्रशमनो यकृद्गुल्मोदराणि च ॥ ६३ ॥
अग्रमांसं तथा प्लीहमग्निमान्द्यमरोचकम् ।
एतान् सर्वान् निहन्त्याशु भास्करस्तिमिरं यथा ।
'महामृत्युञ्जयो' नाम महेशेन प्रकाशितः ॥ ६४ ॥

बृहद्गुडपिप्पली—

विडङ्गं त्र्यूषणं हिङ्गु कुष्ठं लवणपञ्चकम् ।
त्रिक्षारं फेनकं चव्यं श्रेयसी कृष्णजीरकम् ॥ ६५ ॥
तालपुष्पोद्भवं क्षारं नाड्या कूष्माण्डकस्य च ।
अपामार्गोद्भवं क्षारं चिञ्चायाश्चित्रकं तथा ॥ ६६ ॥
एतानि समभागानि पुराणो द्विगुणो गुडः ।
गुडतुल्यं प्रदातव्यं चूर्णञ्चैव कणोद्भवम् ॥ ६७ ॥
मर्दयित्वा दृढे पात्रे मोदकानुपकल्पयेत् ।
भक्षयेद् वर्द्धयेन्नित्यं प्लीहानं हन्ति दुस्तरम् ॥ ६८ ॥
प्रमेहं पाण्डुरोगञ्च कामलां वह्निमान्द्यकम् ।
यकृतं पञ्चगुल्मञ्च तूदरं सर्वरूपकम् ॥ ६९ ॥
जीर्णज्वरं तथा शोथं कासं पञ्चविधं तथा ।
अश्विभ्यां निर्मिता ह्येषा 'सुबृहद्गुडपिप्पली' ॥ ७० ॥

ताम्रकल्पकम्—

अक्ष-पारद-गन्धाश्च कर्षद्वयमिताः पृथक् ।
सर्वैः समं भवेत् ताम्रं जम्बीराम्लेन मर्दयेत् ॥ ७१ ॥
सूर्य्यावर्त्तरसैः पश्चात् कणा-मोचरसेन च ।
योजयेत् तीव्रघर्मे तु यावत् सर्वन्तु जीर्य्यति ॥ ७२ ॥
जम्बीरस्य रसैर्भूयो रसं दण्डेन चालयेत् ।
दृढे शिलामये पात्रे चूर्णयेदतिशोभनम् ॥ ७३ ॥

---

त्याहुः ॥ ६०—६४ ॥

**गुडपिप्पलिकायां**—त्र्यूषणं त्रिकटुकं, फेनकं समुद्रफेनं, तालपुष्पोद्भवक्षारमिति तालखण्डक्षारमित्यर्थः ॥ ६५—७० ॥

रक्तिद्वयक्रमेणैव योज्यं माषद्वयावधि ।
ह्रासयेच्च क्रमेणैव तथा चैव विवर्द्धयेत् ॥ ७४ ॥
जीर्णे भुञ्जीत शाल्यन्नं क्षीरं घृतसमन्वितम् ।
हन्त्यम्लपित्तं विविधां ग्रहणीं विषमज्वरम् ॥ ७५ ॥
चिरज्वरं प्लीहगदं यकृद्रोगं सुदुस्तरम् ।
अग्रमांसं तथा शोथं कांस्यक्रोडं सुदुर्जयम् ॥ ७६ ॥
कमठञ्च तथा शोथमौदरञ्च सुदारुणम् ।
धातुवृद्धिकरं वृष्यं बलवर्णकरं शुभम् ॥ ७७ ॥
सद्यो वह्निकरञ्चैव सर्वरोगहरं परम् ।
मुखशुद्धिर्विधातव्या पर्णैश्चूर्णसमन्वितैः ।
'ताम्रकल्प'मिदं नाम्ना सर्वरोगप्रशान्तये ॥ ७८ ॥

### दारुभस्म—

दारु सैन्धवगन्धञ्च भस्मीकृत्य प्रयत्नतः ।
प्लीहानमग्रमांसं च यकृच्चैव विनाशयेत् ॥ ७९ ॥

### वज्रक्षारम्—

सामुद्रं सैन्धवं काचं यवक्षारं सुवर्चलम् ।
टङ्कणं सर्जिकाक्षारं तुल्यं सर्वं विचूर्णयेत् ॥ ८० ॥
अर्कक्षीरैः स्नुहीक्षीरैरातपे भावयेत् त्र्यहम् ।
तेन लिप्त्वाऽर्कपत्रञ्च रुद्ध्वा चान्तःपुटे पचेत् ॥ ८१ ॥
तत्क्षारं चूर्णयेत् पश्चात् त्र्यूषणं त्रिफलारजः ।
जीरकं रजनी वह्निर्नवभागं समं समम् ॥ ८२ ॥
क्षीरार्द्धमेव सर्वञ्च एकीकृत्य प्रयोजयेत् ।
'वज्रक्षार'मिदं सिद्धं स्वयं प्रोक्तं पिनाकिना ॥ ८३ ॥
सर्वोदरेषु गुल्मेषु शूलदोषेषु योजयेत् ।
अग्निमान्द्येऽप्यजीर्णेऽपि भक्ष्यं निष्कद्वयं द्वयम् ॥ ८४ ॥
वाताधिके जलं कोष्णं घृतं वा पैत्तिके हितम् ।

---

दारुभस्मनि-दारु दारुमुषम् ॥ ७९ ॥

**वज्रक्षारे**--सामुद्रादि सर्वं स्नुहीक्षीरैरातपे भावयेत् ततस्तेन कल्केनार्कपत्रं ताम्रपात्रं लिप्त्वा अन्तर्दग्धव्यं यथा भस्मीभवति । ततस्तत्क्षारसहितं

कफे गोमूत्रसंक्तमारनालं त्रिदोषजे ॥ ८५ ॥

उदरामयकुम्भिकेशरी रसः--

रसगन्धकभस्मशुल्बकं, कटुकक्षारयुगं सटङ्कणम्।
कणमूलक-चव्य-चित्रकं, लवणान्येव यमानिरामठम् ॥८६॥
समभागमिदं विभावयेत् , खरतापे त्वथ जम्भवारिणा।
'उदरामयकुम्भिकेशरी'-रस एष प्रथितोऽस्य माषकः ॥ ८७॥
सुरवार्य्यनुदापयेद्भिषक्, प्रसभं हन्ति च सव्रणं गदम्।
यकृतं क्रिमिमग्रमांसकं, कमठं प्लीहजलोदराह्वयम्।
जठरामयपञ्चगुल्मकं पवनं साममथाम्लपित्तकम् ॥ ८८ ॥

वारिशोषणो रसः--

चतुर्विंशतिभागाः स्युर्गन्धाद्वङ्गं तदर्द्धकम्।
वङ्गभ गान्धवेदर्द्धः पारदः कृष्णमभ्रकम् ॥ ८९ ॥
चतुर्दशविभागं स्यान्मृतं तद्दीयते पुनः।
मृतलौहमष्टभागं मृतताम्रं नवात्र तत् ॥ ९० ॥
मृतहेम द्वयं तत्र मृतरूप्यञ्च सप्तकम्।
अतिशुद्धमतिस्थूलं मृतं हीरं त्रयोदश ॥ ९१ ॥
भागा ग्राह्या माक्षिकस्य विशुद्धस्यात्र षोडश।
अष्टादशमितं ग्राह्यं नवकाशीशकं पुनः ॥ ९२ ॥
तुत्थकञ्च षडेवात्र नवीनं ग्राह्यमेव च।
तालकञ्च चतुर्भागं शिला योज्यास्त्रयो बुधैः ॥ ९३ ॥
शैलेयं पञ्च दातव्यं सर्वमेकत्र नूतनम्।
मृतमौक्तिकभागैकं सौभाग्यं द्वयमेव च ॥ ९४ ॥
कुट्टयित्वा विचूर्ण्याथ जम्बीरस्य रसेन वै।
भावयेत् सप्तधा गाढं गुडिकां तस्य कारयेत् ॥ ९५ ॥

---

ताम्रं विचूर्ण्य त्र्यूषणादिचूर्णञ्च यथोक्तं गृहीत्वा मर्दयेदिति ॥ ८०—८५ ॥

**उदरामयकुम्भिकेशरीरसे**—शुल्वं ताम्रं, कटुकं त्रिकटुकं, लवणानि-पञ्चलवणानि, अत्र चव्यं चित्रकचूर्णञ्च न प्रयच्छन्ति वृद्धाः। कणमूलं पिप्पलीमूलं छान्दसत्वात् ह्रस्वः एवं सुरइत्यत्रापि ॥ ८६—८८ ॥

पानकद्वितये[१] कृत्वा मुद्रयेत् पानकद्वयम् ।
घटमध्ये निवेश्याथ दत्त्वा पूर्वञ्च वालुकाम् ॥ ९६ ॥
ऊर्द्धञ्च तां पुनर्दत्त्वा वालुकां मुद्रयेन्मुखम् ।
अहोरात्रं दहेदग्नौ स्वाङ्गशीतं समुद्धरेत् ॥ ९७ ॥
वकुलस्य च बीजेन कण्टकारीद्वयेन च ।
गुडूचीत्रिफलावारा भावयेत् सप्तसप्ततः ॥ ९८ ॥
वृद्धदाररसेनापि तथा देयास्तु भावनाः ।
गिरिकर्ण्या रसेनापि मत्स्यरोहितपित्ततः ॥ ९९ ॥
एवं सिद्धो भवेत् सम्यक् रसोऽसौ वारिशोषणः ।
देवान् गुरून् समभ्यर्च्य यतिनो ब्राह्मणांस्तथा ॥ १०० ॥
रक्तिकाद्वितयं देयं सन्निपाते समुच्छ्रये ।
मरिचेन समं देयं तेन जागर्त्ति मानवः ॥ १०१ ॥
श्लैष्मिके च गदे देयं ग्रहण्याममग्निमान्द्यके ।
प्लीह्नि पाण्डौ प्रयोक्तव्यं त्रिकटुत्रिफलाऽम्भसा ॥ १०२ ॥
शूलरोगे प्रयोक्तव्यमुदावर्त्ते विशेषतः ।
कुष्ठे सुदुष्टे देयोऽयं काकोडुम्बरिकाऽम्भसा ॥ १०३ ॥
अतिवाह्निकरः श्रीदो बलवर्णाग्निवर्द्धनः ।
धन्वन्तरिकृतः सद्यो रसः परमदुर्लभः ।
सर्वरोगे प्रयोक्तव्यो निःसन्देह भिषग्वरैः ॥ १०४ ॥

सर्वतोभद्रो रसः—

सूतं गन्धं तपनगगनं कान्तलौहस्य चूर्णं
कृत्वैकध्यं दृषदि मथितं शृङ्गवेरस्य वारा ।
युञ्ज्याद्रोगे यकृति गुदजे प्लीह्नि सर्वज्वरेषु
शोथे पाण्डौ क्रिमिकृतगदे सर्वतः कामलायाम् ॥ १०५ ॥
कासे श्वासे च मेहे जलजठरगदे सर्वदोषप्रसूते ।
ख्यातो योगः सुरमणिकृतः 'सर्वतोभद्रनामा' ॥ १०६ ॥

* इति प्लीहरोग-चिकित्सा *

---

वारिशोषणादीनां टिप्पणी न कृता श्रीगोपालेन ॥ ८९–१०६ ॥
इति प्लीहरोग चिकित्सा ।

---

१ पानद्वितयं मृत्पात्रद्वये । पानकम्=चषकम् ( सिकोरा ) इति ।

## अथ शोथरोग-चिकित्सा ।

### त्रिकट्वाद्यं लौहम् —

त्रिकटु त्रिफला दन्ती मार्गीत्रिमदशुण्ठकैः ।
पुनर्नवासमायुक्तं शोथं हन्ति सुदुस्तरम् ।
लौहं शोथोदरस्थौल्यजलोदरनिवारणम् ॥ १ ॥

### कटुकाद्यं लौहम्—

कटुका त्र्यूषणं दन्ती विडङ्गं त्रिफला तथा ।
चित्रको देवकाष्ठञ्च त्रिवृद्वारणपिप्पली ॥ २ ॥
तुल्यान्येतानि चूर्णानि द्विगुणं स्यादयोरजः ।
क्षीरेण पीतमेतत्तु श्रेष्ठं श्वयथुनाशनम् ॥ ३ ॥

### त्र्यूषणाद्यं लौहम्—

अयोरजस्त्र्यूषणयावशूकचूर्णञ्च पीतं त्रिफलारसेन ।
शोथं निहन्यात् सहसा नरस्य यथाऽशनिर्वृक्षमुदीर्णवेगः ॥ ४ ॥

### सुवर्चलाद्यं लौहम्—

सुवर्चला व्याघ्रनखं दीप्यकं लौहमेव च ।
चव्यञ्च देवकाष्ठञ्च दीप्यकं लौहमेव च ।
शोथं पाण्डुं तथा कासमुदराग्नि निहन्ति च ॥ ५ ॥

### क्षारगुडिका—

क्षारद्वयं स्यात् लवणानि पञ्च चत्वारर्ययो व्योषफलत्रिकञ्च ।
सपिप्पलीमूलविडङ्गसारं मुस्ताऽजमोदाऽमरदारुबिल्वम् ॥६॥
कलिङ्गकश्चित्रकमूलपाठा यष्ट्यह्वयं सातिविषं पलाशम् ।
सहिङ्गुकर्षं त्वतिसूक्ष्मचूर्णं द्रोणं तथा मूलकशुण्ठकानाम् ॥ ७ ॥
स्याद्भस्मनस्तत् सलिलेन साध्यमालोड्य यावद् घनमप्यदग्धम् ।

---

उत्सेधसाधर्म्यादनन्तरं शोथचिकित्सामाह—**त्रिकट्वादिलौहे**—शुण्ठकैरिति मूलकशुण्ठकैः, लौहमत्र सर्व्वचूर्णसमम् ॥ १ ॥

**कटुकादिलौहे**—त्र्यूषणं त्रिकटु । वारणपिप्पली गजपिप्पली ॥ २–३ ॥

**त्र्यूषणादिलौहे**—सर्व्वचर्णसमं लौहम् ॥ ४ ॥

**क्षारगुडिकायां**-लवणानि पञ्चेति पञ्चलवणानि, अयश्चतुष्कमित चतुर्विधं लौहं ग्राह्यं विडङ्गसारं विडङ्गतण्डुलं । मूलकभस्मनः सलिलं पुनः

स्त्यानं ततः कोलसमाञ्च मात्रां कृत्वा तु शुष्कां विधिना प्रयुञ्ज्यात् ८
प्लीहोदरं श्वित्रहलीमकार्शः-पाण्ड्वामयारोचकशोथशोषान् ।
विषूचिकागुल्मगराश्मरीश्च सश्वासकासान् प्रणुदेत् सकुष्ठान् ॥ ९ ॥
सौवर्चलं सैन्धवञ्च विडमौद्भिदमेव च ।
सामुद्रलवणञ्चात्र जलमष्टगुणं भवेत् ॥ १० ॥
* इति शोथरोग चिकित्सा *

---

## अथाऽर्बुदरोग-चिकित्सा ।

### रौद्ररसः—

शुद्धसूतं समं गन्धं मर्द्यं यामचतुष्टयम् ।
नागवल्लीरसैर्युक्तं मेघनादपुनर्नवैः ॥ १ ॥
गोमूत्रपिप्पलीयुक्तं मर्द्यं रुद्ध्वा पुटेल्लघु ।
लिह्यात् क्षौद्रैः रसो रौद्रो गुञ्जामात्रोऽर्बुदं जयेत् ॥ २ ॥

### योगवाहिरसान्तरप्रयोगोपदेशः—

रामबाणादिकान् योगवाहिनोऽत्र प्रयोजयेत् ॥ ३ ॥
* इति अर्बुदरोग-चिकित्सा *

---

## अथ श्लीपदरोग-चिकित्सा ।

### नित्यानन्दो रसः—

हिङ्गुलात् सम्भवं सूतं गन्धकं मृतताम्रकम् ।
वङ्गं तालञ्च तुत्थञ्च शङ्खं कांस्यं वराटकम् ॥ १ ॥
त्रिकटु त्रिफलां लौहं विडङ्गं पटुपञ्चकम् ।

---

पाकाद् घनत्वमुपगते यवक्षारादि सर्वं प्रक्षेपणीयम् ॥ ६–१० ॥

इति शोथरोग-चिकित्सा ।

उत्सेधसाधर्म्यादनन्तरमर्बुदचिकित्सामाह—**रौद्ररसे**—मेघनादो मारिषः ॥ १ ॥

इत्यर्बुद चिकित्सा ।

उत्सेधसाधर्म्यात् तथार्बुदेन सह कफसम्बन्धाव्यभिचारसाम्याच्चानन्तरं श्लीपदचिकित्सामाह—**नित्यानन्दरसे** शङ्खं वराटञ्च दग्धव्यम् । हवु

चविकां पिप्पलीमूलं हवुषां च वचां तथा ॥ २ ॥
शटीं पाठां देवदारु, एलां च वृद्धदारकम्[१] ।
त्रिवृतां चित्रकं दन्तीं गृहीत्वा तु पृथक् पृथक् ॥
एतानि[२] समभागानि सञ्चूर्ण्य वटिकां कुरु ॥ ३ ॥
हरीतकीरसं दत्त्वा पञ्चगुञ्जामितां शुभाम् ।
एकैकां भक्षयेत् नित्यं शीतं वारि पिबेदनु ॥ ४ ॥
श्लीपदं कफवातोत्थं रक्तमांसगतञ्च यत् ।
मेदोगतं धातुगतं हन्त्यवश्यं न संशयः ॥ ५ ॥
श्रीमद्गहननाथेन निर्मितो विश्वसम्पदे ।
'नित्यानन्दर'सश्चायं यत्नतः श्लीपदे गदे ॥ ६ ॥

कणादिवटी—

कणा-वचा-दारु-पुनर्नवानां चूर्णं सबिल्वं समवृद्धदारम् ।
संमर्द्य चैतस्य निहन्ति वल्लः सकाञ्जिकः श्लीपदमुग्रवेगम् ॥ ७ ॥

* इति श्लीपदरोग-चिकित्सा *

---

## अथ भगन्दररोग-चिकित्सा ।

### रवितण्डवो रसः—

शुद्धसूतं द्विधा गन्धं कुमारीरसमर्दितम् ।

---

षेति स्वनामख्याता, शुष्काम्रमुकुलमिति टीका; तदभावे धान्यकं । सूतादि-वृद्धदारकान्तानि चैकत्रिंशतद्रव्याणि सममागानि सञ्चूर्ण्य हरीतकीक्वाथेन संपिष्य पञ्चगुञ्जाप्रमाणां गुडिकां कुर्य्यादित्यर्थः ॥ १–६ ॥

इति श्लीपद-चिकित्सा ।

उत्सेधसाधर्म्यादनन्तरं भगन्दरचिकित्सामाह—वारितण्डवे—रस·

---

१ इतःपर "त्रिवृच्चित्रकदन्तीनां भावयित्वा रसैः पृथक्" इति सारकौमुद्यां, तथा "त्रिवृता चित्रकं दन्ती गृहीत्वा तु पृथक पृथक" इति भैषज्यरत्नावल्यामधिकः पाठः ।

२ एतानि=सूतादारभ्यदन्तीपर्यन्तानि, नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्—इति नपुसकशेषः ।

त्र्यहान्ते गोलकं कृत्वा ततस्तेन प्रलेपयेत् ॥ १ ॥
तयोः समं ताम्रपत्रं हण्डिकान्तर्निवेशयेत् ।
तद्भाण्डं भस्मनाऽऽपूर्य्य चुल्ल्यां तीव्राग्निना पचेत् ॥ २ ॥
द्वियामान्ते समुद्धृत्य चूर्णयेत् साङ्गशीतलम् ।
जम्बीरस्य रसैः पिष्ट्वा रुद्ध्वा सप्तपुटे पचेत् ॥ ३ ॥
गुञ्जैकं मधुनाऽऽज्येन लिह्याद्धन्ति भगन्दरम् ।
मूषलीलवणञ्चानु ह्यारनालयुतं पिबेत् ॥ ४ ॥
भुञ्जीत मधुराहारं दिवास्वापञ्च मैथुनम् ।
वर्जयेच्छीतलाऽऽहारं रसेऽस्मिन् रवितारडवे ॥ ५ ॥

भगन्दरहरो रसः—

सूतस्य द्विगुणेन शुद्धबलिना कन्यपयोभिस्त्र्यहं
शुद्धं ताम्रमयः समस्ततुलितं पात्रे निधायोपरि ।
स्वेद्यं यामयुगञ्च भस्म-पिठरे निम्बूजलैः सप्तधा ।
साकं तद् पुटयेद् भगन्दरहरो गुञ्जोन्मितः स्यादिति ॥६॥

* इति भगन्दरचिकित्सा *

## अथोपदंशरोग-चिकित्सा ।

उपदंशे साधारणविधिः—

स्निग्धस्विन्नशरीरस्य ध्वजमध्ये शिराव्यधः ।
जलौकःपातनं वा स्यादूर्द्धाधःशोधनं तथा ॥ १ ॥
सद्यो निर्जितदोषस्य रुक्शोथावुपशाम्यतः ।
पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः ॥ २ ॥

धावनकषायः—

त्रिफलायाः कषायेण भृङ्गराजरसेन वा ।

---

स्य द्विगुणं गन्धं कुमार्य्या रसे त्रिदिनं विमर्द्य हण्डिकामध्ये निःक्षिप्य ताम्रकोठरिकया आच्छाद्य कोठरिकां स्वल्पशरावेणाच्छाद्य च सन्धिं लिप्त्वा तद्भाण्डं भस्मनापूर्य्य कपस्यां पचेत् । तत उत्धृत्य चूर्णयेत् । ततो जम्बीररसेन पिष्टां सप्तवारं प्रपुटेत् ॥ १–५ ॥

भगन्दरहररसे—बलिना गन्धकेन ॥ ६ ॥
इति भगन्दर-चिकित्सा ।

व्रणप्रक्षालनं कुर्य्यादुपदंशप्रशान्तये ॥ ३ ॥

लेपः—

दहेत् कटाहे त्रिफलां सा मसी मधुसंयुता।
उपदंशे प्रलेपोऽयं सद्यो रोपयति व्रणम् ॥ ४ ॥

भैरवरसः—

शुद्धसूतं ग्रहीतव्यं रक्तिकाशतमात्रकम्।
त्रिगुणां शर्करां लौहे निम्बदण्डेन मर्दयेत् ॥ ५ ॥
याममात्रं ततो दद्याच्छ्वेतं खदिरचूर्णकम्।
सूततुल्यं ततः कुर्य्यान्मर्दनात् कज्जलोपमम् ॥ ६ ॥
विंशतिर्वटिकाः कार्य्याः स्थाप्या गोधूमचूर्णके।
निःशेषनिःसृता ज्ञात्वा पिडकास्ताः कलेवरे ॥ ७ ॥
भैरवं देवमभ्यर्च्य बलिं तस्मै प्रदाय च।
विधाय योगिनीपूजां दुर्गामभ्यर्च्य यत्नतः ॥ ८ ॥
वटिकास्ताः प्रयोक्तव्या भिषजा जानता क्रियाम्।
दिवसत्रितयं दद्यात् तिस्रस्तिस्रो विजानता ॥ ९ ॥
चतुर्थाच्च समारभ्य एकामेकां प्रयोजयेत्।
एवं चतुर्दशदिने नीरोगो जायते नरः ॥ १० ॥
पथ्यं शर्करया सार्द्धमुष्णान्नं घृतगन्धि च।
कुर्य्यात्साकाङ्क्षमुत्थानं सकृद्भोजनमिष्यते ॥ ११ ॥
जलपानं जलस्पर्शं कदाचन न कारयेत्।
दुःसहायान्तु तृष्णायामिक्षुदाडिमकादिकम् ॥ १२ ॥
शौचकार्य्येऽप्युष्णवारि वाससा प्रोच्छनं द्रुतम्।
वाताऽऽतपाग्निसम्पर्कं दूरतः परिवर्जयेत् ॥ १३ ॥
मेघागमे वा शीते वा कार्य्यमेतद्विजानता।
मुखरोगे तु सञ्जाते मुखरोगहरी क्रिया ॥ १४ ॥
श्रमाध्वभाराध्ययन—स्वप्नालस्यानि वर्जयेत्।
ताम्बूलं भक्षयेन्नित्यं कर्पूरादिसुवासितम् ॥ १५ ॥
क्रिया श्लेष्महरी युक्ता वातपित्ताऽविरोधिनी।
लवणं वर्जयेदम्लं दिवानिद्रां तथैव च ॥ १६ ॥
रात्रौ जागरणञ्चैव स्त्रीमुखालोकनं तथा।

सप्ताहद्वयमुत्क्रम्य स्नानमुष्णाम्बुना चरेत् ॥ १७ ॥
पथ्यं कुर्याद्धितमिदं जाङ्गलानां रसादिभिः ।
व्यायामाद्यं वर्जनीयं यावन्न प्रकृतिर्भवेत् ॥ १८ ॥
एवं कृतविधानस्तु यः करोत्येतदौषधम् ।
स एव पापरोगस्य पारं याति जितेन्द्रियः ॥१९ ॥
पिडका विलयं यान्ति बलं तेजश्च वर्द्धते ।
रुजा च प्रशमं याति ग्रन्थिशोथश्च शाम्यति ॥ २० ॥
अस्थ्नां भवति दार्ढ्यञ्च आमवातश्च शाम्यति ।
भैरवेण समाख्यातो रसोऽयं 'भैरवाख्यकः' ॥ २१ ॥

रसशेखरः—

पारदञ्चाहिफेनश्च द्विद्वादशकरक्तिकम् ।
अयःपात्रे निम्बकाष्ठे मर्दयेत् तुलसीद्रवैः ॥ २२ ॥
तस्मिन् सम्मूर्च्छिते दद्याद्दरदं रससम्मितम् ।
मर्दयेच्च तुलस्यैव ततश्चैतानि दापयेत् ॥ २३ ॥
जातीकोषफले चैव पारसीययमानिकाम् ।
आकारकरभञ्चैव द्वात्रिंशद्रक्तिकाम्प्रति ॥ २४ ॥
मर्दयेत् तुलसीतोयैरे तेषां द्विगुणं शुभम् ।
दद्यात् खदिरसत्त्वञ्च वटिका चणकप्रभा ॥ २५ ॥
सायं द्वे द्वे प्रयोज्य च लवणाम्लञ्च वर्जयेत् ।
गलत्कुष्ठं तथा स्फोटान् दुष्टान् गर्दभिकामपि ॥ २६ ॥
ये स्युर्व्रणा नृणामन्ये उपदंशपुरःसराः ।
तान् सर्वान् नाशयत्याशु सिद्धोऽयं 'रसशेखरः' ॥ २७ ॥

प्रक्रियान्तरम्—

योगवाहिरसान् सर्वान् सर्वरोगोदितानपि ।
उपदंशे प्रयुञ्जीत तथा शोणितशोधनम् ॥ २८ ॥

* इति उपदंशरोग-चिकित्सा *

---

स्थानप्रत्यासत्त्या उपदंशचिकित्सामाह योगवाहीत्यादि—योगवाहिरसान् रामबाण-वारिशोषणादीन् ॥ २८ ॥

इत्युपदंश-चिकित्सा ।

## अथ कुष्ठरोग-चिकित्सा ।

कन्याकोटिप्रदानेन गङ्गायां पितृतर्पणे ।
विश्वेश्वरपुरीवासे तत्फलं कुष्ठनाशने ॥ १ ॥
गवां कोटिप्रदानेन चाश्वमेधशतेन च ।
वृषोत्सर्गे च यत् पुण्यं तत्पुण्यं कुष्ठनाशने ॥ २ ॥

गलत्कुष्ठारिरसः—

रसो बलिस्ताम्रमयः पुरोऽग्निः, शिलाजतु स्याद्विषतिन्दुकश्च ।
वरा च तुल्यं गगनञ्च सर्वैः, करञ्जबीजं सचतुष्टयञ्च ॥ ३ ॥
संमर्द्य सर्वं मधुना घृतेन, घृतस्य पात्रे निहितं प्रयत्नात् ।
कर्षं भजेत् प्रत्यहमस्य पथ्यं, शाल्योदनं दुग्धमधुत्रयञ्च ॥ ४ ॥
विशीर्णकेर्णाङ्गुलिनासिकोऽपि, भवेदनेन स्मरतुल्यमूर्त्तिः ।
दारापरित्याग[१] इह प्रदिष्टो, जलौदनं तत्र निबद्धमूले ॥ ५ ॥

उदयभास्करः—

गन्धकेन मृतं ताम्रं दशभागं समुद्धरेत् ।
ऊषणं पञ्चभागं स्यादमृतञ्च द्विभागिकम् ॥ ६ ॥
श्लक्ष्णचूर्णीकृतं सर्वं रक्तिकैकप्रमाणतः ।
दातव्यं कुष्ठिने सम्यगनुपानस्य योगतः ॥ ७ ॥
गलिते स्फुटिते चैव विपुले मण्डले तथा ।
विचर्चिका-दद्रु-पामा-कुष्ठरोगप्रशान्तये ॥ ८ ॥

तालकेश्वरो रसः—

धात्रीटङ्कणतालानां दशभागं समुद्धरेत् ।

---

त्वग्गतरक्तदुष्टिसाधर्म्यादनन्तरं कुष्ठचिकितमितमुच्यते—**गलत्कुष्ठारिरसे**—बलिर्गन्धकं, अग्निश्चित्रकं, गगनमभ्रं, विषतिन्दुकं कुचिला इति ख्याता । रसादिवचनानि समभागानि, गगनं करञ्जबीजञ्च रसापेक्षया चतुर्गुणं, मधुघृते वटिकाकरणयोग्ये देये ॥ ३-५ ॥

**उदयभास्करे**—केवलं गन्धकेन मृतं ताम्रं दशभागं । अमृतं विषं तस्य द्विभागं । सर्व्वं दिनैकं सम्मर्द्य रक्तिप्रमाणा वटिका कार्य्या ॥ ६-८ ॥

---

१ दाराणामासमन्तात्परित्यागः सेवाभावोजितेन्द्रियत्वमित्यर्थः, दार-शब्दोऽदन्तःपुल्लिङ्गो बहुवचनान्तः स्त्रीवाची, विचित्रा हि शब्दप्रयोगस्यगतिः।

धात्र्या रसैर्मर्दयित्वा शिखरीमूलवारिणा।
'सर्वकुष्ठहरः' सेव्यः सर्वदा भोजनप्रियः ॥ ९ ॥

ब्रह्मरसः—

भागैकं मूर्च्छितं सूतं गन्धकं त्वग्निवागुजी।
चूर्णन्तु ब्रह्मबीजानां प्रति द्वादशभागिकम् ॥ १० ॥
त्रिंशद्भागं गुडस्यापि क्षौद्रेण गुडिका कृता।
अयं 'ब्रह्मरसो' नाम्ना ब्रह्महत्याविनाशनः ॥ ११ ॥
द्विनिष्कं भक्षणाद्धन्ति प्रसुप्तिकुष्ठमण्डलम्।
पातालगरुडीमूलं जलैः पिष्ट्वा पिबेदनु ॥ १२ ॥

चन्द्राननो रसः—

सूतव्योमाग्नयस्तुल्यास्त्रिभागाः गन्धकस्य च।
काकोडुम्बरिकाक्षीरैः सर्वमेकत्र मर्दयेत् ॥ १३ ॥
माषमात्रां गुटीं कृत्वा कुष्ठरोगे प्रयोजयेत्।
देहशुद्धिं पुरा कृत्वा सर्वकुष्ठानि नाशयेत्।
एष 'चन्द्राननो' नाम साक्षात् श्रीभैरवोदितः ॥ १४ ॥

कुष्ठकालानलो रसः—

रसं बलिष्टङ्कणताम्रलौहं भस्मीकृतं मागधिकासमेतम्।
पञ्चाङ्गनिम्बेन फलत्रिकेण विभावितं राजतरोस्तथैव।
नियोजयेद्वल्लकयुग्ममानं कुष्ठेषु सर्वेषु, च रोगसङ्घे ॥ १५ ॥

वज्रवटी—

शुद्धसूताग्निमरिचं सूताद्द्विगुणगन्धकम्।
काकोडुम्बरिकाक्षीरैर्दिनं मर्द्यं प्रयत्नतः ॥ १६ ॥
वराव्योषकषायेण वटीञ्चाऽस्य समाचरेत्।
लिह्याद् 'वज्रवटी' ह्येषा पामारोगविनाशिनी ॥ १७ ॥

---

ब्रह्मरसे--अग्निश्चित्रकः पातालगरुडी तिक्तालाबुः ॥ १०-१२ ॥
चन्द्राननरसे--व्योमम‌भ्रम् ॥ १३-१४ ॥
कुष्ठकालानले--बलिर्गन्धकः, मागधिका पिप्पली, पञ्चाङ्गनिम्बैरिति-निम्बस्य पत्र-पुष्प-फल-वल्कल-मूलैः ॥ १५ ॥
वज्रवटिकायां--अग्निश्चित्रकः वरा त्रिफला ॥ १६-१७ ॥

चन्द्रकान्तिरसः—

पलत्रयं मृतं ताम्रं सूतमेकं द्विगन्धकम्।
त्रिकटुत्रिफलाचूर्णं प्रत्येकञ्च पलं पलम्॥ १८॥
निर्गुण्ड्याश्चार्द्रकद्रावैर्वह्निद्रावैर्विमर्दयेत्।
दिनैकं तद्विशोष्याथ तुषाग्नौ स्वेदयेद्दिनम्॥ १९॥
समुद्धृत्य विचूर्ण्याथ वागुजीतैलमर्दितम्।
त्रिदिनं भावयेत् तेन निष्कैकं भक्षयेत् सदा॥ २०॥
'चन्द्रकान्तिरसो' नाम्ना कुष्ठं हन्ति न संशयः।
तैलं करञ्जबीजोत्थं वह्निगन्धकसैन्धवैः।
अनुपानं प्रकर्त्तव्यं कल्कं वा वागुजीभवम्॥ २१॥

सङ्कोचरसः—

मृतताम्राऽभ्रकं तुल्यं तयोः सूतं चतुर्गुणम्।
शुद्धं तन्मर्दयेत् खल्ले गोलकं कारयेत् ततः॥ २२॥
त्रिभिस्तुल्यं शुद्धगन्धं लौहपात्रे क्षणं पचेत्।
तन्मध्ये गोलकं पाच्यं यावज्जीर्णन्तु गन्धकम्॥ २३॥
एतन्मृद्वग्निना तावत् समुद्धृत्य विचूर्णयेत्।
गुग्गुलुः निम्बपञ्चाङ्गं त्रिफला चामृता विषम्॥ २४॥
पटोलं खादिरं सारं व्याधिघातं समं समम्।
चूर्णितं मधुना लेह्यं निष्कमौडुम्बराऽपहम्।
रसः 'सङ्कोचनामा'ऽयं कुष्ठे परमदुर्लभः॥ २५॥

अमृताङ्कुरलौहम्—

हुताशमुखसंशुद्धं पलमेकं रसस्य वै।
पलं लौहस्य ताम्रस्य पलं भल्लातकस्य च॥ २६॥

---

**सङ्कोचरसे**—व्याधिघातं समं सममिति गुग्गुल्वादीनां प्रत्येकमेकभागसमम्॥ २२-२५॥

**अमृताङ्कुरलौहे**—हुताशमुखसंशुद्धं पलमेकं रसस्य वै इति हुताशमुखेत्यादि विशेषणेन रससिन्दूरं गृह्णन्तीति केचित्। अपरे तु हिङ्गुलोद्भवं पारदं पातनयन्त्रयोगात् गृह्णन्ति। वृद्धास्तु प्रायः रससिन्दूरं व्यवहरन्ति। रसादिसर्व्वमेकीकृत्य लौहपात्रे त्रिफलाक्वाथेन पचनीयं, पाकशेषेतु त्रिफ-

अभ्रकस्य पलञ्चैकं गन्धकस्य चतुःपलम् ।
हरीतकीबिभीतक्योश्चूर्णं कर्षद्वयं द्वयोः ॥ २७ ॥
अष्टमाषाधिकं तत्र धात्र्याः पाणितलानि षट् ।
घृतञ्चाष्टगुणं लौहाद् द्वात्रिंशत् त्रिफलाजलम् ॥ २८ ॥
एकीकृत्य पचेत् पात्रे लौहे च विधिपूर्वकम् ।
पाकमेवास्य जानीयात् शास्त्रज्ञो लौहपाकवित् ॥ २९ ॥
भक्षयेत् प्रातरुत्थाय गुरुदेवद्विजार्चकः ।
रक्तिकादिक्रमेणैव घृतभ्रामरमर्दितम् ॥ ३० ॥
लौहे च लौहदण्डेन कुर्य्यादेतद् रसायनम् ।
अनुपानञ्च कुर्वीत नारिकेलजलं पयः ॥ ३१ ॥
सर्वकुष्ठहरं श्रेष्ठं वलीपलितनाशनम् ।
अग्निदीप्तिकरं हृद्यं कान्त्यायुर्बलवर्द्धनम् ॥ ३२ ॥
सेव्यो रसो जाङ्गललावकानां, विवर्ज्य शाकाम्लमपि स्त्रियञ्च ।
शाल्योदनं षष्टिकमाज्यमुद्गं, क्षौद्रं गुडं क्षीरमिह क्रियायाम् ॥ ३३ ॥

माणिक्यो रसः—

पलं तालं पलं गन्धः शिलायाश्च पलार्द्धकम् ।
चपलः शुद्धसीसञ्च ताम्रमभ्रमयोरजः ॥ ३४ ॥
एतेषां कोलभागञ्च वटक्षीरेण मर्दयेत् ।
ततो दिनत्रयं घर्मे निम्बक्काथेन भावयेत् ॥ ३५ ॥
गुडूचीबालहिन्ताल-वानरीनीलझिण्टिकाः ।
शोभाञ्जनमुराऽजाजी-निर्गुण्डीहयमारकम् ॥ ३६ ॥
एषां शाणमितं चूर्णमेकीकृत्य सरित्तटे ।
मृत्पात्रे कठिने कृत्वा मृदम्बरयुते दृढे ॥ ३७ ॥
एकाकी पाकविद्वैद्यो नग्नः शिथिलकुन्तलः ।
पचेदवहितो रात्रौ यत्नात् संयतमानसः ॥ ३८ ॥

---

लाचूर्णं प्रक्षिपेत् । अभ्रकस्य पलञ्चैव गन्धकस्य चतुष्पलमित्यत्र गन्धकस्य पलञ्चैकमभ्रकस्य च गुग्गुलोरिति केचित् पठन्ति; स च न भट्टादिसम्मतः पाठः, नापि वृद्धवैद्यव्यवहारबद्धः ॥ २६–३३ ॥

माणिक्यरसे--चपलः पारदः, कोलभागानि कर्षभागानीत्यर्थः । वा-

शनैर्मध्यमवेगेन वह्निना प्रहरद्वयम् ।
प्रातः सम्पूज्य मार्त्तण्डं साङ्गशीतं समुद्धरेत् ॥ ३९ ॥
यदि भाग्यवशाद् एतत् 'माणिक्याभं' शुभं भवेत् ।
तद्धि जानीहि भैषज्यं सर्वकुष्ठविनाशनम् ।
सर्पिषा मधुना लौह-पात्रे तद्दण्डमर्द्दितम् ॥ ४० ॥
द्विगुञ्जं सर्वकुष्ठानां नाशनं बलवर्द्धनम् ।
शीतलं सारसं तोयं दुग्धं वा पाकशीतलम् ॥ ४१ ॥
आनीतं तत्क्षणादाजमनुपानं सुखावहम् ।
वातरक्तं शीतपित्तं हिक्काञ्च दारुणां जयेत् ॥ ४२ ॥
ज्वरान् सर्वान् वातरोगान् पाण्डुं कन्डूञ्च कामलाम् ।
श्रीमद्गहननाथेन निर्मितो बहुयत्नतः ॥ ४३ ॥

कुष्ठकुठारो रसः—

भस्मसूतसमो गन्धो मृतायस्ताम्रगुग्गुलु ।
त्रिफला च महानिम्बश्चित्रकश्च शिलाजतु ॥ ४४ ॥
इत्येतच्चूर्णितं कुर्यात् प्रत्येकं शाणषोडश ।
चतुःषष्टि करञ्जस्य बीजचूर्णं प्रकल्पयेत् ॥ ४५ ॥
चतुःषष्टि मृतञ्चाभ्रं मध्वाज्याभ्यां विलोडयेत् ।
स्निग्धभाण्डे स्थितं खादेद् द्विनिष्कं सर्वकुष्ठनुत् ।
रसः 'कुष्ठकुठारो'ऽयं गलत्कुष्ठविनाशनः ॥ ४६ ॥

तालेश्वररसः—

गुञ्जाशङ्खकरञ्जचूर्णरजनीभल्लातकाग्निःशिखी-
कन्यासूर्य्यपयः पुनर्नवरजो गन्धस्तथा सूतकम् ।
गोमूत्रे पचितं विडङ्गमरिचैः क्षौद्रञ्च तत्तुल्यकम् ।
हन्यादाशु विचर्चिकारुजमिदं कण्डूं तथा कैटिमम् ॥ ४७ ॥

---

नरी शूकशिम्बी अजाजी जीरकं । हयमारः करवीरः ॥ ३४-४३ ॥

तालेश्वरे--शङ्खः शङ्खभस्म । सूर्य्यपयः अर्कदुग्धं । गोमूत्रे पचितमिति छान्दसत्वाद्ह्रस्वः सर्व्वचूर्णापेक्षया अष्टगुणेन गोमूत्रेण पाचितमित्यर्थः ॥४७॥

---

१ पचनं पचः, घञर्थेकः, पचः सञ्जातोऽस्य पचितम्=पक्वम्, पाचितमित्यभिप्रायः ।

राजताल्रेश्वरः—

नागस्य भस्म शाणैकं तोलकं गन्धकस्य च।
द्विनिष्कं शुद्धतालस्य सर्वमेतद् गवां जलैः॥ ४८॥
विपचेत् षोडशगुणैः पात्र ताम्रमये शनैः।
धर्मे द्विवस्रं जम्बीर-कुमारीवज्रकन्दजैः॥ ४९॥
रसैर्भृङ्गस्य चाम्भोभिर्युतं वल्लद्वयं भजेत्।
कुष्ठे चास्थिगते चापि शाखानासाविभुग्नके।
स्वरभङ्गे क्षतक्षीणे मण्डलेषु महत्स्वपि॥ ५०॥
औदुम्बरं हन्ति शिवामधुभ्यां कृच्छ्रञ्च कुष्ठं त्रिफलाजलेन।
गुडार्द्रकाभ्यां गजचर्मसिध्माविचर्चिकाऽऽस्फोटविसर्पकण्डूम्॥५१॥
निहन्ति पाण्डुं विविधां विपादीं सरक्तपित्तां कटुका-सिताभ्याम्।
खादेद् द्विजीरं त्वमृतायुतञ्च समुद्गयूषं सघृतञ्च दद्यात्॥ ५२॥
रोहीतकजटाक्वाथमनुपानं प्रयच्छति।
चतुर्दशदिनस्यान्ते कुष्ठं शुष्यति यत्नतः॥ ५३॥
क्षुद्बोधो जायतेऽत्यर्थमत्यर्थं सुभगं वपुः।
अत्यर्थं पच्यते भुक्तमत्यर्थं सुखमाप्नुयात्॥ ५४॥
अरुणौदुम्बरं कुष्ठमृष्यजिह्वां कपालिकाम्।
पुण्डरीकं काकणञ्च दद्रुकुष्ठं सुदुस्तरम्॥ ५५॥
स्फुटरूपं सर्वकुष्ठं महाकुष्ठं सुदारुणम्।
तथा चर्मदलं हन्याद् विसर्पं परिसर्पकम्॥ ५६॥
सिध्मं विचर्चिकां गाढां किटिमञ्च विशेषतः।
पामाञ्चालसकञ्चैव किलासञ्च विनाशयेत्।
वर्जयेत् सततं कुष्ठी मत्स्यमांसादिभोजनम्॥ ५७॥

कुष्ठहरिताल्रेश्वरः—

हरितालं भवेद्भागऽद्वादशाऽत्र[1] विशुद्धिमत्।
गन्धकोऽपि तथा ग्राह्यो रसः सप्तात्र दीयते॥ ५८॥

---

कुष्ठहरितालेश्वरे—सेहुण्डो स्नुही पूर्व्ववत् पच्यते इति ताम्रकोठरे

---

१ अत्र-विशुद्धिमद्=शुद्धम् हरितालम्, भागैरंशैर्द्वादश, द्वादशभागमित्यर्थः। भागद्वादश—इति समस्तं पदम्।

कृष्णाभ्रकमपि श्लक्ष्णं खल्ले कृत्वा विमर्दयेत् ।
अङ्कोठमूलनीरेण सेहुण्डीपयसाऽथवा ॥ ५९ ॥
अर्कदुग्धेन सम्पिष्य करवीरजलेन च ।
काकोडुम्बरनीरेण पेषणीयो रसो भृशम् ॥ ६० ॥
भाजने शुद्धताम्रस्य क्षेपणीयो रसेश्वरः ।
विधिवत् पच्यते याम-षट्कञ्चायं रसेश्वरः ॥ ६१ ॥
पञ्चगुञ्जाप्रमाणेन काकोडुम्बरवारिणा ।
कुष्ठेष्वष्टादशस्वेव देय एष भिषग्वरैः ॥ ६२ ॥
अचिरेणैव कालेन विनाशं यान्ति निश्चयः ।
पथ्यसेवा विधातव्या प्रणतिः सूर्य्यपादयोः ॥ ६३ ॥
साधकेन तथा सेव्यो रसो रोगौघनाशनः ।
पिप्पलीभिः समं दद्यात् कुष्ठरोगे 'रसेश्वरम्' ॥ ६४ ॥

राजराजेश्वरो रसः—

आतपे मर्दयेत् सूतं गन्धकं मृतताम्रकम् ।
सुहस्तमर्दितं तालं यावत् तत्र विलीयते ॥ ६५ ॥
भृङ्गराजद्रवं दत्त्वा दिनमात्रं विमर्दयेत् ।
त्रिफला खादिरं सारममृता वागुजीफलम् ॥ ६६ ॥
प्रत्येकं सूततुल्यं स्यात् चूर्णीकृत्य विमर्दयेत् ।
मध्वाज्याभ्यां लौहपात्रे कर्षाभ्यां भक्षयेत् ततः ॥ ६७ ॥
दद्रुकिटिमकुष्ठानि मण्डलानि विनाशयेत् ।
द्विगुञ्जेन निहन्त्याशु 'राजराजेश्वरो' रसः ॥ ६८ ॥

पारिभद्ररसः—

मूर्च्छितं सूतकं धात्री फलं निम्बस्य चाहरेत् ।
तुल्यांशं खादिरैः क्वाथैर्दिनं मर्द्यञ्च भक्षयेत् ।
निष्ककं दद्रुकुष्ठघ्नः 'पारिभद्रा'ऽऽह्वयो रसः ॥ ६९ ॥

प्रलेपाः—

गन्धकं मूलकक्षारमार्द्रकस्य रसैर्दिनम् ।

---

कृत्वा पुटपाकविधिना षडयामं पचनीयम् ॥ ५८-६४ ॥

**पारिभद्ररसे**—फलं निम्बस्येत्यन्वयः । अपामार्गस्य पञ्चाङ्गमिति मूल-पत्रपुष्पफलवल्कलरूपं पञ्चाङ्गम् ॥ ६९ ॥

मर्दितं हन्ति लेपेन सिध्मन्तु दिनमेकतः ॥ ७० ॥
कृष्णधुस्तूरजं मूलं गन्धतुल्यं विचूर्णयेत् ।
मर्द्यं जम्बीरनीरेण लेपनं सिध्मनाशनम् ॥ ७१ ॥
अपामार्गस्य पञ्चाङ्गं कदलीद्रवसंयुतम् ।
पुटदग्धञ्च गोमूत्रैर्लेपनं दद्रुनाशनम् ॥ ७२ ॥
चक्रमर्दस्य बीजञ्च दुग्धे पिष्ट्वा विमर्दयेत् ।
गन्धर्वतैलसंयुक्तं मर्दनात् सर्वकुष्ठजित् ॥ ७३ ॥

लङ्केश्वरो रसः—

भस्मसूताभ्रशुल्बानि गन्धं तालं शिलाजतु ।
अम्लेवतसतुल्यांशं त्र्यहं दत्त्वा विमर्दयेत् ॥ ७४ ॥
मध्वाज्याभ्यां वटीं कुर्यात् द्विगुञ्जां भक्षयेत् सदा ।
कुष्ठं हन्ति गजं सिंहो रसो लङ्केश्वरो[1] महान् ॥ ७५ ॥
त्रिफलानिम्बमाञ्जिष्ठा-वचापाटलमूलकम् ।
कटुकारजनीक्वाथं चानुपानं प्रयोजयेत् ॥ ७६ ॥

भूतभैरवो रसः—

शुद्धाः पञ्चदशात्र तालकमिताः शुद्धाश्च षड्गन्धकाः
सप्ताष्टौ नव तिन्तिडीयकफलात् काठिल्लकानां दश ।
सेहुण्ड्यर्कपयोभिरेव सततं सञ्चूर्ण्य तद्भाव्यते
रोहीतस्य जटारसेन मृदितं श्लक्ष्णं ततः खल्लितम् ॥ ७७ ॥
एकीकृत्य समस्तमेतदपि तत् टङ्कैकमेतज्जयेत्
पश्चाद्द्राक्षविशुद्धवारिसहितं किञ्चिच्च तत् पीयते ।
ताम्बूलं शशिखण्डमण्डितवटी मिश्रं ततः स्वापयेत्
शय्यायां मृगलोचनापरिभूतो कर्माणि सम्पादयेत् ॥ ७८ ॥
देहं वीक्ष्य सुखं मुखं न विरसं विज्ञाय सम्यक् सुधीः
छागीदुग्धमिहापि तं ननु दिनं तक्रञ्च तत् पाययेत् ।
नित्यं शान्तमिदं करोति नियतं सर्वौषधैर्वर्जितं
सामग्रामसमग्रमग्रिमतरं नीलञ्च पीतारुणम् ॥ ७९ ॥

---

१ लङ्केश्वरो रसो, महान् सिंहः=केसरी,कुष्ठं गजं हन्ति—इत्यन्वयः, व्यस्तरूपकम् ।

श्वेतं स्फीतमनल्पकं भृशमिति प्रायः क्रिमिव्याकुलं
गन्धालिप्रतिमं खटीकसदृशं कुष्ठं हि चोत्सादयेत्।
कुष्ठाष्टादश भूतभैरव इति ख्यातः क्षितौ हन्ति च
वातव्याधिनिकृन्तनः कफकृतान् कुष्ठान् विशेषानयम् ॥८०॥
हन्तीति ज्वरमुग्ररूपमधिकं दाहादिकञ्चामयम्।
कुर्य्याद् रूपमनङ्ग-रङ्गगुणभृद्, भृङ्गास्पदं विग्रहम् ॥ ८१ ॥
एवं स मासात् कुरुते समासात् पथ्यञ्च तथ्यं सकलं करोति।
भुञ्जीत भक्तं सततं प्रयुक्तं घृतं शृतं वा विकृतं तदेव ॥ ८२ ॥
स्वच्छन्ददुग्धेन सुखेन जग्धं पथ्यान्नमेतत् प्रवदन्ति सन्तः।
कुष्ठस्य दुष्टस्य निराकरोति गात्रञ्च कुर्य्यात् शुभगन्धयुक्तम् ॥८३॥

अर्केश्वरो रसः—

पलानीशस्य चत्वारि बलेर्द्वादश तावती।
ताम्रस्य चक्रिका देया रसस्योर्द्ध्वं शरावकम् ॥ ८४ ॥
दत्वा विबद्धभाण्डस्थं पूरयेद् भस्मना दृढम्।
अग्निं प्रज्वालयेत् यामद्वयं शीतं विचूर्णयेत् ॥ ८५ ॥
पुटेद् द्वादशधा सूर्य्य-दुग्धेनालोडितं पुनः।
वरापावकभृङ्गाणां त्रिभिर्द्रावैर्विभावयेत्।
'अयमर्केश्वरो' नाम्ना रक्तमण्डलकुष्ठजित् ॥ ८६ ॥

महातालेश्वरो रसः—

तालताप्यशिलासूतं शुद्धं टङ्कणसैन्धवम्।
समं सञ्चूर्णयेत् खल्ले सूताद् द्विगुणगन्धकम् ॥ ८७ ॥
गन्धाद् द्विगुणलौहञ्च जम्बीराम्लेन मर्दयेत्।
ततो लघुपुटे पाच्यं साङ्गशीतं समुद्धरेत् ॥ ८८ ॥
त्रिंशदंशं विषञ्चात्र क्षिप्त्वा सर्वं विचूर्णयेत्।
माहिषाज्येन संमिश्रं निष्कार्द्धं भक्षयेत् सदा ॥ ८९ ॥

---

**भूतभैरवरसे**—रोहितकजटारसेनेति रोहितकमूलरसेनेत्यर्थः ॥७७-८३॥

**अर्केश्वरे**—ईशस्य पारदस्य चत्वारि पलानि, बलेर्गन्धकस्य द्वादश पलानि ॥८४-८६ ॥

**महातालेश्वरे**—त्रिंशदंशं विषमिति सर्व्वचूर्णापेक्षया त्रिंशदंशं

मध्वाज्यैर्वागुजीचूर्णं कर्षं लिह्यात् ततः परम् ।
सर्वान् कुष्ठान् निहन्त्याशु 'महातालेश्वरो' रसः ॥ ९० ॥

विजयभैरवो रसः—

सप्तकञ्चुकनिर्मुक्तमूर्द्धशुद्धरसेन्द्रकम् ।
मृत्कटाहान्तरे तत्तु स्थापयेच्च समन्त्रकम् ॥ ९१ ॥
सूताद्द्विगुणितं तालं कूष्माण्डद्रवशोधितम् ।
दोलायन्त्रेण तैलादौ सप्तधा परिशोधितम् ॥ ९२ ॥
दत्त्वाऽऽप्लाव्य द्रवैर्झिण्ट्याः किञ्चिदाप्लाव्य युक्तितः ।
तयोर्द्विगुणितं भस्मं पलाशस्य परिक्षिपेत् ॥ ९३ ॥
पुनर्झिण्टोद्रवेणैव सर्वमाप्लाव्य यत्नतः ।
खाखसार्करसैर्भूयः परिप्लाव्य च पाकवित् ॥ ९४ ॥
पचेदवहितो वैद्यः शालाङ्गारेण यत्नतः ।
चतुर्विंशतियामन्तु पक्त्वा शीतलतां नयेत् ॥ ९५ ॥
अवतार्य्य काचपात्रे विधाय तदनन्तरम् ।
प्रयत्नेन कृतप्रायश्चित्तः शोधितदेहकः ॥ ९६ ॥
सिताहर्रातकीयुक्तं खादेद् रक्तिचतुष्टयम् ।
रक्तिकैकक्रमेणैव वर्द्धयेद् दिनसप्तकम् ॥ ९७ ॥
मधूदकं पिबेच्चानु नारिकेलजलञ्च वा ।
जिङ्गिनीसम्भवं क्वाथमथवा क्षौद्रनागरम् ॥ ९८ ॥
सुगन्धितैलैरभ्यङ्गं, कुर्य्यात् ताम्बूलचर्वणम् ।
पवनानलसूर्य्यांशुमत्स्यमांसदधीनि च ॥ ९९ ॥
शाकं ककारपूर्वञ्च वर्जयेत् मतिमान् नरः ।
वातरक्तमाममिश्रमामञ्चापि सुदारुणम् ॥ १०० ॥
सर्वकुष्ठञ्चाम्लपित्तं विस्फोटञ्च मसूरिकाम् ।
'विजयाख्यो' रसो नाम्ना हन्ति दोषानसृग्दरान् ॥ १०१ ॥

कुष्ठारिरसः—

काकोदुम्बरिकाचूर्णं ब्रह्मदण्डी बलात्रयम् ।

---

विषम् ॥ ८७–९० ॥

प्रत्यहं मधुना लीढं वातरक्तापहं नृणाम् ॥ १०२ ॥
क्षरद्रक्तं चलन्मांसं मासमात्रेण सर्वथा ।
गलत्पूयं पतत्कीटं त्रिटङ्कं सेव्यमीरितम् ॥ १०३ ॥

षडाननगुडिका—

विषोषणं टङ्कणपारदञ्च सुगन्धचूर्णञ्च समांशयुक्तम् ।
जैपालचूर्णं द्विगुणं गुडाक्तं सम्मर्द्य सर्वं गुडिका विधेया ॥१०४॥
विरेचनी सर्वविकारहन्त्री लघ्वी हिता दीपनपाचनीयम् ।
कुष्ठे हिता तीव्रतरे हि शूले चामाशये चाश्मगते विकारे ।
संशोधनी शीतजलेन सम्यक् सङ्ग्राहिणा चोष्णजलेन युक्ता ॥ १०५ ॥

कुष्ठनाशनः—

चिरबिल्वपत्रं पथ्या शिरीषञ्च बिभीतकम् ।
काकोडुम्बरिकामूलं मूत्रैरालोड्य फेनितम् ॥ १०६ ॥
कर्षमात्रं पिबेद्रोगी गोस्तन्या सह टङ्कणम् ।
सप्तसप्तकपर्य्यन्तं सर्वकुष्ठविनाशनम् ॥ १०७ ॥

## अथ श्वित्र-चिकित्सा ।

अथ श्वित्रस्य वक्ष्यामि नाशनोपायमुत्तमम् ॥ १०८ ॥

विजयानन्दो रसः—

शुद्धसूतस्य भागैकं द्विभागं शुद्धतालकम् ।
मृत्कटाहान्तरे पूर्वं स्थापयेच्च समन्वकम् ॥ १०९ ॥
द्वयोः समं पलाशस्य भस्म तस्योपरि क्षिपेत् ।
वक्त्रं मृत्कर्पटैर्लिप्त्वा शोषयेच्च खरातपे ॥ ११० ॥
चतुर्विंशतियामन्तु पक्त्वा शीतलतां नयेत् ।
अवतार्य काचपात्रे स्थापयेदतियत्नतः ॥ १११ ॥

---

**कुष्ठारिरसे**—बलात्रयामिति पीतपुष्पबला-श्वेतबला-नागबलाभेदात्- ॥ १०२-१०३ ॥

**षडाननगुडिकायाम्**—ऊषणं मरिचं, द्विगुणं गुडान्वितमिति सर्व्वचूर्णापेक्षया गुडस्य द्वैगुण्यम् ॥ १०४-१०५ ॥

कुष्ठविशेषत्वात् कुष्ठाधिकार एव श्वित्रचिकित्सामाह-**श्वित्रेत्यादि** १०८

विधिवत् सेवितश्चासौ हन्ति श्वित्रं चिरन्तनम् ।
सर्वंकुष्ठं निहन्त्याशु भास्करस्तिमिरं यथा ॥ ११२ ॥
रसोऽयं श्वित्रनाशाय ब्रह्मणा निर्मितः पुरा ।
'विजयानन्दनामा'ऽयं प्रसिद्धः क्षितिमण्डले ॥ ११३ ॥

श्वित्रदद्रुपाटललेपः—

अश्वहा रजनी हेम प्रत्यक्पुष्पी प्रदाह्य च ।
चूर्णञ्च स्वर्जिकाक्षारं नीरं दत्त्वा प्रपेषयेत् ॥ ११४ ॥
प्रच्छयित्वा ततः स्थानं मण्डलाग्रेण लिम्पति ।
पाटलानि पतन्त्यङ्गे विस्फोटाश्चातिदारुणाः ॥ ११५ ॥
सम्भवन्ति तिला रक्ताः कृष्णवर्णा भवन्ति ते ।
मीलन्ति स्वशरीरे च दिव्यरूपो भवेन्नरः ॥ ११६ ॥

श्वित्रहरो लेपः—

सैन्धवं रविदुग्धेन पेषयित्वाऽथ मण्डलम् ।
प्रच्छयित्वा प्रलेपोऽयं श्वित्रकुष्ठविनाशनः ॥ ११७ ॥

मुखश्वित्रहरो लेपः—

मुखे श्वेते च सञ्जाते कुर्य्याच्चेमां प्रतिक्रियाम् ।
गन्धकं चित्रकाशीशं हरितालं फलत्रयम् ।
मुखे लिम्पेद्दिनैकेन वर्णनाशो भविष्यति ॥ ११८ ॥

श्वित्रनाशनलेपद्वयम्—

गुञ्जाफलाग्निचूर्णस्य लेपनं श्वेतकुष्ठजित् ।
शिलाऽपामार्गभस्मापि लिप्त्वा श्वित्रं विनाशयेत् ॥११९॥

रसमाणिक्यम्—

तालकं वंशपत्राख्यं कूष्माण्डसलिले क्षिपेत् ।
सप्तधा वा त्रिधा वाऽपि दध्नाऽम्लेन तथैव च ॥ १२० ॥
शोधयित्वा पुनः शुष्कं चूर्णयेत तण्डुलाकृति ।

---

**श्वित्रदद्रुपाटलालेपे**—अश्वहा करवीरः, हेम धुस्तूरः, एषां करवीरादीनां क्षारं ग्राह्यम् ॥ ११४-११६ ॥

**गुञ्जेति**—अग्निश्चित्रकः, शिला मनःशिला ॥ ११९ ॥

**रस-माणिक्यं**, स्पष्टम्—१२०-१२५ इति कुष्ठरोग-चिकित्सा ।

ततः शरावके पात्रे स्थापयेत् कुशलो भिषक् ॥ १२१ ॥
बदरीपत्रकल्केन सन्धिलेपञ्च कारयेत् ।
अरुणाभं ह्यधः पात्रं तावज्ज्वाला प्रदीयते ॥ १२२ ॥
स्वाङ्गशीतं समुद्धृत्य माणिक्याभं हरेद्रसम् ।
तद्रक्तिद्वितयं खादेत् घृतभ्रामरमर्दितम् ॥ १२३ ॥
सम्पूज्य देवदेवेशं कुष्ठरोगाद्विमुच्यते ।
स्फुटितं गलितं कुष्ठं वातरक्तं भगन्दरम् ॥ १२४ ॥
नाडीव्रणं व्रणं दुष्टमुपदंशं विचर्चिकाम् ।
नासाऽऽस्यसम्भवान् रोगान् क्षतान् हन्ति सुदारुणान् ।
पुण्डरीकं चर्मदलं विस्फोटं मण्डलं तथा ॥ १२५ ॥

* इति कुष्ठरोग-चिकित्सा *

---

## अथ शीतपित्तोदर्द-कोठरोग-चिकित्सा ।

### क्षुद्रयोगाः—

यमानीगुडसंमिश्रः सूतभस्मद्विवल्लकः ।
शीतपित्तं निहन्त्याशु कटुतैलविलेपनम् ॥ १ ॥
सिद्धार्थरजनीकल्कं प्रपुन्नाडतिलैः सह ।
कटुतैलेन संमिश्रमेतदुद्वर्त्तनं हितम् ॥ २ ॥
दूर्वानिशायुतो लेपः कच्छूपामाविनाशनः ।
क्रिमिदद्रुहरश्चैव शीतपित्तहरः परः ॥ ३ ॥
कुष्ठोक्ताञ्च क्रियां कुर्य्यात् सर्वां युक्त्या चिकित्सकः ।
शीतपित्ते तथोदर्दे कोठे चैव समासतः ॥ ४ ॥

* इति शीतपित्तोदर्द-कोठरोग चिकित्सा *

## अथाम्लपित्तरोग-चिकित्सा ।

### अम्लपित्तान्तको रसः—

मृतसूताभ्रलौहानां तुल्यां पथ्यां विमर्दयेत् ।
माषमात्रं लिहेत् क्षौद्रैरम्लपित्तप्रशान्तये ॥ १ ॥

---

प्रागुक्तसङ्गत्यैव अम्लपित्तमुच्यते—अम्लपित्तान्तकरसे—तुल्यां पथ्यामिति सर्व्वचूर्णतुल्यां हरीतकीम् ॥ १ ॥

लीलाविलासो रसः—

रसो बलिर्व्योम रविश्च लौहं धात्र्यक्षनीरैस्त्रिदिनं विमर्द्य ।
तदल्पघृष्टं मृदुमार्कवेण सम्मर्दयेदस्य च वल्लयुग्मम् ॥ २ ॥
हन्त्यम्लपित्तं मधुनाऽवलीढं 'लीलाविलासो' रसराज एषः ।
छर्दिं सशूलं हृदयस्य दाहं निवारयेदेष न संशयोऽस्ति ॥ ३ ॥

पानीयभक्तवटिका—

त्रिवृता मुस्तकञ्चैव त्रिफला त्र्यूषणं तथा
प्रत्येकन्तु पलं भागं तदर्द्धौ रसगन्धकौ ॥ ४ ॥
लौहाभ्रकविडङ्गानां प्रत्येकञ्च पलद्वयम् ।
एतत् सकलमादाय चूर्णयित्वा विचक्षणः ॥ ५ ॥
त्रिफलायाः कषायेण वटिकां कारयेत् भिषक् ।
एकैकां भक्षयेत् प्रातस्तक्रञ्चापि पिबेदनु ॥ ६ ॥
हन्ति शूलं पार्श्वशूलं कुक्षिबस्तिगुदे रुजम् ।
श्वासं कासं तथा कुष्ठं ग्रहणीदोषनाशिनी ॥ ७ ॥

अथ क्षुधावती गुडिका
तत्र अभ्रशुद्धिः—

आशुभक्तोदकैः पिष्टमभ्रकं तत्र संस्थितम् ।
कन्दमाणास्थिसंहार·खण्डकर्णरसैरथ ॥ ८ ॥
तण्डुलीयकशालिञ्च·कालमारिषजेन च ।
वृश्चीरबृहतीभृङ्ग·लक्ष्मणाकेशराजकैः ॥ ९ ॥
पेषणं भावनं कुर्य्यात् पुटञ्चानेकशो भिषक् ।
यावन्निश्चन्द्रकं तत् स्याच्छुद्धिरेवं विहायसः ॥ १० ॥

---

**लीलाविलासरसे**—धात्र्यक्षनीरैरिति आमलकीविभीतकयोः क्वाथैः ॥ २–३ ॥

**क्षुधावतीगुडिकायाम्**—अभ्रकं कृष्णाभ्रकं ग्राह्यं श्रेष्ठत्वात्, तच्च सञ्चूर्ण्य काञ्जिके अहोरात्रं स्थापयित्वा तेनैव पेषणीयम् । ततः कन्दादिव्यस्तसमस्तानां स्वरसेन पुनः पेषणं भावनं पुटनञ्च बहुधा कुर्व्वीत यावन्निश्चन्द्रकत्वमभ्रस्य । खण्डकर्णः खारकोन इति ख्यातः । तण्डुलीयककालमारिषयोरिति स्वल्पपत्र·बृहत्पत्रभेदेन द्विविधमारिषयोः । वृश्चीरः श्वेतपुनर्नवा, भृङ्गी भृङ्गराजः, लक्ष्मणा स्वनामख्याता । विहायस इत्यभ्रस्य ॥ ८–१० ॥

तत्र लौहशुद्धिः—

स्वर्णमाक्षिकशालिञ्च-ध्मातं निर्वापितं जलं।
त्रैफलेऽथ विचूर्ण्यैवं लौहं कान्तादिकं पुनः॥ ११॥
बृहत्पत्र-करीकर्ण-त्रिफलावृद्धदारजैः।
माणकन्दास्थिसंहार-शृङ्गवेरभवै रसैः॥ १२॥
दशमूलीमुण्डितिका-तालमूलीसमुद्भवैः।
पुटितं साधु यत्नेन शुद्धिमेवमयो व्रजेत्॥ १३॥

तत्र मण्डूरशुद्धिः—

वशिरं श्वेतवाट्यालं मधुपर्णी मयूरकम्।
तण्डुलीयञ्च वर्षाभ्वं दत्त्वाऽधश्चोर्द्ध्वमेव च॥ १४॥
पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनत्रयम्।
यथाऽन्तर्बाष्पदग्धं स्यात् तथा स्थाप्यं दिनत्रयम्।
एवं विशोधितं लौह-किट्टं ग्राह्यं विचूर्णितम्॥ १५॥

तत्र रसशुद्धिः—

जयन्त्या वर्द्धमानस्य आर्द्रकस्य रसेन तु।
वायस्याश्चानुपूर्व्यैवं मर्दनं रसशोधनम्॥ १६॥

तत्र गन्धकशुद्धिः—

गन्धकं नवनीताख्यं क्षुद्रितं लौहभाजने।
त्रिधा चन्डातपे शुष्कं भृङ्गराजरसाप्लुतम्॥ १७॥

---

**लौहशुद्धिमाह**—स्वर्णमाक्षिकशालिञ्चाभ्यां पिष्टाभ्यां कान्तलौहं लिप्त्वा भस्त्राग्नौ ध्मातं, ततः वक्ष्यमाणामृतसारविधिना क्वथितत्रिफलाक्वाथे निर्व्वापितमित्यर्थः। तदेव निरुत्थमारितं लौहचूर्णं प्रक्षाल्य भानुपाकादिना शोधितं बृहत्पत्रकरिकर्णपलाशादिस्वरसैः पुटितं कुर्य्यादित्यर्थः। अत्र पुटनद्रव्येषु मध्ये येषां स्वरसप्राप्तिस्तेषां स्वरसो ग्राह्यः, येषां स्वरसो न लभ्यते तेषां क्वाथो ग्राह्यः॥११–१३।

**मण्डूरशुद्धिमाह**—वशिरमित्यादि वशिरादीनां मूलत्वक्पल्लवान् स्थालीमध्ये पातयित्वा तदुपरि पुराणमण्डूरं दत्त्वा तैरेव पल्लवादिभिराच्छाद्य गोमूत्रं दत्त्वा दिवसत्रयं व्याप्य दग्धं यथा स्यात् तथा पाको विधेयः॥ १६॥

**रसशुद्धिमाह**—जयन्त्या इत्यादि। वर्द्धमानः एरण्डः॥ १७॥

ततो वह्नौ द्रवीभूतं त्वरितं वस्त्रगालितम् ।
यत्नाद् भृङ्गरसे क्षिप्तं पुनः शुष्कं विशुध्यति ॥ १८ ॥

अथ क्षुधावतीप्रस्तुतीकरणम्—

गगनाद् द्विपलं चूर्णं लौहस्य पलमात्रकम् ।
लौहकिट्टपलार्द्धञ्च सर्वमेकत्र संस्थितम् ॥ १९ ॥
मण्डूकपर्णीवशिर·तालमूलीरसैः पुनः ।
वरीभृङ्गकेशराज·कालमारिषजैरथ ॥ २० ॥
त्रिफलाभद्रमुस्ताभिः स्थालीपाकाद्विचूर्णितम् ।
रसगन्धकयोः कर्षं प्रत्येकं ग्राह्यमेकतः ।
तन्मसृणे शिलाखल्ले यत्नतः कज्जलीकृतम् ॥ २१ ॥
वचा चव्यं यमानी च जीरके शतपुष्पिका ।
व्योषं मुस्तं विडङ्गञ्च ग्रन्थिकं खरमञ्जरी ॥ २२ ॥
त्रिवृता चित्रको दन्ती सूर्यावर्त्तः सितस्तथा ।
भृङ्गमाणककन्दाश्च खण्डकर्णक एव च ॥ २३ ॥
दण्डोत्पला केशराज·काला कर्कटकोऽपि च ।
एषामर्द्धपलं ग्राह्यं पटघृष्टं सचूर्णितम् ॥ २४ ॥
प्रत्येकं त्रिफलायाश्च पलार्द्धं पलमेव च ।
एतत्सर्वं समालोड्य लौहपात्रे तु भावयेत् ॥ २५ ॥
आतपे दण्डसङ्घृष्टमार्द्रकस्य रसैस्त्रिधा ।
तद्रसेन शिलापिष्टं गुडिकां कारयेद्भिषक् ॥ २६ ॥
बदरास्थिनिभां शुष्कां सुगुप्ताञ्च निधापयेत् ।
तत् प्रातर्भोजनादौ तु सेवितं गुडिकात्रयम् ॥ २७ ॥

---

**गन्धकशुद्धिमाह**—गन्धकमित्यादि । क्षुद्रितमिति कुट्टितम् ॥ १८ ॥

तत्र गगनादि सर्व्वमेकीकृत्य मण्डूकपर्ण्यादिस्वरसेनैकः स्थालीपाकः । ततः शतवर्य्या रसेन द्वितीयः स्थालीपाकः । ततास्त्रिफलादिक्वाथेन तृतीयः स्थालीपाकः । निश्चलस्तु मण्डूकपर्ण्यादितालमूल्यन्तरसेन पुटनमाह, तत् तु न सम्यग् व्यवहारसिद्धम् । एतदनन्तरं यद्विधेयं तदाह—रसगन्धकयोः कर्षमित्यादि । रसगन्धकयोः कर्षमिति च्छेदः, तस्मान्मिलितरसगन्धकयोः कर्ष इत्यर्थः । वचाचव्यादीनि प्रक्षेपद्रव्याणि । खरमञ्जरी अपामार्गः । प्रत्येकं

अम्लोदकानुपानञ्च हितं मधुरवर्जितम् ।
दुग्धञ्च नारिकेलञ्च वर्जनीयं विशेषतः ॥ २८ ॥
भोज्यं यथेष्टमिष्टञ्च वारिभक्ताम्लकाञ्जिकम् ।
हन्त्यम्लपित्तं विविधं शूलञ्च परिणामजम् ॥ २९ ॥
पाण्डुरोगञ्च गुल्मञ्च शोथोदरगुदामयान् ।
यक्ष्माणं पञ्च कासांश्च मन्दाग्नित्वमरोचकम् ॥ ३० ॥
प्लीहानं श्वासमानाहमामवातं सुदारुणम् ।
गुडी 'क्षुधावती' सेयं विख्याता रोगनाशिनी ॥ ३१ ॥

अविपत्तिकरं चूर्णम्—

त्रिकटु त्रिफला मुस्तं विडञ्चैव विडङ्गकम् ।
एला पत्रञ्च सर्वञ्च समभागं विचूर्णयेत् ॥ ३२ ॥
यावन्त्येतानि चूर्णानि लवङ्गं तत्समं भवेत् ।
सर्वचूर्णद्विगुणितं त्रिवृच्चूर्णं प्रदापयेत् ॥ ३३ ॥
सर्वमेकीकृतं यावत् तावच्छर्करयाऽन्वितम् ।
सर्वमेकीकृतं तत्तु स्निग्धभाण्डे निधापयेत् ॥ ३४ ॥
भोजनादौ ततोऽन्ते च मध्वाज्याभ्यामिदं शुभम् ।
शीततोयानुपानञ्च नारिकेलोदकं तथा ॥ ३५ ॥
ततो यथेष्टमाहारं कुर्य्यात् क्षीररसाशनः ।
अम्लपित्तं निहन्त्याशु विबद्धमलमूत्रकम् ॥ ३६ ॥
अग्निमान्द्यभवान् रोगान्नाशयेच्चाविकल्पतः ।
बलपुष्टिकरञ्चैव शूलदुर्नामनाशनम् ॥ ३७ ॥
प्रमेहान् विंशतिञ्चैव मूत्राघातान् तथाऽश्मरीम् ।
'अविपत्तिकरं' चूर्णमगस्त्यमुनिभाषितम् ॥ ३८ ॥

* इति अम्लपित्तरोग चिकित्सा *

## अथ विसर्प-विस्फोट-तन्तुकरोग-चिकित्सा ।

कालाग्निरुद्रो रसः—

सूताभ्रकान्तलौहानां भस्म गन्धकमाक्षिकम् ।

---

त्रिफलायाश्चेति तेन मिलितत्रिफलायाः सार्द्धं पलं भवतीत्यर्थः ॥ १९-३१ ॥
इत्यम्लपित्त-चिकित्सा ।

वन्यकर्कोटकद्रावैस्तुल्यं मर्द्यं दिनावधि ॥ १ ॥
वन्यकर्कोटिकाकन्दे क्षिप्त्वा लिप्त्वा मृदा बहिः ।
भूधराख्ये पुटे पश्चाद्दिनैकं तद्विपाचयेत् ॥ २ ॥
दशमांशं विषं योज्यं माषमात्रन्तु भक्षयेत् ।
रसः कालाग्निरुद्रोऽयं दशाहेन विसर्पनुत् ।
पिप्पलीमधुसंयुक्तमनुपानं प्रकल्पयेत् ॥ ३ ॥

प्रक्रियान्तरम्—

पित्तनाशकभैषज्यं योगवाहिरसं सुधीः ।
कुष्ठोद्दिष्टांक्रियां सर्वामपि कुर्य्याद्भिषग्वरः ॥ ४ ॥

विस्फोटकारिरसः—

गुडूचीनिम्बजैः क्वाथैः खदिरेन्द्रयवाम्बुना ।
कर्पूरत्रिसुगन्धिभ्यां युक्तं सूतं द्विवल्लकम् ।
विस्फोटं त्वरितं हन्याद्वायुर्जलधरानिव ॥ ५ ॥

स्नायुकारियोगः—

गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम् ।
विविधं स्नायुकञ्चोग्रं हन्त्यवश्यं न संशयः ॥ ६ ॥

तन्तुकारियोगः—

सप्तपर्णशिफाकल्क-पानाद्वा लेपनाद् तथा ।
मुषलीमूलपानात्तु तन्तुकाख्यो विनश्यति ॥ ७ ॥

* इति विसर्प-विस्फोट-तन्तुकरोगचिकित्सा *

---

## अथ मसूरिकारोग-चिकित्सा ।

दुर्लभो रसः—

अथ शुद्धस्य सूतस्य मूर्च्छितस्य मृतस्य च ।

---

अम्लपित्तवद् विसर्पस्यापि पित्तसम्भरस्यावश्यम्भावात् तथा प्रायस्तुल्यचिकित्सितत्वाच्च तदनन्तरं विसर्पादिचिकित्सामाह-**सूताभ्रेत्यादि**॥१ ४॥

**गुडचीत्यादौ**-सूत भस्मसूतम् ॥ ५ ॥

**सप्तपर्णेति** सप्तपर्णाशिफा सप्तपर्णमूलम् ॥ ७ ॥

इति विसर्पविस्फोटतन्तुकरोग-चिकित्सा ।

द्विबला पिप्पली धात्री रुद्राक्षघृतमाक्षिकैः।
पापरोगान्तको योगः पृथिव्यामेव 'दुर्लभः'॥ १॥

* इति मसूरिकारोग-चिकित्सा *

## क्षुद्ररोग-चिकित्सा।

क्षुद्ररोगेषु मतिमांस्तत्तदौषधयोगतः।
भस्मसूतं प्रयुञ्जीत तथाऽत्र योगवाहिकम्॥ १॥

* इति क्षुद्ररोग चिकित्सा *

## अथ मुखरोग-चिकित्सा।

चतुर्मुखो रसः—

मृतं सूतं मृतं स्वर्णं द्वाभ्यान्तुल्यां मनःशिलाम्।
विमर्दयेच्च तैलेन चातसीसम्भवेन च॥ १॥
तद्गोलं वस्त्रतो बद्ध्वा लेपयेच्च समन्ततः।
अतसीफलकल्केन दोलायन्त्रे त्र्यहं पचेत्।
उद्धृत्य धारयेद्वक्त्रे जिह्वादन्तास्य रोगनुत्॥ २॥

पार्वतीरसः—

पार्वतीकाशिसम्भूतौ दरदो मधुपुष्पकम्।
गुडूची शाल्मली द्राक्षा धान्यभूनिम्बमार्कवम्॥ ३॥
तिलमुद्गपटोलञ्च कूष्माण्डं लवणद्वयम्।
यष्टिका धान्यकं भस्म चान्तर्दग्धं समं समम्॥ ४॥

---

विस्फोटप्रभेदत्वात् तथा प्रायस्तुल्यचिकित्सितत्वात् तदनन्तरं मसूरिकाचिकित्सामाह—**दुर्लभरसे**—द्विबलेति श्वेतपीतपुष्पभेदात् बलाद्वयं ग्राह्यम्॥ १॥

इति मसूरिका-चिकित्सा।

क्षुद्ररोगविशेषत्वात् मसूरिकानन्तरं क्षुद्ररोगचिकित्सामाह,—**क्षुद्ररोगेत्यादौ**-तत्तदौषधयोगत इति तत्तद्रोगनाशकौषधयोगत इत्यर्थः॥ १॥

इति क्षुद्ररोग-चिकित्सा।

रोगगणत्वसामान्यात् क्षुद्ररोगानन्तरं मुखरोगचिकित्सितमुच्यते—**पार्व्वतीरसे**-पार्व्वतीसम्भूतो गन्धकः, काशीसम्भूतः पारदः। दरदो हि-

मुखरोगं निहन्त्याशु 'पार्वतीरस' उत्तमः ।
पित्तज्वरं चिरं हन्ति तिमिरञ्च तृषामपि ॥ ५ ॥

मुखरोगहरी—

रसगन्धौ समौ ताभ्यां द्विगुणञ्च शिलाजतु ।
गोमूत्रेण विमर्द्याथ सप्तधाऽऽर्द्रद्रवेण च ॥ ६ ॥
जातीनिम्बमहाराष्ट्री-रसैः सिध्यति पाकहा ।
कणामधुयुता हन्ति मुखरोगं सुदारुणम् ।
गुञ्जाष्टकमिता तालु-गलौष्ठदन्तरोगनुत् ॥ ७ ॥

महाराष्ट्र्यादिप्रतिसारणम्—

महाराष्ट्र्यश्वगन्धाभ्यां मुखञ्च प्रतिसारयेत् ।
धारणात् सेवानाच्चैव हन्ति सर्वान् मुखभयान् ॥ ८ ॥

पर्पटीरसप्रयोगोपदेशः—

सर्वास्यामयजित सेव्यो मधुना पर्पटीरसः ॥ ९ ॥

पथ्यावटी—

पथ्याबालककुष्ठञ्च गोमूत्रेण प्रसाधयेत् ।
एषा च वटिका हन्ति मुखदौर्गन्ध्यसन्ततिम् ॥ १० ॥

* इति मुखरोग-चिकित्सा *

## अथ कर्णरोग–चिकित्सा ।

कफकेतुरसः—

व्योषमिज्जलबीजञ्च शङ्खभस्म विषान्वितम् ।
मरीचसदृशं खादेत् 'कफकेतुं' महारसम् ॥ १ ॥

भैरवो रसः—

सूतो गन्धो विषञ्चैव टङ्कणं सकपर्दकम् ।
मरिचेन समायुक्तञ्चार्द्रतोयेन भावितम् ॥ २ ॥

---

ङ्गुलः । मार्कवं भृङ्गराजः ॥ ५ ॥

पथ्यावटिकायां–सर्व्वचुर्णापेक्षया अष्टगुणेन गोमूत्रेण पाचितम् ॥१०॥

इति मुखरोग-चिकित्सा ।

मुखरोगेषु जिह्वाश्रयरोगोऽभिहितः जिह्वा चेन्द्रियाधिष्ठानमत इन्द्रियाधिष्ठानदुष्टिसाम्यात् तदनन्तरं कर्णरोगचिकित्सितमुच्यते ॥ १ ॥

वह्निमान्द्यञ्चामरोगं श्लेष्माणं ग्रहणीगदम्।
सन्निपातं तथा शोथं हन्ति श्रोत्रोद्भवं गदम् ॥ ३ ॥

विधानान्तरम्—

योगवाहिरसाः सर्वे प्रयोक्तव्या भिषग्वरैः।
'कर्णरोगेषु सर्वेषु पीनसादिषु नित्यशः ॥ ४ ॥

इति कर्णरोग-चिकित्सा

## अथ नासारोग-चिकित्सा।

पञ्चामृतो रसः—

शुद्धसूतं समादाय गन्धभागद्वयं ततः।
त्रिभागं टङ्कणञ्चापि विषं भागचतुष्टयम् ॥ १ ॥
पञ्चभागं तथा देयं मरिचस्य प्रयत्नतः।
शृङ्गवेररसैः पिष्ट्वा गुडिका पञ्चरक्तिका ॥ २ ॥
अनुपानं हितं योज्यं सर्वरोगप्रशान्तये।
जलदोषोद्भवे रोगे महत्युग्रे जलोदरे ॥ ३ ॥
सन्निपातेषु रोगेषु नासाव्याधौ सपीनसे।
व्रणशोथे व्रणे चैव उपदंशे भगन्दरे ॥ ४ ॥
नाडीव्रणे ज्वरे चैव नखदन्तविषातुरे।
'पञ्चामृतरसो' योज्यः सर्वरोगप्रशान्तये ॥ ५ ॥

*इति नासारोग-चिकित्सा*

## अथ नेत्ररोग-चिकित्सा।

नेत्राऽशनिरसः—

अभ्रं ताम्रं तथा लौहं माक्षिकञ्च रसाञ्जनम्।

---

**भैरवरसे**—कपर्दकं वराटकं, आर्द्रतोयेनेति आर्द्रकरसेन ॥ २–३ ॥

इति कर्णरोग-चिकित्सा।

उक्तसङ्गत्यैव कर्णरोगचिकित्सानन्तरं नासारोगचिकित्सितमुच्यते। **पञ्चामृतरसे**-गन्धभागद्वयमिति एकभागापेक्षया गन्धकस्य द्वैगुण्यम् एवं त्रिभागमित्यादि ॥ १–५ ॥

इति नासारोग-चिकित्सा।

पातनायन्त्रसंशुद्धं गन्धकं नवनीतकम् ॥ १ ॥
पलप्रमाणं प्रत्येकं गृह्णीयाच्च विधानवित् ।
सर्वमेकीकृतं चूर्णं वैद्यैः कुशलकर्मभिः ॥ २ ॥
ततस्तु भावना कार्य्या त्रिफलाभृङ्गराजकैः ।
ततः प्रक्षिप्य चूर्णञ्च पिप्पलीमूलयष्टिका ॥ ३ ॥
एला पुनर्नवा दारु पाठा भृङ्गं शटी वचा ।
उत्पलं चन्दनञ्चैषां श्लक्ष्णचूर्णं प्रदापयेत् ॥ ४ ॥
माषमेकं प्रदातव्यं घृतश्रीमधुमर्दितम् ।
मर्दनं लौहदण्डेन पात्रे लौहमये दृढे ॥ ५ ॥
उष्णोदकञ्चानुपानं प्रयोक्तव्यं सुखावहम् ।
यावतो नेत्ररोगांश्च पानादेव विनाशयेत् ॥ ६ ॥
सरक्ते रक्तपित्ते च रक्ते चक्षुःस्रुतेऽपि च ।
नक्तान्ध्ये तिमिरे काचे नीलिकापटलार्बुदे ॥ ७ ॥
अभिष्यन्देऽधिमन्थे च पिष्टे चैव चिरन्तने ।
नेत्ररोगेषु सर्वेषु वातपित्तकफेषु च ।
युञ्जीत तान् निहन्त्येव वृक्षमिन्द्रा'ऽशनि'र्यथा ॥ ८ ॥

नयनामृतलौहम्—

त्रिकटु त्रिफला शृङ्गी शटी रास्ना महौषधम् ।
द्राक्षा नीलोत्पलञ्चैव काकोली मधुयष्टिकम् ॥ ९ ॥
वाट्यालं केशराजञ्च कण्टकारीद्वयं पलम् ।
लौहाभ्रयोः पलं दत्त्वा वक्ष्यमाणेन भावयेत् ॥ १० ॥
त्रिफलायाश्च तोयेन भृङ्गराजरसेन वा ।
भावयित्वा वटी कार्य्या बदरास्थि-निभा शुभा ।
यावतो 'नेत्ररोगां'श्च निहन्यान्नात्र संशयः ॥ ११ ॥

---

उक्तसम्बन्धादेव नेत्ररोगचिकित्सामाह—**नेत्राशनिरसे**-गन्धकं नवनीतकमिति गन्धकविशेषणम् नवनीताह्वयंगन्धकमित्यर्थः, 'आमलसाही' गन्धक इति ख्यातः । त्रिफलाभृङ्गराजकैरिति त्रिफलारसैः भृङ्गराजरसैश्च ॥१-८॥

**नयनामृतलौहे**—शृङ्गी कर्कटशृङ्गी, वाट्यालं श्वेतवाट्यालं, कण्टकारीद्वयं कण्टकारी बृहती च ॥ ९-११ ॥

क्षतशुक्रहरो गुग्गुलुः—

अयःसयष्टीत्रिफलाकणानां चूर्णानि तुल्यानि पुरेण नित्यम् ।
सर्पिर्मधुभ्यां सह भक्षितानि शुक्राणि काचानि निहन्ति शीघ्रम् ॥१२॥

तिमिरहरलौहम्—

त्रिफलापञ्चयष्ट्याह्व-युक्तं सायं निषेवितम् ।
लौहं तिमिरकं हन्ति सुधांशुस्तिमिरं यथा ॥ १३ ॥

*इति नेत्ररोग-चिकित्सा ।*

---

## अथ शिरोरोग-चिकित्सा ।

रसचन्द्रिका वटी—

त्रैलोक्यविजयाबीजं बीजमुन्मत्तकस्य च ।
कण्टकारीबीजकञ्च बीजं हिज्जलकस्य च ॥ १ ॥
बीजञ्च वृद्धदारस्य समौ गन्धकपारदौ ।
आर्द्रकैर्वटिका कार्य्या कलायपरिमाणतः ॥ २ ॥
एषा तोयानुपानेन प्रातः खाद्या हिताशिना ।
चिरजं सर्वजञ्चैव शिरोरोगं सुदारुणम् ॥ ३ ॥
आमवातं श्लेष्मरोगं मन्यास्तम्भं गलग्रहम् ।
ग्रहणीं श्लीपदं हन्ति ह्यन्त्रवृद्धिं भगन्दरम् ॥ ४ ॥
कामलां शोथपाण्डुत्वं पीनसार्शोगुदामयान् ।
वासुदेवेन कथिता वटिका 'रसचन्द्रिका' ॥ ५ ॥

शिरोवज्ररसः—

पलं सूतः पलं गन्धः पलं लौहं पलं रवेः ।
गुग्गुलोः पलचत्वारि तदर्द्धं त्रिफलारजः ॥ ६ ॥

---

**क्षतशुक्रहरगुग्गुलौ**—पुरेणेति गुग्गुलुना, स च सर्व्वचूर्णसमः ॥१२॥

**तिमिरलौहे**—सर्वचूर्ण समं लौहं प्रदेयम् ॥ १३ ॥

इति नेत्ररोग-चिकित्सा ।

कर्णनासानेत्राणामधिष्ठानत्वेन चक्षूरोगचिकित्सानन्तरं शिरोरोग-चिकित्सितमुच्यते—**रसचन्द्रिकायां**—त्रैलोक्यविजयाबीजमिति—इन्द्राशन-बीजम्, उन्मत्तस्य च बीजमिति धुस्तूरबीजम् ॥ १-५ ॥

**शिरोवज्ररसे**—रविस्ताम्रं, तदर्द्धं त्रिफलारज इति गुग्गुलोरर्द्धं त्रि-

यष्टीमधु कणा शुण्ठी गोक्षुरं क्रिमिनाशनम् ।
तोलकं दशमूलञ्च प्रत्येकंपरिकल्पयेत् ॥ ७ ॥
क्वाथेन दशमूल्याश्च यथास्वं परिभावयेत् ।
घृतयोगेन कर्त्तव्या माषकप्रमिता वटी ॥ ८ ॥
छागीदुग्धेन वा सेव्या मधुना पयसाऽथवा ।
वातिकीं पैत्तिकीञ्चैव श्लैष्मिकीं सान्निपातिकीम् ॥ ९ ॥
शिरोऽर्त्तिं नाशयत्याशु वज्रं मुक्तमिवासुरम् ।
'शिरोवज्ररसो' नाम चन्द्रनाथेन भाषितः ॥ १० ॥

चन्द्रकान्तरसः—

मृतसूताभ्रकं तीक्ष्णं ताम्रं गन्धं समं समम् ।
स्नुहीक्षीरैर्दिनं मर्द्यं ततस्तु माषमात्रकम् ॥ ११ ॥
मधुना मर्दितं सेव्यं लौहपात्रे दिने दिने ।
सूर्य्यावर्त्तादिकान् तूर्णं शिरोरोगान् विनाशयेत् ॥ १२ ॥

महालक्ष्मीविलासः—

लौहमभ्रं विषं मुस्तं फलत्रयकटुत्रयम् ।
धुस्तूरं वृद्धदारञ्च बीजमिन्द्राशनस्य च ॥ १३ ॥
द्वयं गोक्षुरकञ्चैव पिप्पलीमूलमेव च ।
एतत् सर्वं समं ग्राह्यं रसे धुस्तूरकस्य च ॥ १४ ॥
भावयित्वा वटी कार्य्या द्विगुञ्जाफल-मानतः[1] ।
'महालक्ष्मीविलासो'ऽयं सन्निपातनिवारकः ॥ १५ ॥

* इति शिरोरोग-चिकित्सा *

## अथ प्रदररोग-चिकित्सा ।

प्रदरान्तकलौहम्—

हरितालं लौहताम्रे वङ्गमभ्रं वराटिका ।

---

फलाचूर्णमित्यर्थः ॥ ६–१० ॥

**महालक्ष्मीविलासे**—धुस्तूरं धुस्तूरबीजम् एवं वृद्धदारकबीजम् इन्द्राशनस्य च बीजं ग्राह्यम् । गोक्षुरद्वयमिति स्वल्पपत्रबृहत्पत्रभेदात् गोक्षुरद्वयं ग्राह्यम् ॥ १३-१५ ॥ इति शिरोरोग-चिकित्सा ।

---

१ 'द्विगुञ्जापरिमाणतः'–इति पाठः समीचीनः, एवमन्यत्राऽपि ।

त्रिकटु त्रिफला चित्रं विडङ्गं पटुपञ्चकम् ॥ १ ॥
चविका पिप्पली शङ्खं वचा हवुषपाकलम् ।
शटी पाठा देवदारु एला च वृद्धदारकम् ॥ २ ॥
एतानि समभागानि सञ्चूर्ण्य वटिकां कुरु ।
शर्करामधुसंयुक्तां घृतेन भक्षयेत् पुनः ॥ ३ ॥
रक्तं श्वेतं हन्ति पीतं नीलं प्रदरदुस्तरम् ।
कुक्षिशूलं कटीशूलं योनिशूलञ्च सर्वजम् ॥ ४ ॥
मन्दाग्निमरुचिं पाण्डुं कृच्छ्रश्वासञ्च कासनुत् ।
आयुःपुष्टिकरं बल्यं रजोवर्णप्रसादनम् ॥ ५ ॥

### प्रदरान्तको रसः—

शुद्धसूतं तथा गन्धं, गन्धतुल्यञ्च रूप्यकम् ।
खर्परञ्च वराटञ्च शाणमानं पृथक् पृथक् ॥ ६ ॥
तोलकत्रितयञ्चैव लौहचूर्णं क्षिपेत् सुधीः ।
दिनैकं कन्यकानीरैः मर्दयेच्च भिषग्वरः ।
असाध्यं 'प्रदरं' हन्ति भक्षणात्-नात्र संशयः ॥ ७ ॥

### मधुकादिचूर्णम्—

यष्टीमधुनिशाचूर्ण-तोलकेन समन्वितम् ।
वङ्गभस्मार्कपत्रस्य रसेनाप्लाव्य पीयते ।
प्रातः प्रातः प्रतिदिनं प्रदरं हन्ति दुस्तरम् ॥ ८ ॥

### पुष्करलेहः—

रसाञ्जनं शुभा शृङ्गी चित्रकं मधुयष्टिकम् ।
धान्यतालीशगायत्री द्विजीरं त्रिवृता बला ॥ ९ ॥
दन्तीत्र्यूषणकञ्चापि पलार्द्धञ्च शिलाजतु ।

---

स्त्रीपुंसानां साधारणविकाराणां तथा पुम्प्रतिनियतस्योपदंशादेश्चिकि-
त्सोक्ता, इदानीं स्त्रीनियतरोगाणां चिकित्सा वक्तव्या; तत्र च योनिव्या-
पत्तिविशेषेऽप्यार्त्तवप्रवृत्तिसम्भवात् प्रथमं दुष्टार्त्तवप्रवृत्तिस्वरूपस्य प्रदरस्य
चिकित्सितमुच्यते—**प्रदरान्तकलौहे**-वराटिका कपर्दः, पटुपञ्चकं पञ्चल-
वणं, शङ्खं शङ्खनाभिः, पाकलं कुष्ठम् ॥ १-५ ॥
**पुष्करलौहे**-शुभा वंशलोचना, गायत्री खदिरः। द्विजीरमिति जीरकं

चतुःपलं माक्षिकस्याऽऽमलस्य च क्षिपेत् ततः ॥ १० ॥
जातीकोषलवङ्गञ्च कक्कोलं गोस्तनीन्तथा ।
चातुर्जातकखर्जूरं कर्षमेकं पृथक् पृथक् ॥ ११ ॥
प्रक्षिप्य मर्दयित्वा च स्निग्धभाण्डे निधापयेत् ।
एष लेहवरः श्रीदः सर्वरोगकुलान्तकः ।
यत्र यत्र प्रयोज्यः स्यात् तत्तदामयनाशनः ॥ १२ ॥
अनुपानं प्रयोक्तव्यं देशकालानुसारतः ।
सर्वोपद्रवसंयुक्तं प्रदरं सर्वसम्भवम् ॥ १३ ॥
द्वन्द्वजं चिरजञ्चैव रक्तपित्तं विनाशयेत् ।
कासश्वासाम्लपित्तञ्च क्षयरोगमथापि वा ॥ १४ ॥
सर्वरोगप्रशमनो बलवर्णाग्निवर्द्धनः ।
'पुष्कराख्यो' लेहवरः सर्वत्रैवोपयुज्यते ॥ १५ ॥

धात्र्यादिचूर्णम्—

धात्री च पथ्या च रसाञ्जनञ्च विचूर्ण्य सर्वं सजलं निपीतम् ।
अनन्तरक्तस्रवमुग्रवेगं निवारयेत् सेतुरिवाम्बुवेगम् ॥ १६ ॥
रक्तपित्तहरं सर्वं प्रदरे नूतने तथा ।
रक्तातीसारकथितं सर्वमत्र प्रयोजयेत् ॥ १७ ॥

* इति प्रदररोग-चिकित्सा *

---

## अथ योनिव्यापच्चिकित्सा ।

वातहरचिकित्साऽतिदेशः क्षालनादौ त्रिफला च—
समस्तं वातजित् कर्म योनिव्यापत्सु शस्यते ।
क्षालनस्वेदलेपांश्च वरानीरेण कारयेत् ॥ १ ॥

पथ्यादिक्षालनम्—

प्रक्षालयेद्भगं नित्यं पथ्यामलकवल्कलैः ।

---

कृष्णजीरञ्च ॥ ९.१५ ॥

इति प्रदररोग-चिकित्सा ।

---

स्त्र्यधिकारानुवृत्तेः प्रदुष्टार्त्तवकार्य्यत्वाच्च तदनन्तरं योनिव्यापच्चि-

वृद्धाऽपि कामिनी नित्यं बालावत् कुरुते रतिम् ॥ २ ॥

* इति योनिव्यापचिकित्सा *

## अथ सूतिकारोग-चिकित्सा ।

### सूतिकारिरसः—

रसगन्धककृष्णाभ्रं तदर्द्धं मृतताम्रकम् ।
चूर्णितं मर्दयेद् यत्नाद्भेकपर्णीरसेन च ॥ १ ॥
छायाशुष्का वटी कार्या द्विगुञ्जाफलमानतः ।
क्षीरत्रिकटुना युक्ता सूतिकाऽऽतङ्कनाशिनी ।
ज्वरं तृष्णाऽरुचिश्वासं शोथं हन्ति न संशयः ॥ २ ॥

### सूतिकाविनोदरसः—

रसगन्धकतुत्थञ्च त्र्यहं जम्बीरमर्दितम् ।
त्रिर्भावितं त्रिकटुना देयं गुञ्जाचतुष्टयम् ।
गर्भिण्याः शूलविष्टम्भ-ज्वराजीर्णेषु योजयेत् ॥ ३ ॥

### चिन्तामणिरसः—

'चिन्तामणिरसे' देयं तुत्थस्थाने सुवर्णकम् ॥ ४ ॥

### बृहत्सूतिकाविनोदरसः—

शुण्ठ्या भागो भवदेको द्वौ भागौ मरिचस्य च ।
पिप्पल्याश्च त्रिभागं स्यादर्द्धभागञ्च व्योमकम् ॥ ५ ॥
जातीकोषस्य भागौ द्वौ द्वौ भागौ तुत्थकस्य च ।
सिन्धुवारजलेनैव मर्दयेदेकयामतः ।
मधुना सह भोक्तव्यः 'सूतिकाऽतङ्कनाशनः' ॥ ६ ॥

### अपरसूतिकारिरसः—

टङ्कणं मूर्च्छितं सूतं गन्धको हेम तारकम् ।

---

कित्सितमुच्यते—**समस्तमित्यादि** ॥ १-२ ॥

इति योनिव्यापच्चिकित्सा ।

---

क्रमप्राप्तत्वात् तथावशिष्टस्त्रीरोगाच्चिकित्साभिधानार्थं सूतिकारोगाचि-कित्सितमुच्यते—**सूतिकारिरसे**-तदर्द्धं ताम्रभस्मकमिति एकभागापेक्षया ताम्रस्यार्द्धभागत्वम् । भेकपर्णी 'थानकुनी' ॥ १-२ ॥

जातीफलं तथा कोषं लवङ्गैले च धातकी ॥ ७ ॥
वत्सकेन्द्रयवं पाठा शृङ्गी विश्वाऽजमोदिका: ।
गुडी प्रसारणीनीरैश्चतुर्गुञ्जाप्रमाणतः ॥ ८ ॥
भक्षयेत् तद्रसैः प्रातः सूतिकाऽतङ्कशान्तये ।
जीर्णज्वरं हन्ति शोथं ग्रहणीप्लीहकासनुत् ॥ ९ ॥

सूतिकाध्नो रसः—

रसगन्धकलौहाभ्रं जातीकोषं सुवर्णकम् ।
समांशं मर्दयेत् खल्ले छागीदुग्धेन पेषयेत् ॥ १० ॥
गुञ्जाद्वयप्रमाणेन वटिकां कुरु यत्नतः ।
ज्वरातीसाररोगघ्नः सूतिकाऽऽतङ्कनाशनः ।
'सूतिकाघ्नो' रसो नाम ब्रह्मणा परिकीर्त्तितः ॥ ११ ॥

सूतिकान्तको रसः—

रसाभ्रगन्धकव्योषं सुवर्ण-माक्षिकं त्रिषम् ।
सर्वमेकीकृतं चूर्णं खादेद्रक्तिचतुष्टयम् ॥ १२ ॥
सूतिकाग्रहणीरोगं वह्निमान्द्यञ्च नाशयेत् ।
अतिसारञ्च शमयेदपि वैद्यविवर्जितम् ।
कासश्वासातिसारघ्नो वाजीकरण उत्तमः ॥ १३ ॥

गर्भचिन्तामणि रसः—

जातीफलं टङ्कणञ्च व्योषं दैत्येन्द्ररक्तकम् ।
तच्चूर्णं समभागेन मर्दितं प्रहरद्वयम् ॥ १४ ॥
जम्बीररसयोगेन वटीं कुर्याद्विचक्षणः ।
गुञ्जाद्वयप्रमाणान्तु खलु वैद्यः प्रयत्नतः ॥ १५ ॥
आर्द्रकस्य रसेनैव भक्षयेदुष्णवारिणा ।
निहन्ति सर्वरोगञ्च भास्करस्तिमिरं यथा ॥ १६ ॥

अपरगर्भचिन्तामणिरसः—

रसं तारं तथा लौहं प्रत्येकं कर्षमानतः ।

---

**सूतिकारिरसे**-तारकं रौप्यं, कोषं जातीकोषं, वत्सकः कुटजः ॥७-९॥
**अपरगर्भचिन्तामणिरसे**—तारं रौप्यं, कोषं जातीकोषं, शतावरी शतमूली ॥ १७-१९ ॥

कर्षत्रयं तथा चाभ्रं कर्पूरं वङ्गताम्रकम् ॥ १७ ॥
जातीफल तथा कोषं गोक्षुरञ्च शतावरी ।
बलाऽतिबलयोर्मूलं प्रत्येकं तोलकं शुभम् ॥ १८ ॥
वारिणा वटिका कार्या द्विगुञ्जाफलमानतः ।
सन्निपातं निहन्त्याशु स्त्रीणाञ्चैव विशेषतः ।
गर्भिण्या ज्वरदाहञ्च प्रदरं सूतिकाऽऽमयम् ॥ १९ ॥

बृहद्गर्भचिन्तामणि रसः—

सूतो गन्धः तथा स्वर्णं लौहं रजतमाक्षिके ।
हरितालं वङ्गभस्माप्यभ्रकं समभागिकम् ॥ २० ॥
भावना खलु दातव्या रसैरेषां पृथक् पृथक् ।
ब्राह्मीवासाभृङ्गराज-पर्पटीदशमूलकैः ॥ २१ ॥
सप्तधा भावयेद्वैद्यो गुञ्जमानां वटीं चरेत् ।
गर्भचिन्तामणिरयं पूर्ववद्गुणकारकः ॥ २२ ॥

गर्भविनोदरसः—

देयं त्रिभागं त्रिकटु चतुर्भागञ्च हिङ्गुलम् ।
जातीकोषं लवङ्गञ्च प्रत्येकञ्च त्रिकार्षिकम् ॥ २३ ॥
सुवर्णमाक्षिकस्यापि पलार्द्धं प्रक्षिपेद् बुधः ।
जलेन मर्दयित्वाऽथ चणमात्रा वटी कृता ।
निहन्ति गर्भिणीरोगं भास्करास्तिमिरं यथा ॥ २४ ॥

सूतिकाहररसः—

लवङ्गं रसगन्धौ च यवक्षारं तथाऽभ्रकम् ।
लौहं ताम्रं सीसकञ्च पलमानं समाहरेत् ॥ २५ ॥
जातफिलं केशराजं भृङ्गैलामुस्तकं वरा ।
धातकीन्द्रयवं पाठा शृङ्गी बिल्वञ्च बालकम् ॥ २६ ॥
कर्षमानञ्च सञ्चूर्ण्य सर्वमेकत्र कारयेत् ।
बदरास्थिप्रमाणेन वटिकां कारयेद्भिषक् ॥ २७ ॥
गन्धालिकापत्ररसैरनुपानं प्रदापयेत् ।
सर्वातिसारशमनः सर्वशूलनिवारणः ॥ २८ ॥

---

सूतिकाहररसे—वरा त्रिफला, गन्धालिकापत्ररसैः प्रसारणीप-

सूतिकाशोथपाण्डुत्व-सर्वज्वरविनाशनः ।
'सूतिकाहरनामा'ऽयं रसः परमदुर्लभः ॥ २९ ॥

महाऽभ्रवटी—

अभ्रकं पुटितं ताम्रं लौहं गन्धकपारदम् ।
कुनटी टङ्कणं क्षारं त्रिफला च पलं पलम् ॥ ३० ॥
गरलञ्च तथा माषचतुष्कञ्चैव चूर्णितम् ।
तत् सर्वं भावयेदेषां रसैः प्रत्येकशः पलैः ॥ ३१ ॥
ग्रीष्मसुन्दरकस्याऽऽट-रूषकस्य क्रमेण तु ।
रसैस्ताम्बूलवल्ल्याश्च दलोत्थैर्भावितं पृथक् ॥ ३२ ॥
द्रवे किञ्चित् स्थिते चूर्णं मरिचस्य पलं क्षिपेत् ।
सर्वातिसारशमनं सर्वशूलनिवारणम् ॥ ३३ ॥
सूतिकाशोथपाण्डुत्व-सर्वज्वरविनाशनम् ।
नाशयेत् सूतिकाऽऽतङ्कं वृक्षमिन्द्राशनिर्यथा ॥ ३४ ॥

अपरमहाऽभ्रवटी—

मृतमभ्रञ्च लौहञ्च कुनटी ताम्रकं तथा ।
रसगन्धकटङ्कञ्च यवक्षारफलत्रिकम् ॥ ३५ ॥
प्रत्येकं तोलकं ग्राह्यमूषणं पञ्चतोलकम् ।
सर्वमेकीकृतं चूर्णं प्रत्येकेन विभावयेत् ॥ ३६ ॥
ग्रीष्मसुन्दरसिंहास्य-नागवल्ल्या रसेन च ।
चतुर्गुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ।
योजयेत् सर्वथा वैद्यः सूतिकारोगशान्तये ॥ ३७ ॥

रसशार्दूलः—

अभ्रं ताम्रं तथा लौहं राजपट्टं रसं तथा ।
गन्धटङ्कमरीचञ्च यवक्षारं समांशकम् ॥ ३८ ॥
तथाऽत्र तालकञ्चैव त्रिफलायाश्च तोलकम् ।

---

त्ररसैः ॥ २५-२९ ॥

**महाभ्रवटिकायां**-कुनटी मनःशिला, क्षारं यवक्षारं, गरलं विषं, ग्रीष्मसुन्दरं ख्याता, आटरुषकस्य वासकस्य ॥ ३०-३४ ॥

**रसशार्द्दूलरसे**-राजपट्टं कान्तपाषाणं, गन्धं गन्धकम्, अमृतं वि-

तोलकञ्चामृतञ्चैव षड्गुञ्जाप्रमिता वटी ॥ ३९ ॥
ग्रीष्मसुन्दरकस्यापि नागवल्लीरसेन च।
भावयेत् सप्तधा हन्ति ज्वरं कासाङ्गसङ्ग्रहम्।
सूतिकाऽतङ्कशोथादि-स्त्रीरोगञ्च विनाशयेत् ॥४०॥

महारसशार्दूलः—

अभ्रकं पुटितं ताम्रं स्वर्णं गन्धञ्च पारदम्।
शिलां टङ्कं यवक्षारं त्रिफलायाः पलं पलम् ॥ ४१ ॥
गरलस्य तथा ग्राह्यमर्द्धतोलकसम्मितम्।
त्वगेला पत्रकञ्चैव जातीकोपलवङ्गकम् ॥ ४२ ॥
मांसीं तालीशपत्रञ्च माक्षिकञ्च रसाञ्जनम्।
एषां द्विकार्षिकं भागं देयञ्चापि विचक्षणैः ॥ ४३ ॥
द्रवे किञ्चित् स्थिते चूर्णं मरिचस्य पलं क्षिपेत्।
भावना च प्रदातव्या पूर्वोक्तेन रसेन च ॥ ४४ ॥
निहन्ति विविधान् रोगान् ज्वरान् दाहान् वमिं भ्रमिम्।
तथाऽतिसारकञ्चैव वह्निमान्द्यमरोचकम्।
विशेषाद् गर्भिणीरोगं नाशयेदचिरेण च ॥ ४५ ॥

बृहद्रसशार्दूलः—

रसस्य द्विगुणं गन्धं शुद्धं सम्मर्दयेद् दिनम्।
प्रतिलौहं सूततुल्यमष्टलौहं मृतं क्षिपेत् ॥ ४६ ॥
ब्रह्मी जयन्ती निर्गुण्डी यष्टीमधु पुनर्नवा।
नालिका गिरिकर्ण्यर्क-कृष्णधूर्त्तदुरालभाः ॥ ४७ ॥
आटरूषः काकमाची द्रवैरेषां विमर्दयेत्।
गुञ्जात्रयं चतुर्गुञ्जं सर्वरोगेषु योजयेत्।

---

षम् ॥ ३८-४० ॥

**महारसशार्द्दूले**-शिला मनःशिला, पत्रं तेजपत्रं, माक्षिकं स्वर्णमाक्षिकम् ॥ ४१-४५ ॥

**बृहद्रसशार्द्दूले**—प्रतिलौहमिति वक्ष्यमाणाष्टलौहम्। गिरिकर्णी अपराजिता। कृष्णधूर्त्तः कृष्णधुस्तूरः। द्रवैरेषां विमर्द्दयेदिति एषां प्रत्येकशः

रोगोक्तमनुपानं वा कवोष्णं वा जलं पिबेत् ॥ ४८ ॥

तत्र अष्टलौहानि—

सुवर्णं रजतं ताम्रं कांस्यं पित्तलमेव च ।
नागं वङ्गं तथा लौहं धातवोऽष्टौ प्रकीर्त्तिताः ॥ ४९ ॥

* इति सूतिकारोग चिकित्सा *

---

# अथ तृतीयोऽध्यायः ।

## अथ बालरोग-चिकित्सा ।

बालरसः—

पलं शुद्धस्य सूतस्य गन्धकस्य पलं तथा ।
सुवर्णमाक्षिकस्यापि भागार्द्धं संप्रकल्पयेत् ॥ १ ॥
ततः कज्जलिकां कृत्वा पात्रे लौहमये दृढे ।
केशराजस्य भृङ्गस्य निर्गुण्ड्याः स्वरसेन च ॥ २ ॥
शुभे शिलामये पात्रे लौहदण्डेन मर्दयेत् ।
राजिकासदृशीञ्चैव वटि*कां कारयेद्भिषक् ॥ ३ ॥
एकैकां वटिकां खादेन्नागवल्लीदलद्रवैः ।
हन्ति त्रिदोषसम्भूतं ज्वरञ्चैव सुदारुणम् ॥ ४ ॥
चिरज्वरञ्च कासञ्च शूलं सर्वभवं तथा ।
शिशूनां रोगनाशाय शिवेन परिकीर्त्तितः ॥ ५ ॥

बालरोगान्तकरसः—

पलं शुद्धस्य सूतस्य गन्धकस्य च तत्समम् ।
सुवर्णमाक्षिकस्यापि चार्द्धभागं नियोजयेत् ॥ ६ ॥
ततः कज्जलिकां कृत्वा पात्रे लौहमये दृढे ।
केशराजस्य भृङ्गस्य निर्गुण्ड्याः पर्णसम्भवम् ॥ ७ ॥

---

स्वरसैः सप्तवारं भावयेदित्यर्थः ॥ ४६-४८ ॥

इति सूतिकारोग-चिकित्सा ।

---

बालरोगाणां दुष्टस्तन्येन सम्भवात् तदनन्तरं बालरोगचिकित्सितमु-च्यते-बालरसे—भागार्द्धं सम्प्रकल्पयेदित्यर्द्धपलभागम् ॥ १-५ ॥

स्वरसं काकमाच्याश्च ग्रीष्मसुन्दरकस्य च ।
सूर्यावर्त्तकवर्षाभू भेकपर्णीरसैस्तथा ॥ ८ ॥
श्वेतापराजितायाश्च रसं दद्याद्विचक्षणः ।
देयं रसार्द्धभागेन चूर्णं मरिचसम्भवम् ॥ ९ ॥
शुभे शिलामये पात्रे यामं दण्डेन मर्दयेत् ।
शुष्कमातपसंयोगाद् गुडिकां कारयेद्भिषक् ॥ १० ॥
प्रमाणं सर्षपाकारं बालानाञ्च प्रयोजयेत् ।
हन्ति त्रिदोषसम्भूतं ज्वरञ्चैव सुदारुणम् ॥ ११ ॥
कासं पञ्चविधञ्चापि सर्वरोगं निहन्ति च ।
शिशूनां रोगनाशाय निर्मितोऽयं महारसः ॥ १२ ॥

* इति बालरोग-चिकित्सा *

---

# अथ चतुर्थोऽध्यायः ।

## अथ विष-चिकित्सा ।

### विषवज्रपातो रसः—

निशां सटङ्कञ्च सजातिकोषं तुल्यं समांशं कुरु देवदाल्याः ।
रसेन पिष्ट्वा 'विषवज्रपातो' रसो भवेत् सर्वविषापहन्ता ॥ १ ॥
निष्कोऽस्य सञ्जीवयति प्रयुक्तो नृमूत्रयोगेन च कालदष्टम् ।
जटाविषेणाकुलितं तथाऽन्यैर्विषैर्नरञ्चाशु तथाऽतुरञ्च ॥ २ ॥

### भीमरुद्रो रसः—

सूतराजस्य तोलैकं गन्धकस्य तथैव च ।
अभ्रात् कर्षं ततो देयं तोलैकं कान्तलौहकम् ॥ ३ ॥
परोक्तेनौषधेनैव भावयेच्च पृथक् पृथक् ।
विशालाबृहतीब्राह्मी-सौगन्धिकसुदाडिमैः ॥ ४ ॥
मर्कट्याश्चात्मगुप्तायाः स्वरसेन पृथक् पृथक् ।

---

इति बालरोग-चिकित्सा ।

---

इदानीमातुरहितचिकित्सापारिशेष्याद् विषचिकित्सामाह—**विषवज्रपातरसे**—देवदाल्याः हस्तिघोषकस्य ॥ १–२ ॥

एकरक्तिकमानेन वटिकां कारयेद् भिषक् ॥ ५ ॥
वटीमेकां भक्षयित्वा पिबेच्छीतजलं ततः ।
'भीमरुद्रो' रसो नाम चासाध्यमपि साधयेत् ।
कुक्कुरस्य शृगालस्य विषं हन्ति सुदुस्तरम् ॥ ६ ॥

* इति विष-चिकित्सा *

---

# अथ पञ्चमोऽध्यायः

## अथ रसायनवाजीकरणाधिकारः

### अथ रसायनलक्षणम्—

स्वस्थस्यौजस्करं किञ्चित्, किञ्चिदार्त्तस्य रोगनुत् ।
यज्जराव्याधिविध्वंसि, भेषजं तद्रसायनम् ॥ १ ॥

### श्रीमन्मथो रसः—

रसगन्धकयोर्ग्राह्यं कर्षमेकं सुशोधितम् ।
अभ्रं निश्चन्द्रकं दद्यात् पलार्द्धं सुविचक्षणः ॥ २ ॥
कर्पूरं शाणकं दद्याद्वङ्गञ्च कोलसम्मितम् ।
ताम्रं कोलार्द्धकं तत्र निःशेषमारितं क्षिपेत् ॥ ३ ॥
लौहं कर्षं सुजीर्णञ्च वृद्धदारकबीजकम् ।
विदारी शतमूली च क्षुरबीजं बला तथा ॥ ४ ॥
मर्कट्यतिबला चैव जातीकोषफले तथा ।
लवङ्गं विजयाबीजं श्वेतसर्जं यमानिका ॥ ५ ॥
एतेषां चूर्णमादाय प्रक्षिपेत् शाणसम्मितम् ।
गुञ्जाद्वयञ्च भोक्तव्यं कोष्णं क्षीरं पिबेदनु ॥ ६ ॥
गृहे यस्य शतं स्त्रीणां विद्यतेऽतिव्यवायिनः ।

---

**भीमरुद्ररसे**—सूतराजस्य पारदस्य, मर्कटी शूकशिम्बी ॥ ३-६ ॥

इति विष-चिकित्सा ।

---

भेषजं तावद् द्विविधम् आतुरहितं स्वस्थहितञ्च । स्वस्थहितमपि द्विविधं रसायनवाजीकरणभेदात् । अत्र आतुरहितं तावदुक्तमेव, सम्प्रति स्वस्थहितं वाच्यम् । **श्रीमन्मथरसे**—क्षुरबीजमिति कोकिलाक्षबीजं, मर्कटी

न तस्य लिङ्गशैथिल्यमौषधस्यास्य सेवनात् ॥ ७ ॥
न च शुक्रं क्षयं याति न बलं ह्रासतां व्रजेत्।
कामरूपी भवेद्दिव्यो वृद्धः षोडशवर्षवत् ॥ ८ ॥
रसायनवरो बल्यो वाजीकरण उत्तमः।
रसः 'श्रीमन्मथो' नाम महेशेन प्रकाशितः ॥ ९ ॥

माहेश्वररसः—

रसं भस्मीकृतं कोलं गन्धकं शोधितं समम्।
लौहं कर्षद्वयं ताम्रमर्द्धकोलकसम्मितम् ॥ १० ॥
सुवर्णं जारितं दद्यात् शाणार्द्धं सुविचक्षणः।
अभ्रं कर्षद्वयं दद्यात् शाणार्द्धं चन्द्रचूर्णकम् ॥ ११ ॥
श्यामाबीजं वरीञ्चैव बलामतिबलां तथा।
एलाञ्च शङ्खपुष्पञ्च शाणमानं विनिक्षिपेत् ॥ १२ ॥
जलेन वटिकां कृत्वा गुञ्जामात्रां प्रदापयेत्।
सेवानादस्य कन्दर्प-रूपो भवति मानवः ॥ १३ ॥
सहस्रं याति नारीणामुत्साहो जायतेऽधिकः।
नित्यं स्त्रीसेवनाद् यस्तु क्षीणशुक्रो भवेन्नरः ॥ १४ ॥
महाशुक्रो भवेत् सोऽपि सेवनादस्य नान्यथा।
महाबलो महाबुद्धिर्जायते नात्र संशयः ॥ १५ ॥
स्थूलानां कर्षकः श्रेष्ठः कृशानां पुष्टिकारकः।
रसो विनाशयेद्रोगान् सप्त-सप्ताहभक्षणात् ॥ १६ ॥

पूर्णचन्द्रो रसः—

सूताभ्रलौहं सशिलाजतु स्याद्, विडङ्गताप्ये मधुना घृतेन।
सम्मर्द्य सर्वं खलु 'पूर्णचन्द्रो' माषोऽस्य वृष्यो भवति प्रयुक्तः ॥१७॥

---

शूकशिम्बी, जातीकोषफलेति जातीकोषं जातीफलञ्च। विजयाबीजं शक्राशनबीजं, श्वेतसर्ज्जः श्वेतधूनकः ॥ २-९ ॥

**महेश्वररसे**—रसभस्म रससिन्दूरं, चन्द्रचूर्णकं कर्पूरम्। श्यामाबीजं वृद्धदारकबीजं, वरी शतमूली ॥ १०-१६ ॥

**पूर्णचन्द्ररसे**—ताप्यं मनःशिला ॥ १७॥

## कार्श्यहरलौहम्—

श्वेता-पुनर्नवा दन्ती-वाजिगन्धात्रिकत्रयैः ।
शतमूलीबलायुक्तैरेभिर्लौहं प्रसाधितम् ॥ १८ ॥
हिनस्ति नियतं 'कार्श्य'मपि भृङ्गरसैः सह ।
नास्त्यनेन समं लौहं सर्वरोगान्तकं मतम् ।
दीपनं बलवर्णाग्नेर्वृष्यं तच्चोत्तमोत्तमम् ॥ १९ ॥

## नारदीय-लक्ष्मीविलासो रसः—

पलं कृष्णाभ्रचूर्णस्य तदर्द्धं रसगन्धकम् ।
कर्पूरस्य तदर्द्धञ्च जातीकोषफले तथा ॥ २० ॥
वृद्धदारकबीजञ्च बीजमुन्मत्तकस्य च ।
त्रैलोक्यविजयाबीजं बिदारीमूलमेव च ॥ २१ ॥
नारायणी तथा नाग-बला चातिबला तथा ।
बीजं गोक्षुरकस्यापि नैचुलं बीजमेव च ॥ २२ ॥
एतेषां कार्षिकं चूर्णं पर्णपत्ररसेन च ।
निष्पिष्य वटिका कार्या त्रिगुञ्जाफलमानतः ॥ २३ ॥
निहन्ति सन्निपातोत्थान् गदान् घोरान् सुदारुणान् ।
वातोत्थानपि पित्तोत्थान् नास्त्यत्र नियमः क्वचित् ॥ २४ ॥
कुष्ठमष्टादशविधं प्रमेहान् विंशतिं तथा ।
नाडीव्रणं व्रणं घोरं गुदामयभगन्दरम् ॥ २५ ॥
श्लीपदं कफवातोत्थं चिरजं कुलसम्भवम् ।
गलशोथमन्त्रवृद्धिमतीसारं सुदारुणम् ॥ २६ ॥
कासपीनसयक्ष्मार्शः स्थौल्यं दौर्बल्यमेव च ।
आमवातं सर्वरूपं जिह्वास्तम्भं गलग्रहम् ॥ २७ ॥
अर्दितं गलगण्डञ्च वातशोणितमेव च ।
उदरं कर्णनासाक्षि-मुखवैरस्यमेव च ॥ २८ ॥

---

**कार्श्यहरलौहे**—वाजिगन्धा अश्वगन्धा । अत्र सर्व्वसमं लौहं प्रदेयम् ॥ १८-१९ ॥

**लक्ष्मविलासे**—तदर्द्धं रसगन्धकमिति अभ्रार्द्धं मिलितरसगन्धकमित्यर्थः । कर्पूरञ्च तदर्द्धमिति मिलितरसगन्धकार्द्धं, तेन रसगन्धककर्पूराणि

सर्वशूलं शिरःशूलं स्त्रीणां गदनिषूदनम्।
वटिकां प्रातरेकैकां खादेन्नित्यं यथाबलम् ॥ २९ ॥
अनुपानमिह प्रोक्तं मांसं पिष्टं पयो दधि।
वारिभक्तसुरासीधु-सेवनात् कामरूपधृक् ॥ ३० ॥
वृद्धोऽपि तरुणस्पर्द्धी न च शुक्रस्य संक्षयः।
न च लिङ्गस्य शैथिल्यं न केशा यान्ति पक्वताम् ॥ ३१ ॥
नित्यं स्त्रीणां शतं गच्छेन्मत्तवारणविक्रमः।
द्विलक्षयोजनी दृष्टिर्जायते पौष्टिकः परः ॥ ३२ ॥
प्रोक्तः प्रयोगराजोऽयं नारदेन महात्मना।
रसो 'लक्ष्मीविलासो'ऽयं वासुदेवो जगत्पतिः।
अभ्यासादस्य भगवान् लक्षनारीषु वल्लभः ॥ ३३ ॥

श्रीकामदेवरसः—

सूतस्य पलमेकं स्यात् द्विपलं शुद्धगन्धकम्।
रक्तकार्पासतोयेन घृष्ट्वा काचस्य कूप्यतः ॥ ३४ ॥
निक्षिप्य टङ्कणेनैव मुखं तस्य निरोधयेत्।
वालुकायन्त्रमध्यस्थं कूप्यञ्च कुरु तत् दृढम् ॥ ३५ ॥
अहोरात्रं पचेदग्नौ शास्त्रवित् कुशलो भिषक्।
शीते चादाय पात्रस्थं कूपिकान्तरलम्बितम् ॥ ३६ ॥
दरदेन समं रक्तं सोज्ज्वलं भस्म यद्भवेत्।
भक्षयेन्माषमेकञ्च घृतेन मधुना सह ॥ ३७ ॥
पश्चात् दुग्धं गुडञ्चाज्यं कृष्णेक्षुमपि शर्कराम्।
द्राक्षाखर्जूरमधुक-प्रभृतीनथ भक्षयेत् ॥ ३८ ॥
त्रिफलामधुना शान्तिं याति पित्तं चिरोत्थितम्।
निर्गुण्डिकारसेनात्र दुर्वारा वातवेदना।
प्रशमं याति वेगेन नूतनञ्च वपुर्भवेत् ॥ ३९ ॥
अर्द्धाऽऽवर्त्तितदुग्धेन गृह्यते यद्ययं रसः।
वन्ध्याऽपि च भवत्येव जीववत्सा सपुत्रिका ॥ ४० ॥

---

तुल्यभागानि। उन्मत्तस्य वीजं धुस्तूरवीजम्। नारायणी शतावरी ॥२०-३३॥

**श्रीकामदेवरसे**—रससिन्दूरवद् वालुकायन्त्रे काचकूपिकायां पच-

कामदेवाह्वयः सूतः कामिनां कामदः सदा ।
यस्य प्रभावतो बल्यो रम्यो रमयते स्त्रियम् ॥ ४१ ॥

अनङ्गसुन्दरो रसः—

शुद्धसूतं समं गन्धं त्र्यहं कह्लारजैर्द्रवैः ।
मर्दितं वालुकायन्त्रे यामं सम्पुटके पचेत् ॥ ४२ ॥
रक्तागस्त्यद्रवैर्भाव्यं दिनमेकं सिताऽम्बुजैः ।
यथेष्टं भक्षयेच्चानु कामयेत् कामिनीशतम् ॥ ४३ ॥

हेमसुन्दरो रसः—

मृतसूतस्य पादांशं हेमभस्म प्रकल्पयेत् ।
क्षीराज्यदधिसम्मिश्रं माषैकं कांस्यपात्रके ॥ ४४ ॥
लेहयेन्मासषट्कन्तु जरामरणनाशनम् ।
वागुजीचूर्णकर्षैकं धात्रीफलरसाप्लुतम् ।
अनुपानं पिबेन्नित्यं स्याद्रसो 'हेमसुन्दरः' ॥ ४५ ॥

अमृतार्णवो रसः—

सूतभस्म चतुर्भागं लौहभस्म तथाऽष्टकम् ।
अभ्रभस्म च षड्भागं गन्धकस्य च पञ्चकम् ॥ ४६ ॥
भावयेत् त्रिफलाक्वाथैस्तत्सर्वं भृङ्गजैर्द्रवैः ।
शिग्रुवह्निकटुक्वाथैर्भावयेत् सप्तधा पृथक् ॥ ४७ ॥
सर्वतुल्या कणा योज्या गुडैर्मिश्रा पुरातनैः ।
निष्कमात्रं सदा खादेत् जरामृत्युनिवारणम् ॥ ४८ ॥
ब्रह्मायुः स्यात् चतुर्मासे रसोऽयममृतार्णवः ।
कौरण्टकस्य पत्राणि गुडेन भक्षयेदनु ॥ ४९ ॥

बृहत्पूर्णचन्द्रो रसः—

द्विकर्षं शुद्धसूतस्य गन्धकञ्च द्विकार्षिकम् ।
लौहभस्म पलञ्चाभ्रं जारितञ्च पलांशिकम् ॥ ५० ॥
द्वितोलं रजतञ्चैव वङ्गभस्म द्विकार्षिकम् ।

---

नीयः ॥ ३४–४१ ॥

अमृतार्णवे—सूतभस्म इति रससिन्दूरम् ॥ ४३–४९ ॥

बृहत्पूर्णचन्द्ररसे—इन्द्रपुष्पं लवङ्गं, वनिता प्रियङ्गुः, वरातोयैरिति

सुवर्णं तोलकञ्चैव ताम्रं कांस्यञ्च तत्समम् ॥ ५१ ॥
जातीफलञ्चेन्द्रपुष्पमेला भृङ्गञ्च जीरकम् ।
कर्पूरं वनिता मुस्तं कर्षं कर्षं पृथक् पृथक् ॥ ५२ ॥
सर्वं खल्लतले क्षिप्त्वा कन्यारसविमर्दितम् ।
भावयित्वा वरातोयैः केवुकानां रसेन च ॥ ५३ ॥
एरण्डपत्रैरावेष्ट्य धान्ये रात्रिदिनोषितम् ।
उद्धृत्य मर्दयित्वा तु वटिकां चणसम्मिताम् ॥ ५४ ॥
खादेच्च पर्णखण्डेन संयुक्तां व्याधिनाशिनीम् ।
सर्वव्याधिविनाशाय काशीराजेन भाषितः ॥ ५५ ॥
'पूर्णचन्द्ररसो' नाम सर्वरोगेषु शस्यते ।
बल्यो रसायनो वृष्यो वाजीकरण उत्तमः ॥ ५६ ॥
अयमष्ठीलिकां हन्ति कासश्वासमरोचकम् ।
आमशूलं कटीशूलं हृच्छूलं पित्तशूलकम् ॥ ५७ ॥
अग्निमान्द्यमजीर्णञ्च ग्रहणीं चिरजामपि ।
आमवातमम्लपित्तं भगन्दरमपि द्रुतम् ॥ ५८ ॥
कामलां पाण्डुरोगञ्च प्रमेहं वातशोणितम् ।
नातः परतरः श्रेष्ठो विद्यते वाजिकर्मणि ॥ ५९ ॥
रसस्यास्य प्रसादेन नरो भवति निर्गदः ।
मेधाञ्च लभते वाग्मी तुष्टिपुष्टिसमन्वितः ॥ ६० ॥
मदनस्य समां कान्तिं मदनस्य समं बलम् ।
गीयते मदनेनैव मदनस्य समं वपुः ॥ ६१ ॥
प्रियाञ्च मदनप्रायाः पश्यन्ति मदनाकुलाम् ।
स्त्रीणां तथाऽनपत्यानां दुर्बलानाञ्च देहिनाम् ॥ ६२ ॥
क्षीणानामल्पशुक्राणां वृद्धानां वातरेतसाम् ।
ओजस्तेजस्करश्चायं स्त्रीषु कामविवर्द्धनः ॥ ६३ ॥
अभ्यासेन निहन्ति मृत्युपलितं, सर्वामयध्वंसकः
वृद्धानां मदनोदयोदयकरः, प्रौढाङ्गनासङ्गमे ।
नित्यानन्दकरः सुखातिसुखदो, भूपैः सदा सेव्यते ।
दृष्टः सिद्धफलो रसायनवरः, 'श्रीपूर्णचन्द्रो' रसः ॥ ६४ ॥

---

त्रिफलाक्वाथैः ॥ ५०–६४ ॥

## चन्द्रोदयरसः—

पलं मृदुस्वर्णदलं रसेन्द्रात् पलाष्टकं षोडश गन्धकस्य।
शोणैः सुकार्पासभवप्रसूनैः सर्वं विमर्द्याथ कुमारिकाऽद्भिः ॥६५॥
तत्काचकुम्भे निहितं सुगाढं मृत्कर्पटैस्तद्दिवसत्रयञ्च।
पचेत् क्रमाग्नौ सिकताख्ययन्त्रे ततो रसः पल्लवरागरम्यः ॥ ६६ ॥
संगृह्य चैतस्य पलं पलानि चत्वारि कर्पूररजस्तथैव।
जातीफलं सोषणमिन्द्रपुष्पं कस्तूरिकाया इह शाण एकः ॥६७॥
'चन्द्रोदयो'ऽयं कथितोऽस्य वल्लो भुक्तोऽहिवल्लीदलमध्यवर्त्ती।
मदोद्धतानां प्रमदाशतानां गर्वाधिकत्वं श्लथयत्यवश्यम् ॥ ६८ ॥
शृतं घनीभूतमतीव दुग्धं गुरूणि मांसानि समण्डकानि।
माषान्नपिष्टानि भवन्ति पथ्यान्यानन्ददायीन्यपराणि चात्र ॥६९॥

रतिकाले रतान्ते वा सेवितोऽयं रसेश्वरः।
मानहानिं करोत्येष प्रमदानां सुनिश्चितः ॥ ७० ॥
कृत्रिमं स्थावरञ्चैव जङ्गमञ्चैव यद्विषम्।
न विकाराय भवति साधकेन्द्रस्य वत्सरात् ॥ ७१ ॥
यथा मृत्युञ्जयोऽभ्यासात् मृत्युं जयति देहिनाम्।
तथाऽयं साधकेन्द्रस्य जरामरणनाशनः ॥ ७२ ॥
वलीपलितनाशन, स्तनुभृतां वयःस्तम्भनः
समस्तगदखण्डनः, प्रचुररोगपञ्चाननः।
गृहे च रसराडयं, भवति यस्य चन्द्रोदयः
स पञ्चशरदर्पितो, मृगदृशां भवेद्वल्लभः[1] ॥ ७३ ॥
इन्द्रपुष्पं लवङ्गं स्यात् कार्पासकुसुमद्रवैः।
तन्त्रान्तरे प्रसिद्धोऽयं मकरध्वजनामतः ॥ ७४ ॥

## मकरध्वजः—

स्वर्णमागौ च वङ्गञ्च मौक्तिकं कान्तलौहकम्।
जातीकोषफले रूप्यं कांस्यकं रससिन्दुरम् ॥ ७५ ॥

---

चन्द्रोदयरसे—सुकार्पासभवप्रसूनैरिति रक्तकार्पासकुसुमैः॥ ६५–७४ ॥

---

१ पृथ्वीछन्दः—जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः।

प्रवालं कस्तूरी चन्द्रमभ्रकञ्चैकभागिकम्।
स्वर्णसिन्दूरतो भागाश्चात्वारः कल्पयेद्बुधः॥ ७६॥
नातः परतरः श्रेष्ठः सर्वरोगनिषूदनः।
सर्वलोकहितार्थाय शिवेन परिकीर्त्तितः॥ ७७॥

वसन्ततिलको रसः—

हेम्नो भस्मकतोलकं घनयुगं, लौहात् त्रयः पारदात्
चत्वारो नियतन्तु वङ्गयुगल, ञ्चैकीकृतं मर्दयेत्।
मुक्ताविद्रुमयोरसेन समता, गोक्षूरवासेक्षुणा
सर्वं वन्यकरीषकेण सुदृढं, तत्तत् पचेत् सप्तधा॥ ७८॥[1]
कस्तूरीघनसारमर्दितरसः पश्चात् सुसिद्धो भवेत्
कासश्वाससपित्तवातकफजित् पाण्डुक्षयादीन् हरेत्
शूलादिग्रहणीं विषादिहरणो मेहांस्तथा विंशतिम्
हृद्रोगादिहरो ज्वरादिशमनो वृष्यो वयोवर्द्धनः।
श्रेष्ठः पुष्टिकरो 'वसन्ततिलको' मृत्युञ्जयेनोदितः॥ ७९॥

वसन्तकुसुमाकरो रसः—

द्विभागं हाटकं चन्द्रं त्रयो वङ्गाहिकान्तकाः।
चतुर्भागं शुद्धमभ्रं प्रवालं मौक्तिकं तथा॥ ८०॥
भावयेद् गव्यदुग्धेन भावनेक्षुरसेन च।
वासालाक्षारसोदीच्यरम्भाकन्दप्रसूनकैः॥ ८१॥
शतपत्ररसेनैव मालत्याः कुङ्कुमोदकैः।
पश्चान्मृगमदैर्भाव्यं सुगन्धिरससम्भवैः॥ ८२॥
विख्यातोऽयं रसोनाम्ना 'वसन्तकुसुमाकरः'।

---

**मकरध्वजे**—च द्रं कपूरम्॥ ७५–७७॥

**वसन्ततिलके**—घनमभ्रं, नियतं गन्धकम्। वृद्धास्तु रसगन्धकयोरभावे स्वर्णसिन्दूरं व्यवहरन्ति। घनसारं कर्पूरम्॥ ७८–७९॥

**वसन्तकुसुमाकरे**—हाटकं स्वर्णम्, अहिः सीसकम्। केचित्तु वङ्गाहिकान्तका इत्यत्र रसाहिकान्तकमिति पठन्ति। रम्भाकन्दप्रसूनकैरिति रम्भा·

---

१ शार्दूलविक्रीडितञ्छन्दः--सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्।

गुञ्जाद्वयेन संसेव्यः सितामध्वाज्यसंयुतः ॥ ८३ ॥
मेहघ्नः कान्तिदश्चैव कामदः पुष्टिदस्तथा ।
वलीपलितहश्चैव स्मृतिभ्रंशं विनाशयेत् ॥ ८४ ॥
तुष्टिदो बल्यआयुष्यः पुत्रप्रसवकारकः ।
प्रमेहान् विंशतिञ्चैव क्षयमेकादशं तथा ।
तथा सोमरुजं हन्ति साध्यासाध्यमथापि वा ॥ ८५ ॥

नीलकण्ठो रसः—

सूतकं गन्धकं लौहं विषं चित्रकपद्मकम् ।
वराङ्गरेणुकामुस्तं ग्रन्थ्येलानागकेशरम् ॥ ८६ ॥
त्रिकटु त्रिफला चैव शुल्बभस्म तथैव च ।
एतानि समभागानि द्विगुणो गुड उच्यते ॥ ८७ ॥
संमर्द्य वटकं कृत्वा भक्षयेत् चणकोन्मितम् ।
कासे श्वासे क्षये गुल्मे प्रमेहे विषमज्वरे ॥ ८८ ॥
हिक्कायां ग्रहणीदोषे शोथे पाण्ड्वामये तथा ।
मूत्रकृच्छ्रे मूढगर्भे वातरोगे च दारुणे ॥ ८९ ॥
नीलकण्ठो रसो नाम ब्रह्मणा निर्मितः पुरा ।
अनुपानविशेषेण सर्वरोगहरो भवेत् ॥ ९० ॥

महानीलकण्ठो रसः—

पलैकं नागभस्माथ भावयेत् तिमिपित्ततः ।
तन्नागं सुमृतं स्वर्णं तोलैकं चापि मिश्रयेत् ॥ ९१ ॥
द्विपलं भस्मसूतस्य त्रिपलं मृतमभ्रकम् ।
त्रिपलं लौहभस्माथ सर्वमेकत्र कारयेत् ॥ ९२ ॥
भावयेच्च पृथक् कन्या ब्रह्मी निर्गुण्डिका शमी ।
मुण्डी शतावरी छिन्ना बीजानीक्षुरकस्य च ॥ ९३ ॥
मुषली वृद्धदारोऽग्निः द्रवैरेषां भिषग्वरः ।

---

मूलरसैः पुष्परसैश्च । शतपत्ररसेनेत्यत्र शतपुष्पीरसेनेति केचित् पठन्ति, अपरे तु मालत्याः कुङ्कुमोदकैरित्यत्र मालत्याः कुसुमोदकैरिति पठन्ति, एतत्र सम्यक् व्यवहारासिद्धम् ॥ ८०–८५ ॥

**महानीलकण्ठरसे**—नागं सीसकं, मुण्डी मुण्डिरी, छिन्ना गुडूची,

ततः सञ्चूर्णयेत् सर्वं तुल्यमेकादशाभिधम् ॥ ९४ ॥
वराव्योषाब्दवह्न्येला-जातीफललवङ्गकम् ।
पूजयेद् बिल्वपत्राद्यैर्नीलकण्ठं महेश्वरम् ॥ ९५ ॥
द्विगुञ्जं भक्षयेदस्य मृत्युञ्जयमनुस्मरन् ।
क्षयमेकादशविधं ग्रहणीं रक्तपित्तकम् ॥ ९६ ॥
विविधान् वातजान् रोगान् चत्वारिंशच्च पैत्तिकान् ।
हन्ति सर्वामयानेव कामिनीनां शतं व्रजेत् ॥ ९७ ॥
एकविंशतिरात्रार्द्धं परिहार्यं त्यजेदिह ।
यथेष्टाहारचेष्टो हि कन्दर्पसदृशो नरः ॥ ९८ ॥
मेधावी बलवान् प्राज्ञो बह्वाशी भीमविक्रमः ।
पुत्रार्थिनी तथा नारी रम्यं पुत्रं प्रसूयते ।
अस्य सूतस्य माहात्म्यं वेत्ति शम्भुर्न चापरः ॥ ९९ ॥

बृहच्छृङ्गराभ्रम्--

पारदं गन्धकञ्चैव टङ्कणं नागकेशरम् ।
कर्पूरं जातिकोषञ्च लवङ्गं तेजपत्रकम् ॥ १०० ॥
एतेषां कर्षभागानि सुवर्णं तत्समं भवेत् ।
शुद्धकृष्णाभ्रचूर्णञ्च चतुष्कर्षिचुभागिकम् ॥ १०१ ॥
तालीशं घनकुष्ठञ्च मांसी पुष्पं वराङ्गकम् ।
एलाबीजं त्रिकटुकं त्रिफला करिपिप्पली ॥ १०२ ॥
एषां कर्षद्वयञ्चैव पिप्पलीक्वाथभावितम् ।
अनुपानं प्रयोक्तव्यं चोचं क्षौद्रसमायुतम् ॥ १०३ ॥
नानारोगप्रशमनं विशेषात् कासरोगनुत् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ १०४ ॥
हृच्छूलं पार्श्वशूलञ्च शिरःशूलं विशेषतः ।
स्वरामयं क्षयं कुष्ठं श्लेष्माणं वातशोणितम् ॥ १०५ ॥

---

अग्निश्चित्रकः वरा त्रिफला, अब्दो मुस्तकम ॥ ९१-९९ ॥
बृहच्छृङ्गाराभ्रे—सुवर्णं तत्समामित्येकभागसमं, घनं मुस्तकं, चोचं

बृहच्छृङ्गाराभ्रनाम विष्णुना[1] परिकीर्त्तितम् ।
रक्तपित्तञ्च श्वासञ्च नाशयेन्नात्र संशयः ॥ १०६ ॥

* इति रसेन्द्रसारसङ्ग्रहे रसायन वाजीकरणाधिकारः । *

समाप्तोऽयंग्रन्थः ।

---

गुडत्वक्, करिपिप्पली गजपिप्पली ॥ १००–१०६ ॥

इति रसायन-वाजीकरणाऽधिकारः ।

सम्पूर्णोऽयं ग्रन्थः ।

---

१ विष्णुशब्दो ग्रन्थान्ते मङ्गलार्थः ।

# रसेन्द्रसारस्य शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ. | प. |
|---|---|---|---|
| चालयत् | चालयेत् | १३ | १५ |
| सुखकारक, | सुखकारकः | १४ | १२ |
| राही | वाराही | १६ | ८ |
| सैन्धव | सैन्धवं | १६ | २४ |
| प्रयोज्यः | प्रयोज्यम् | १७ | २६ |
| कुष्माण्ड | कूष्माण्ड | २७ | ९ |
| दोलविधान, | दोलाविधान | ३२ | ९ |
| टङ्गण | टङ्कण | सर्वत्र | |
| शीत लाम्बु, | शीतलाम्बु | ३९ | १५ |
| क्वाथं कर्त्तव्यं, | क्वाथः कर्त्तव्यः | सर्वत्र | |
| लौहशोधनं, | लोहशोधनं | ५० | २ |
| लौहञ्च | लोहञ्च | ५० | ७ |
| भारणम् | मारणाम् | ५८ | ४ |
| शद्धानि | शुद्धानि | ५९ | ८ |
| मिम्नि | मम्नि | ५९ | १८ |
| तुकृत्वा | कृत्वा तु | ६१ | ७ |
| दुग्धने | दुग्धेन | ६२ | १ |
| क्षीरंचैव | क्षीरेचैव | ६३ | १२ |
| निसूदनम्, | निषूदनम् | ६३ | १९ |
| व्याध यो, | व्याधयो | ६४ | २० |
| मूच्छा | मूर्च्छा | ६५ | १० |
| पीत्तज्वर | पित्तज्वर | ७२ | २२ |
| धन्याकमर्द, | धन्याकंमर्द | ७४ | २० |
| वटीं | वटी | ७५ | १८ |
| विलपनम्, | विलेपनम् | ८१ | ११ |
| मात्स्यमाहिषा | मात्स्यमाहिष | ८२ | ६ |

| अशुद्धम् | शुद्धम् | पृ. | प. |
|---|---|---|---|
| १४२-१४ | १४२-१४४ | ८२ | २४ |
| ञ्च ादद्यात् | ञ्च दद्यात् | ८३ | १ |
| रसराजन्द्रः, | रसराजेन्द्रः | ८३ | ३ |
| सुरसार-ससं, | सुरसा-रससं | ,, | ११ |
| धुस्तूररसः | धुस्तूररसैः | ८७ | २८ |
| षरिजायते | परिजायते | ८८ | ९ |
| कटफलञ्च | कट्फलञ्च | ८९ | १५ |
| ज्वरार-अभ्रम्, | ज्वरारि अभ्रम् | ८८ | १८ |
| विविधान | विविधान् | ९० | २२ |
| भिषापोत्थं | भिशापोत्थं | ९१ | १३ |
| प्रदापयत् | प्रदापयेत् | ९१ | २१ |
| भूनिम्वै, | भूनिम्वम् | ९२ | २६ |
| प्रकाभेदेन | प्रकारभेदेन | ९६ | २१ |
| विषजज्वर | विषमज्वर | ९७ | १३ |
| गन्धधम् | गन्धकम् | ९७ | २३ |
| दरदहिङ्गुलम् | दरदंहिङ्गुलम् | ९९ | २६ |
| दार्द्रकर्द्रवैः, | दार्द्रक-द्रवैः | १०३ | १ |
| क्षयव्रजेत् | क्षयंव्रजेत् | ,, | १२ |
| सवमकत्र | सर्वमेकत्र | ,, | १८ |
| कथयिरयाभि | कथयिष्यामि | १०४ | १७ |
| दरदकृत | दरदंकृत | १११ | ३ |
| चूर्णयद्विष | चूर्णयेद्विष | ११२ | १६ |
| छेदकरा | छेदकरी | ११६ | ५ |
| वहिना | वह्निना | १२० | १६ |
| चार्द्रकद्रावभा, | चार्द्रकद्रावैर्भा | १२१ | १९ |

| अशुद्धम् | शुद्धम् | पृ. | प. |
|---|---|---|---|
| कज्जलीं | कज्जली | १२३ | १ |
| प्रदातव्य | प्रदातव्या | १२९ | १० |
| प्यलसप्र | प्यलसंप्र | ,, | १६ |
| 'मागधी मूलन'मित्यत्राऽधोलिखितपाठोन्यस्य: । कृष्णमूलं मुस्ता शटी वचा धातु-माक्षिकञ्चैव | | १३।१४ | |
| त्रिकटुदान्त | त्रिकटुदन्ति | १३२ | १६ |
| विषटङ्क | विषंटङ्क | १३४ | २३ |
| मयरुचाञ्च | मयरुजाञ्च | १३७ | ३ |
| मुहु २ | मुहुः २ | १३९ | २९ |
| माव्यान्य | भाव्यान्य | १४१ | १७ |
| वसुंभागं | वसुभागं मनः शिला पाठा-इत्यादानां द्वितीयान्तत्वं युक्तं भावयेदिति-सकर्मकक्रियान्वयात् । | १४६।४ | |
| भल्लातश्रीवास, | श्रीवास-भल्लात | १४७ | २४ |
| विषचिकां, | विषूचिकाम् | १४८ | |
| म्रभ्रेर्या | म्रभ्रैर्या | १७० | टि. |
| रक्तपित्तचि | कासचि. | १७१ | १ |
| मुखं | मुस्ता | १७७ | १० |
| तलीशैला | तालीशैला | ,, | १५ |
| निहीन्त | निहन्ति | १८२ | १३ |

| अशुद्धम् | शुद्धम् | पृ. | पं. |
|---|---|---|---|
| स्पर्द्धां | स्पर्द्धी | २०१ | ३ |
| रसगन्धं | रसंगन्धं | २०९ | टि. |
| रसपञ्चात्मकं, | रसंपञ्चात्मकं | २१० | ९ |
| चयं | चेयं | २१३ | ११ |
| सम्पुटचू | सम्पुटंचू | २१४ | ९ |
| वातिकत | वातिकम् | २१९ | २४ |
| सहस्रपुटनैः, | सहस्रपुटनैः | २२१ | १० |
| औडुम्बरफलं, | उदुम्बरफलं | २२३ | ८ |
| मौवाद्यर्थक, | भवाऽऽद्यर्थक | २२४ | टि. |
| लधुलो | लघुलो | २२४ | १० |
| वङ्गभगा | वङ्गभागा | २४५ | १२ |
| यष्ट्याद्वयं, | यष्ट्याऽऽद्वयं | २४७ | २१ |
| कन्यपयोभि, | कन्यापयोभिः | २५० | ११ |
| केर्णाङ्गुलि, | कर्णाङ्गुलि | २५३ | ११ |
| गन्धेकम् | गन्धकम् | २५४ | २१ |
| साङ्गशीतं | स्वाङ्गशीतं | २५७ | २ |
| किटिमञ्च | किटिभञ्च | २५८ | २१ |
| निष्केकं | निष्कैकं | २५९ | २५ |

अत्र मुद्रणाऽशुद्धयः, काश्चिद् ग्रन्थाऽशुद्धयश्च दर्शिताः, ता विचारयन्तु विज्ञा इति ममाऽनुनयः ।

## रसेन्द्र सार संग्रह स्थाः समर्थनीयाः प्रयोगाः ।

यस्मिन् सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः ।
यश्च सर्वमयो नित्यं, तस्मै सर्वात्मने नमः ॥ **रसार्णवः**

तत्र तावदस्मिन् ग्रन्थे–पदानि, पदार्थाः, वाक्यानि वाक्यार्थाश्च वहूनि विचारणीयानि तेषु कानिचित्सन्दर्शनार्थमुदाह्रियन्ते भिषग् वराणां विचारणाय ।

**तोल**–शब्दः–मानपरिभाषायां न पठितः कर्षद्वयमित्यस्मिन्नर्थे–'तोलद्वय' मिति प्रयुज्यते ।

**गुञ्जा**शब्दः स्त्रीलिङ्गः, अत्र तु क्वचित् पुंल्लिङ्गो पि प्रयुक्तः ।

'द्रवैः श्वेतपुनर्नवैः', कथं सामाधिकरण्यमिति–अर्शोधिकारे समर्थितम् ।

'अश्मजतोर्विदध्या'दित्यत्र—नपुंसकं जतु–शब्दः, पुंल्लिङ्गे प्रयुक्तः।

'रसेन्द्रः पारदःसूतः', इत्यत्र पुंसि पठिताअपि शब्दाः प्रथमैकवचनेपि वबहुषु स्थलेषु सूतमितिप्रयुक्ताः ।

भावयेदित्यादि–क्रियायां कर्मीभूता अपि केचन प्रथमान्ताः केचन द्वितीयान्ताः पठयन्ते—'सूतं गन्धः'—इत्यादिना ।

क्वाथशब्द्वः पुमान् 'क्वथंकर्त्तव्यम्'—इतितु संशोधितम् । टि०

'यकृत्'—प्रतिपदिकं नपुंसकं, अत्र तु–'प्लीहानं यकृतश्चैव'—पृ० २४१ इति–प्रयोगो दृश्यते ।

'कणमूलकचव्यचित्रकम्,' 'सुरवास्र्यनु–दापयेद्भिषक्' पृ० २४५ इत्यत्र श्रीगोपालकृष्णेन 'छान्दसत्वाद् ह्रस्वः' इति लिखितम्, तत्किन्नाम छान्दसत्वम्, वैदिकत्वम्, वृत्ताऽनुरोधो वा । बहुषु स्थलेषु—छन्दोभङ्गभयेन–'रससिंदुरम्' इति सिन्दूरशब्दो ह्रस्वमध्यः पठितः ।

बहुषु तु-'हिंगूलगन्घ परिमर्द्य यत्नात्' इत्यादौ ह्रस्वमध्योऽपि हिंगुलशब्दोदीर्घमध्यः पटितः ।

'ग्रहणि-गुदकीलोद्भवरुजः' इत्यत्र शिखरिणी-प्रसक्तेन कविराजेन-ग्रहणीशब्दश्चिकित्सितः। एवं कस्तूरीशब्दोपि कुत्रचिद् ह्रस्वः पठितः।

'कदलीनां फलं पक्वं खर्जूरं कृष्णतिलकम्' (पृ०२२९) इत्यत्र, तु—छन्दोऽनुरोधाद् 'तीलकं'मिति न पठितम्। 'रसपर्पटीवत् पाच्यम्' इत्यत्र-पञ्चमस्याऽपि 'टी' इत्यस्य ह्रस्वो न कृतः। तर्हि-कीदृशश्छन्दोनुरोधः। शिवोक्तत्वाद वैदिकत्वञ्चेद्, नास्ति तादृशः पाठोरसार्णवादिषु मूल-ग्रन्थेषु।

'टकि' बन्धने, चुरादिपठितात् सिद्धोपि टङ्कणशब्दः बहुषु पुस्तकेषु—टङ्गण इत्युपेक्षितः। क्वचित्संशोधितः।

'सिंहोयं ज्वरदन्तिदर्पदलनः पञ्चाननाख्यो रसः' पृ०८२ इत्यादौ, रूपकालङ्कारोपि' विचारपथमवतरति।

'एवंपुटपाकेक्षणादूर्द्धम्'—इत्यादीनां कोऽक्षरार्थः, कश्चभावार्थः, कया योजनया सोर्थोलभ्यते, कथञ्च हिन्दीटीकायां त्यक्तस्तदर्थः।

एवं बहुषु स्थलेषु वाक्यार्था संशोधनीयाः।

नित्योदितरसस्तु—श्रीगोपालेन कासाधिकारान्ते व्याख्यातः, बहुषु पुस्तकेषु-यक्ष्माधिकारे लिखित—इति हेतोरुभयत्र विन्यस्तः, उभयोपयुक्तत्वात्।

उपदंशाधिकारे तु—श्रीगोपालकृष्णेन—योगवाहिरसाः इत्यादिक एक एव श्लको व्याख्यातः, अन्ये तु—केनचित् कविराजेन संग्रहीता-अपेक्षितत्वात्।

बहुपुस्थलेषु-समाहिताः पूर्वोक्ताः शादिकाः, छान्दीया वा दोषाः।

बहुषु स्थलेषु समाधेयाः सन्ति यदि प्राणाऽभिसराणामनुमतिर्भ-वेत्सर्वोपि ग्रन्थः शुद्धतमः स्यादचिरादेवेति निवेदनम् = तारादत्तपन्तस्य भिषजांरक्षणीयस्य।

---

सूचना—विचारणीयमचिराद्वैद्यसम्मेलनेनेदंनिवेदनमिति-**प्रकाशकः**।